हनूमानचलप्रख्यो नवतिं योजनोच्छ्रितः ।
चकार सुरसा वक्त्रं शतयोजनमायतम् ॥ १४९
तद्दृष्ट्वा व्यादितं त्वास्यं वायुपुत्रः स बुद्धिमान् ।
दीर्घजिह्वं सुरसया सुघोरं नरकोपमम् ॥ १५०

स संक्षिप्यात्मनः कायं जीमूत इव मारुतिः ।
तस्मिन्मुहूर्ते हनुमान्बभूवाङ्गुष्ठमात्रकः ॥ १५१
सोऽभिपत्याशु तद्वक्त्रं निष्पत्य च महाजवः ।
अन्तरिक्षे स्थितः श्रीमानिदं वचनमब्रवीत् ॥ १५२

G 5 6 26
B 5 1 157
L 4 62 31

149 For sequence in Ñ2 B D6, cf v l 70 For subst in Ñ2 B D6, cf v l 145 and 150 Ś1 Ñ1 D3 7 8 om 149, D10 om $149^{ab}$ (cf v l 146 and 148 respy ) —$^{a}$) D1 2 11 बभूव स( D1 स बभूव ) गिरिप्रख्यो, D6 Ck हनुमाननलप्रख्यो —$^{b}$) D1 2 6 T नवतिर्, D11 G2 3 M2 3 Cv r g नवती-, Ck as in text (for नवतिं) —$^{c}$) D1 10 स( D10 सु )रसा (for सुरसा) —$^{d}$) D2 शत (for शत-)

150 For sequence in Ñ2 B D6, cf v l 70 —$^{a}$) Ś1 D2 7–11 T1 G2 M1 2 त, Cr m g k t as in text (for तद्) Ś1 व्यादित दृष्ट्वा (sic), D1–3 11 व्यायत वक्त्र, D10 T1 3 व्यादित वक्त्र, Cr m g k t as in text (for व्यादित त्वास्य) Ñ1 तद्दृष्ट्वा व्या तमा . (illeg ) ꣸ Cr व्यादितम् । ह्रदागमस्त्वार्ष । अतिविवृत त्वास्यम् ।, Ck व्यादितमिति । व्यात्तमिति यावत । सुरसया व्यादितमुच्यमानविशेषणमास्य दृष्ट्वेत्यन्वय ।, Ct व्यादित व्यात्तम् । दीर्घजिह्वत्वादिगुणविशिष्ट व्यात्त तत्तस्या आस्य दृष्ट्वेत्यन्वय ꣸ —D11 om (hapl ) $150^{b}$–$152^{a}$ —$^{b}$) Ñ1 illeg for वायुपुत्र Ñ1 [ऽ]ति, D3 6 T2 M Cg सु-, T1 तु (for स) Ś1 D2 10 T3 शतयोजनमायत —For 145–$150^{ab}$, Ñ2 B1–3(l 1 only ) 4 D6 subst

69* त दृष्ट्वा सुमहद्रूप राक्षसी घोरदर्शना ।
चकार सुरसा वक्त्र दशयोजनमायतम् ।
ता दृष्ट्वा दशविस्तारा सोऽभूद्विंशतियोजन ।
दृष्ट्वा विंशतिविस्तार सा त्रिशद्योजनाभवत् ।
त्रिशद्योजनिका दृष्ट्वा चत्वारिंशद्गतो ह्यसौ ।
चत्वारिंशद्गत दृष्ट्वा सा तु पञ्चाशत गता ।
स ता पञ्चाशत दृष्ट्वा षष्टियोजनिकोऽभवत् ।
षष्टियोजनिका दृष्ट्वा सोऽभूत्सप्ततियोजन ।
सप्तति तु च त दृष्ट्वा अशीत्येव स्थिता हि सा ।
अशीतिका तु ता दृष्ट्वा सोऽभून्नवतियोजन ।
नवति योजन दृष्ट्वा सोऽभवच्छतयोजन ।
शतयोजनविस्तार त दृष्ट्वा राक्षसी तत ।
चकार सुरसा वक्त्र शतयोजनमायतम् ।
अल रोदेन भवत प्रविशस्वोदर मम ।

[B4 transp l 1–2 and l 3–4 —(l 1) B3 नद (for न) D6 मा (for सु-) B1 2 (before corr ) 3 त्रिशद्योजनायत (for the post half) B2 reads from राक्षसी up to l 7 in marg —(l 2) Ñ2 B4 (due to l transp ) D6 om from the post half up to दृष्ट्वा in l 5 B1 om (hapl ) from the post half up to the prior half of l 13 —(l 3) B4 न दृष्ट्वा दशविस्तार साभूद्विंशतियोजना —(l 4) B4 दृष्ट्वा विंशतिविस्तारा स त्रिशद्योजनायत —(l 5) Ñ2 B4 D6 च योजन (for ततो ह्यसौ) —(l 6) Ñ2 B4 D6 च ता (for गत) Ñ2 B4 D6 सोभूत्पञ्चाशयोजन (B4 °दायन , D6 °योजन ) (for the post half) —(l 7) l 7 (sic) Ñ2 B4 D6 न तु, B2 गता (for स ता) Ñ2 B4 D6 सा षष्टियोजनान्यभूत् (for the post half) —After l 8, Ñ2 ins a line mostly illeg —(l 9) D6 चैव तद् (for तु च त) Ñ2 ततस्तु सुरसा नाना (for the prior half) Ñ2 माशीति (for अ°) —(l 10) D6 हि (for तु) —For l 11–12, Ñ2 B4 D6 subst

69(A)* नवतिं योजन दृष्ट्वा विस्तार राक्षसी तत ।

—(l 13) Ñ2 illeg for चकार —Ñ2 B1 D6 om l 14 B2 reads l 14 in marg ]

—D5 M2 om $150^{cd}$ —$^{c}$) Ś1 Ñ2 B1 2(also *sup lin* ) 3 4 D2 6 10 T3 दीप्त- (for दीर्घ-) D1 10 स( D10 सु )रसया (for सुरसया) —$^{d}$) Ś1 D2 10 तद्घोर, D7–9 सुभीम (for सुघोर) D1 3 चातक- (for नरक-) Ñ1 सुघोरनिरयोपम, Ñ2 B D6 त्रिलोक्य निरयोपम

151 For sequence in Ñ2 B D6, cf v l 70 D11 om 151 (cf v l 150) —$^{a}$) B4 om स (subm ) Ś1 समुत्क्षिप्य, D2 समाक्षिप्य, D5 स सक्षिप्त-, T1 G1 2 सक्षिप्य च, T2 M3 सु° (for स सक्षिप्य) Ñ1 तत सक्षिप्य कायं स —D8 T1 G3 M om $151^{bc}$ —$^{b}$) Ñ1 D1 3 जीमूतमिव मारुत (Ñ1 वानर ) —$^{c}$) D2 भगवान (for हनुमान) G1 तन्मुहूर्ते तु सुमहान —$^{d}$) M3 -मात्रत (for °क ) ꣸ Cg प्रकृत विलिख्यते । तद्दृष्ट्वा व्यादित त्वास्य वायुपुत्र सुबुद्धिमान । सुसक्षिप्यात्मन काय बभूवाङ्गुष्ठमात्रक इति ꣸

152 For sequence in Ñ2 B D6, cf v l 70 D11 om $152^{a}$ (cf v l 150) Ñ2 illeg up to च in $^{b}$ Ñ1 illeg up to निष्पत्य in $^{b}$ —$^{a}$) D5 G [ऽ]भिपत्याशु, D7–9 °धाय, T3 °त्याय (for °त्याशु) B1 3 महद्वक्त्र, B2 4 D6 महावक्त्रे (for [आ]शु तद्वक्त्र) —$^{b}$) Ś1 D10 निष्क्रम्यास्यान् , B1 निष्पीड्य च, B2 निष्पा(*sup lin* °त्र् )य च, B3 D3 11 निपत्य च, M1 सनिपत्य (for निष्पत्य च) D7–9 T1 G2 महाजव (for °जव ) —$^{c}$) B3 D2 3 11 अन्तरीक्ष (for °रिक्षे ) T3 धीमान (for श्री°) —$^{d}$) Ñ1 D1–3 10 11 T1 2 M2 प्रहसन्निदम् , Ck t as in text (for इद वचनम्)

सिंहकुञ्जरशार्दूलपतगोरगवाहनैः ।
विमानैः संपतद्भिश्च विमलैः समलंकृते ॥ १५९

वज्राशनिसमाघातैः पावकैरुपशोभिते ।
कृतपुण्यैर्महाभागैः स्वर्गजिद्भिरलंकृते ॥ १६०

वहता हव्यमत्यन्तं सेविते चित्रभानुना ।
ग्रहनक्षत्रचन्द्रार्कतारागणविभूषिते ॥ १६१

महर्षिगणगन्धर्वनागयक्षसमाकुले ।
विविक्ते विमले विश्वे विश्वावसुनिषेविते ॥ १६२

देवराजगजाक्रान्ते चन्द्रसूर्यपथे शिवे ।
विताने जीवलोकस्य वितते ब्रह्मनिर्मिते ॥ १६३

बहुशः सेविते वीरैर्विद्याधरगणैर्वरैः ।
कपिना कृष्यमाणानि महाभ्राणि चकाशिरे ॥ १६४     G 5 7 63 / B 5 1 171 / L 4 62 48

---

159 T3 om 159, T1 missing (for both, cf v l 158) —$^{ab}$) B4 सिंहशार्दूलतुरग- (for $^{a}$) Ñ2 B1-3 D3 -तुरग, B4 -कुञ्जर, D1 -तुरग, G2 पतग-, Ck t as in text (for पतग) D6 -वानरै (for -वाहनै) Ś1 D2 10 11 सिंहशार्दूलगरुडैस्तुरगोरगवारणै (Ś1 °नैरै) —$^{c}$) D6 वितानै (for विमानै) D1 8 स्पतद्भिश्च विविधैर् (D8 °मलैर्) —$^{d}$) Ś1 Ñ B D2 3 6 10 11 विविधै, D1 8 विमानै (for विमलै) Ś1 Ñ1 B2 D1 3 10 समलकृत (B2 °तै) —After 159, D2 11 ins

74* वज्राशनिसमापाते शक्रचापविभूषिते ।

160 T3 om 160, T1 missing (for both, cf v l 158) B3 om 160$^{ab}$ Ñ2 B1 2 4 D6 read 160$^{ab}$ after 78* —$^{a}$) Ś1 Ñ1 B4 D1 3 10 निपातैश्च, Ñ2 B1 2 D2 11 -निपाताश्च (B2 D2 11 °च), D6 -निपातश्च, T2 समाधृतै, G3 -समापातै (for -समाघातै) —$^{b}$) B4 पादपैर् (for पावकैर्). Ś1 Ñ1 D1 3 10 उपशोभित, D5 उपसेविते, D7 9 इव शोभिते (for उपशोभिते) B1 शायकैरुपसेविते —After 160$^{ab}$, D2 11 ins

75* आयाते देवसवाना देवराज इव व्रजन् ।

[Cf l 3 of 42*]

—$^{c}$) B3 महा- (for कृत) —$^{d}$) Ñ2 B3 4 D6 स्वर्गवद्भिर् (for °जिद्भिर्) D1 3 G3 अलकृत, D7-9 अधिष्ठि(D8 °ष्ठि)ते (for अलकृते) Ś1 Ñ1 D10 समाच्छे(Ñ1 * [illeg])द्भिरलकृत, B1 2 D11 स्वर्गगद्भिरलकृते ❀ Cv g वज्राशनिसमाघातै पावकैर्वज्राशनिसमाघातहेतुभिर्जातै पावकै ।, Cr m वज्राशनिसमाघातैर्वज्राशन्यो समस्तुल्य आघातोऽभिघातो येषा तै पावकै ।, Ck t वज्राशनिसमस्पर्शैस्तत्प्राणहरै पावकै पञ्चाग्निभि (Ct °भिरिव स्वर्गजिद्भिरधिष्ठिते । 'समाघातै' इति पाठे ताभ्या तुल्य आघातोऽभिघातो येषा तैरित्यर्थ) ❀

161 T1 om 161, T1 missing (for both, cf v l 158) —$^{a}$) Ś1 B3 4 D10 G2 M1 3 हव्य(Ś1 °वि)मत्यर्थं, D2 11 हुतमत्यत, D3 हव्यमत्यत, D6 हव्यमात्यत (for हव्यमत्यन्त) —$^{b}$) Ś1 Ñ1 B1 D1 3 10 सेवित (for °ते) ❀ Ck t पञ्चाग्निभिर्तोऽयमग्नि(Ck °य पावक)श्चित्रभानु ❀ —After 161$^{ab}$, Ñ2 B D6 ins l 5 of 42* —$^{c}$) Ś1 Ñ2 B1 2 4 D1 3 6 10 ग्रहचन्द्रार्कनक्षत्र- —$^{d}$) Ś1 Ñ1 D1-3 10 11 विराजित (D2 11 °ते), Ñ2 B D6 निषेविते (for -विभूषिते) —After 161, T2 ins the line of 159$^{ab}$ (var -सेविते for -वाहने)

162 $^{a}$) Ñ2 B D6 -देव- (for -गण) —$^{b}$) Ś1 D10 -पक्षि- (for -यक्ष-) Ś1 Ñ1 D1 3 10 समाकुल (for °ले) Ñ2 B2 3 D6 -यक्षराक्षससेविते, B1 4 -पक्षि(B4 यक्ष)राजनिषेविते —After 162$^{ab}$, Ñ2 B D6 ins l 3 of 42* Ñ2 B D6 om 162$^{c}$ – 164$^{b}$ —$^{c}$) D2 11 श्वेते (for विश्वे) Ś1 Ñ1 D1 3 10 विविक्त विमल दिव्य(Ñ1 D1 3 विश्व) —$^{d}$) Ś1 Ñ1 D1 3 10 -निषेवित (for °ते) ❀ Cv g विश्वे विश्वगते (Cg व्यापक इत्यर्थ)।, Cr विश्वो विश्वतीति विश्वो व्यापक इत्यर्थ ।, Cm t विश्वे विश्वव्यापके(Ct °श्वाश्रये)। विश्वावसुर्गन्धर्वराज ।, Ck विश्वे विश्वाश्रय इत्यर्थ ❀ —After 162, D10 ins

76* सेवित वारिधाराभिर्भुजगैश्च निषेवितम् ।

163 Ñ2 B D6 om 163 (cf v l 162) —$^{a}$) Ś1 Ñ1 D1 3 10 -गजाक्रात, D2 11 -गजोन्मत्ते, G2 (after corr *int lin* as in text) -पदाक्राते (for -गजाक्रान्ते) ❀ Cv g देवराजगजाक्रान्ते (Cg ऐरावतभिन्नदिग्गजाक्रान्ते)।, Ck t देवराजाना गजा पुण्डरीकादय ❀ —$^{b}$) D1 3 पथ शुभ, T2 G1 -पदे शिवे (for पथे शिवे) Ś1 चन्द्रसूर्योपरिस्थित, Ñ1 सूर्यचन्द्र * * शुभ(illeg), D2 11 सूर्यचन्द्रोपशोभि(D11 °सेवि)ते, D10 सूर्याचन्द्रोपरिस्थित —T2 om 163$^{cd}$ —$^{c}$) Ś1 D1-3 10 11 वितत(D2 11 °ते), Ñ1 वितत (for विताने) —$^{d}$) D2 11 विमाने, D7-9 विमले, M1 सेविते (for वितते) Ś1 Ñ1 D1 3 10 वितत(Ñ1 °मल, D1 3 °तान) ब्रह्मनिर्मित ❀ Cr वितान उल्लोचभूते। अस्त्री वितानमुल्लोच इत्यमर ।, Cg विताने वितानतुल्ये। वितत इति वितानविशेषणम्।, Ct वितानेऽवकाशावरणवस्त्रे 'चाडवा' इति प्रसिद्धे ❀

164 Ñ2 B D6 om 164$^{ab}$ (cf v l 162) —$^{a}$) Ś1 D1-3 10 11 बहुभि (for °श) Ś1 Ñ1 D1 3 10 सेवित (for सेविते) —Ñ1 illeg from वीरैर् up to वर in $^{b}$ —$^{b}$) D2 11 नर, D5 नृने, D9 वृत्त (for वर) D1 3 भ्रविद्याधरवरै, T2 विद्याधरगणैर्वरै ❀ Cr r विद्याधरगणावरस्त्यन परम्. 'जगाम' वायुमार्गे च(Cr °गे) वानर मारुतिरि(Cr वानर इ)ति पाठक्रम । उपरि तु प्रमादात्लिखित (Cr °तम्) ❀ —After 164$^{ab}$, D5 7-9 S ins, Ś1 D1 3 10 11 ins l 2-3 only after 164$^{ab}$

G 5 7 65 / B 5 1 171 / L 4 62. 49

प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः ।
प्रावृषीन्दुरिवाभाति निष्पतन्प्रविशंस्तदा ॥ १६५
प्लवमानं तु तं दृष्ट्वा सिंहिका नाम राक्षसी ।
मनसा चिन्तयामास प्रवृद्धा कामरूपिणी ॥ १६६
अद्य दीर्घस्य कालस्य भविष्याम्यहमाशिता ।
इदं हि मे महत्सत्त्वं चिरस्य वशमागतम् ॥ १६७

इति संचिन्त्य मनसा छायामस्य समाक्षिपत् ।
छायायां संगृहीतायां चिन्तयामास वानरः ॥ १६८
समाक्षिप्तोऽस्मि सहसा पङ्गूकृतपराक्रमः ।
प्रतिलोमेन वातेन महानौरिव सागरे ॥ १६९
तिर्यगूर्ध्वमधश्चैव वीक्षमाणस्ततः कपिः ।
ददर्श स महासत्त्वमुत्थितं लवणाम्भसि ॥ १७०

---

77* जगाम वायुमार्गे च गरुत्मानिव मारुतिः ।
हनुमान्मेघजालानि प्राकर्षन्मारुतो यथा ।
कालागरुसवर्णानि रक्तपीतसितानि च ।

[ M2 repeats l 1 after 164 as in M1 —(l 1) D8 G2 3 M1 मार्गेण, G1 -नेगेन, M3 -मार्ग तु (for -मार्गे च) G1 वानर (for मारुति) —M3 om from l 2 up to 165 —(l 2) = l 4 of 42* D3 8 T3 M1 2 प्रकर्षन् (for प्राकर्षन्) —(l 3) D2 5 8 11 कालागुरु. T2 -सुवर्णानि (for -स°) Ś1 D10 गुरूणि सर्ववर्णानि (for the prior half) T3 G1 पीतरक्त- (by transp) (for रक्तपीत) Ś1 D2 8.10 -[अ]सितानि (for -सितानि) D5 रक्ते पात्रश्रितानि च (sic) (for the post half) ]

—Ñ1 D1 om. 164$^{c}$–165 —$^{c}$) B3 कर्षमाणानि (for कृष्य°) —After 164, Ñ2 B D6 ins

78* वज्राशनीना सपाते वज्राशनिविभूषिते ।

[ Cf 74* B3 वज्राशनिरिवापर (for the post half) ]

—Thereafter Ñ2 B1 2 4 D6 read 160$^{ab}$

165 Ñ1 D1 M3 om 165 (cf v l 164) —$^{b}$) B1 निमेष, B3 निष्प्रभश्च (for निष्पतंश्च) B4 समतत (for पुन पुन) —$^{ca}$) M1 प्रावृडि (for °षि) D5 7 9 T3 M1 तथा (for तदा) Ś1 Ñ2 B D2 3 6 10 11 प्रच्छन्नश्च प्रकाशश्च चन्द्रमा इव लक्ष्यते —After 165, Ñ1 D1 3 5 7–9 S ins

79* प्रदृश्यमान सर्वत्र हनूमान्मारुतात्मज ।
भेजेऽम्बर निरालम्ब लम्बपक्ष इवाद्रिराट् ।

[ T3 om, T1 reads *inf lin* l 1 —(l 1) D1 3 प्रशस्यमान, D5 G1 प्रविश्यमान (for प्रदृश्यमान) ꕥ Cr प्रदृश्यमान सवत्रेति पाठ ꕥ —(l 2) Ñ1 D7–9 पक्षयुक्त, D3 पक्षिराज, G1 अवरस्थ, G2 लम्बपक्षैर् (for लम्बपक्ष) ]

—After 165, Ñ2 B D6 read st 122–129$^{b}$

166 $^{a}$) Ś1 Ñ1 D2 10 11 ततस्त तु, D1 3 तथा तत्र, G1 M1 हरि(M1 हि त) दृष्ट्वा (for तु त दृष्ट्वा) Ñ2 B D6 प्लवमाने ततस्तस्मिन —$^{b}$) D1 6 सिहका (for सिंहिका) Ś1 Ñ1 D1–3 10 11 प्रे(Ñ1 D1 3 वी)क्ष्य वानर (for नाम राक्षसी) —$^{c}$) B3 छायामासाद्य तु कपे

167 $^{a}$) B2 अपि, D3 अथ, T2 अस्य (for अद्य) Ś1 D2 10 11 सुदीर्घस्याथ(D2 11 °स्य तु) कालस्य, D6 अद्यास्य दीर्घकालस्य —$^{b}$) B3 4 D5 आश्रिता (sic), D11 आशिसि (sic) (for आशिता) ꕥ Cr भविष्याम्यहमाशिता । अह भुक्तवती भविष्यामि । आशित कर्तेति निपातनात्साधु ।, Cm आशिता भुक्तवती । Cg °ताशित्री ।, Ck आशिता भुक्तवती भविष्यामि । आशित कर्तेति निपातनादिष्ट् ।, Ct आशिता कृतभोजना ꕥ —$^{c}$) Ñ1 D5–9 मम, Ñ2 B खे सु, T2 च मे (for हि मे) Ś1 D2 10 11 महद्भूत, Ñ1 D7–9 T3 महामत्त्व (for महत्सत्त्व) —D10 om $^{d}$ —$^{d}$) B3 च समागत (for वश°).

168 Ñ1 illeg up to चिन्तया in $^{d}$ —$^{a}$) Ś1 D1–3 10 11 सा तस्य, G2 सहसा (for मनसा) —B3 om 168$^{b}$ (except छाया) —$^{b}$) D2 11 आशु (for अस्य) T2 समक्षिपत् (for समा°) Ś1 छायया समुपाक्षिपत्, Ñ2 D6 छाया वक्त्रेण धर्षिता, B1 छायामुत्क्रम( after marg corr °या घस्रमि)वाक्षिपत्, B2 (marg. also छायावक्त्रमिवा-निशत्) छाया वस्त्रमिवाक्षिपत्, B4 छायाया वस्त्रमाक्षिपत्, D1 3 छाया(D1 शरीर [hypm])व्यक्तमिवाक्षिपत्, D10 छायायामसुमाक्षिपत् ꕥ Cm समाक्षिपज्जग्राह ।, Cg समाक्षिपत्सम्यग्गृहीतवती ।, Ck छाया समाक्षिपदिति । छायाग्रहात्तद्वस्तुनिरोधशक्तिर्ब्रह्मदत्ता । तथा त न्यरुणदित्यर्थ ।, so also Ct ꕥ —$^{c}$) Ñ2 B D6 नि(Ñ2 तु)गृहीताया, D5 7–9 M3 गृह्यमाणाया (for संगृहीताया) —$^{d}$) G1 मारुति (for वानर)

169 $^{a}$) Ñ2 B D6 अहो क्षिप्तोस्मि (for समा°) —T1 damaged for $^{b}$ —$^{b}$) Ś1 Ñ B1 2 4 D1–3 6 10 11 निरुद्ध(B1 2 4 D6 °र्द्धृत) इव पर्वत, B3 केन वा दुष्टबुद्धिना, M1 पगूकृत इवाभव —T1 illeg for 169$^{c}$–170$^{b}$ —$^{c}$) D6 चानेन (for वातेन) —$^{d}$) Ś1 D1–3 10 11 महापोत इवार्णवे ꕥ Cg पङ्गूकृतपराक्रम. कुण्ठितगति ।, Ck पङ्गूकृत स्तब्धगति पराक्रमो यस्य स तथा । च्व्यन्तोऽयम् ।, Ct पङ्गूकृत स्तब्धगति पराक्रमो यस्य । महानौर्यथा पङ्गूकृतपराक्रमा स्तब्धगति प्रतिलोमेन वातेन क्रियते । गम्य-देशगतिनिरोध एवात्र स्तब्धगतित्वम् । यद्वा तेन यथा विपरीत-गतिवारणाय यत्रे स्तब्धगति कार्यते तथाह केनचित्स्तब्धगति कृत ꕥ

170 T1 illeg for 170$^{ab}$ (cf v l 169) —$^{a}$) Ś1 D1–3 10 11 अधश्चापि, Ñ2 B1–3 D6 अधस्ताच्च(B1 °त्तु) (for अधश्चैव) —$^{b}$) Ś1 B1 D1–3 5 10 T2 वीक्ष्यमाणस,

कपिराज्ञा यदाख्यातं सत्त्वमद्भुतदर्शनम् ।
छायाग्राहि महावीर्यं तदिदं नात्र संशयः ॥ १७१

स तां बुद्ध्वार्थतत्त्वेन सिंहिकां मतिमान्कपिः ।
व्यवर्धत महाकायः प्रावृषीव बलाहकः ॥ १७२

तस्य सा कायमुद्वीक्ष्य वर्धमानं महाकपेः ।
वक्त्रं प्रसारयामास पातालाम्बरसंनिभम् ॥ १७३

स ददर्श ततस्तस्या विकृतं सुमहन्मुखम् ।
कायमात्रं च मेधावी मर्माणि च महाकपिः ॥ १७४

स तस्या विवृते वक्त्रे वज्रसंहननः कपिः ।
संक्षिप्य मुहुरात्मानं निष्पपात महाबलः ॥ १७५

आस्ये तस्या निमज्जन्तं ददृशुः सिद्धचारणाः ।
ग्रस्यमानं यथा चन्द्रं पूर्णं पर्वणि राहुणा ॥ १७६

G 5 8 0
B 5 1 185
L 4 62 59

Ct as in text (for वीक्ष°) Ś1 D2 8 10 11 G1 M1 2 ततस्तत , Ñ2 B D6 स(B2 तु) मारुति , D7 9 तदा कपि , Ct as in text (for तत कपि ) —$^c$) Ñ B1–3 D6 स ददर्श (by transp ), B4 ददर्शाथ, D5 G2 ददर्श (D5 reads from र्श up to स्मसि in $^d$ in marg ) सु- (for ददर्श स ) Ñ B1–3 D6 10 M3 महत्सत्त्वम् (for महा°) D2 11 ददर्श सहसा सत्त्वम् ॐ Ck t महासत्त्व स्त्रीरूप प्राणिनम् ॐ —$^d$) Ś1 D10 मद्भुत (for उत्थित) Ñ B1 2 4 D6 -[अं]-भस (for °सि) D2 11 उद्यम(D11 °म्य)त यथाचल (D11 °बल), G3 चितयामास वानर —After 170, D5 7–9 T1 (damaged from 80* up to 172) 2 3 G M ins

80* तदृष्ट्वा चिन्तयामास मारुतिर्विकृताननाम् ।

[D8 T3 G2 ता, D9 T2 M1 2 त (for तद्) D5 विकृतानन , T2 G1 M1 2 (after corr sec m as above) 3 °न (for °नाम्) G3 (with hiatus) उत्थित लवर्णाभसि (=170$^d$) (for the post half) ]

171 T1 damaged for 171 (cf v l 80*) D1 2 11 om 171$^{ab}$ —$^a$) Ś1 Ñ1 D10 समाख्यात, D5 7–9 T2 3 यथाख्या(T2 °ज्ञा)त (for यदा°) Ñ2 B D6 कथित कपिराजेन, M3 कपिराजेन कथित ॐ Cr कपिराज्ञा कपिराजेन ॐ —$^b$) Ś1 D10 तत्सत्त्व सुमहोदधौ, Ñ1 तत्सत्त्व तदिद न + (illeg ), Ñ2 B D6 यत्सत्त्व मे महोदधौ, D3 सत्त्व तन्हि चाम्भसि —$^c$) D1 छायाया हि (for °ग्राहि) —$^d$) B4 तदेवेद न सशय , D1 3 भविष्यति न सशय

172 T1 damaged for 172 (cf v l 80*) Ñ1 illeg for $^a$ —$^a$) M1 मत्वा (for बुद्ध्वा) Ñ2 B1 2 4 D1 3 5 6 11 [अ]थ, D2 स्व- (for [अ]र्थ-) B3 बुद्ध्वा स ता महावीर —$^b$) Ś1 Ñ1 D1–3 10 11 कपिकुञ्जर , B3 इति वानर (for मतिमान्कपि ) —After 172$^{ab}$, B3 erroneously repeats 169$^a$ and brackets it —D6 om 172$^c$ – 173$^b$ D11 om 172$^{cd}$ —$^c$) Ś1 D10 प्रावर्धत (for व्यव°) —$^d$) Ñ B1–3 D1 3 पयोधर (for बलाहक॰)

173 D6 om 173$^{ab}$ (cf v l 172) —$^a$) Ś1 D10 [अ]थ (for सा) —$^b$) T2 वर्धमाना (for °मान) —Ñ1 illeg for 173$^c$ —$^c$) Ś1 D10 विवर्धयामास, Ñ2 B1–3 D1–3 6 11 व्य(B3 D11 वि)वृणुतात्यर्थं, B4 विवृतमत्यर्थं (for प्रसारयामास) —$^d$) T1 3 पातालातर , G1 2 पातालतल- (for पातालाम्बर-) Ś1 D1 3 10 -सस्थित (for -संनिभम्) Ñ1 D2 11 पाताल(D11 °ली)मिव सिहिका, Ñ2 B D6 पातालसदृश तदा(B4 °या) ॐ Cr पातालान्तरमनिभ पातालविवरसनिहितम् । पातालाम्बरसहितमिति पाठेऽप्ययमेवार्थ ॐ —After 173, B3 ins

81* मुख व्यावृतमत्यर्थं व्याचकार च राक्षसी ।,

while D5 7–9 S ins after 173

82* घनराजीव गर्जन्ती वानर समभिद्रवत् ।

174 D1 3 om 174 —$^a$) M1 चास्या (for तस्या) —$^b$) Ś1 Ñ1 D10 G1 M3 विवृत (for विकृत) D2 सुमहा- (for सुमहन्) Ñ2 B1 2 4 D6 सुमहद्विवृत मुख, B3 शरीरात वहिश्च यत् , G2 विवृतास्य महन्मुख —Ñ1 illeg from $^c$ up to च in $^d$ —$^c$) Ñ2 कायमत्र च, B2 कार्यभग(marg also °वत्ता) च, B3 काय तस्याश्च, B4 कार्यवित्ता च, D2 11 कार्यवाश्चैव, D6 कायमेतच, T2 कायमात्र स Ś1 D10 काययन्त्राणि सक्षिप्य, B1 कार्यवान्तुनि(m also कायवत्ता च) मेधावी (sic) —$^d$) D2 11 मर्मविच्च (for मर्माणि च) Ñ1 D2 11 महाबल (for °कपि) ॐ Cr कायमात्र कायकार्त्स्न्यम् । कृत्स्नकायमिति यावत् । 'मात्र कार्त्स्न्येऽवधारणे' इत्यमर ।, Cm g कायमात्र शरीर(Cg °त्र देह)प्रमाणम् । (Cm स्वशरीरकवलनपर्याप्तमित्यर्थ ।), Ck कायमात्र कायप्रमाणम् । मात्रशब्दोऽकारान्तो नपुसकलिङ्ग कार्त्स्न्यप्रमाणावधारणाल्पवाची । मर्माणि चेति भेददर्शनार्थं दर्शेत्यनुषङ्ग ।, Ct कायमात्र स्वशरीरकवलनपर्याप्त शरीरप्रमाणमित्यर्थ इति तीर्थ । मात्रशब्दोऽल्पवाचीति कतक ॐ

175 T2 om (hapl ) 175$^{ab}$ Ñ1 illeg for 175$^a$ —$^a$) D1 3 तस्या स (by transp ), D11 स तथा (for स तस्या) D5 7–9 T1 3 विकृते (for °वृते) Ś1 D10 सितदष्ट्रे मुखे तस्मिन्, Ñ2 B2–4 D6 तस्मिन्स(D6 °न्सु) विवृते वक्त्रे, B1 तस्मिन्परिवृते वक्त्रे —Ś1 D10 om 175$^{bc}$ —$^b$) B4 वज्रसारो महाकपि —D6 om 175$^c$ – 176 —$^c$) B3 D8 पुनर्, B4 बहुधा (for मुहुर्) —$^d$) Ñ D3 5 7 9 11 T2 G3 Ct निपपात, B प्रविवेश (for निष्पपात) Ñ1 B3 महामति , Ñ2 B1 2 4 D5 7–9 °कपि (for °बल ) Ś1 D10 स पपात महाजव ॐ Cr सक्षिप्य पुनरात्मान निपपात महाबल इति पाठ ॐ

176 Ñ2 B1–3 D6 om 176 (for D6, cf v l 175) —$^a$) D2 11 [अ]पि मज्जन्त (for निमज्जन्त) —$^b$) Ś1 B4 D10 ते जलाशया , Ñ1 illeg , D1 3 त नभश्चरा , D2 11 गगने-

यस्य त्वेतानि चत्वारि वानरेन्द्र यथा तव ।
धृतिर्दृष्टिर्मतिर्दाक्ष्यं स कर्मसु न सीदति ॥ १८०
स तैः संभावितः पूज्यः प्रतिपन्नप्रयोजनः ।
जगामाकाशमाविश्य पन्नगाशनवत्कपिः ॥ १८१
प्राप्तभूयिष्ठपारस्तु सर्वतः प्रतिलोकयन् ।
योजनानां शतस्यान्ते वनराजिं ददर्श सः ॥ १८२
ददर्श च पतन्नेव विविधद्रुमभूषितम् ।
द्वीपं शाखामृगश्रेष्ठो मलयोपवनानि च ॥ १८३
सागरं सागरानूपान्सागरानूपजान्द्रुमान् ।
सागरस्य च पत्नीनां मुखान्यपि विलोकयन् ॥ १८४

G 5 8 0
B 5 1 194
L 4 62 73

कृता क्षेमाश्च पन्थान सुखं गच्छन्ति खेचरा ।
अजेया निहता ह्येषा राक्षसी कामरूपिणी ।

[(l 1) B1 यथा (for अस्या) —B3 om l 2 —(l 3) B3 D6 गच्छतु (for गच्छन्ति)]

—c) Ñ2 D6 साधय त्वम् (for साधयार्थम्) —d) D1-3 11 आत्मन, T2 अदुष्ट (for अरिष्ट) Ñ2 B D6 व्रज (B3 गच्छ) वानर, D2 11 प्लवगेश्वर, T1 3 गच्छ मारुते (for प्लवता वर) ⊛ Cr अरिष्टं शुभम् । 'अरिष्टं तु शुभाशुभे' इत्यमरः ।, Cm g अरिष्टं शुभम् (Cg °भं यथा भवति तथा) ।, Ck अरिष्ट 'रिष हिंसायाम्' । निर्बाधं यथा तथा साधय ।, so also Ct ⊛ —After 179, Ś1 D10 ins, while D1 3 ins after 180

88* चतुर्थं कर्म तद्दृष्ट्वा दुष्करं कृतमोजसा ।
सेन्द्रा सुरगणाश्चैव देवतास्तमपूजयन् ।

[(l 1) D1 कर्म चानघा (for कृतमो°) —(l 2) D1 3 सर्षि- (for सुर-) D10 समपूजयन् (for तमपू°)]

180 Ś1 D10 read 180 after 84* B1 reads 180ab in marg —a) Ś1 D10 यस्य त्वेतानि, Ñ2 B D6 एतानि (B1 3 4 सत्वानि) यस्य, D1 तस्य चेतानि, D8 ततस्त्वेतानि, D11 यस्य त्वेतेन (sic), Ct as in text (for यस्य त्वेतानि) —cd) Ñ1 illeg from र्द up to क Ś1 D10 धृतिर्दृष्टिर्बलं दाक्ष्य, Ñ2 B1 2 4 D1-3 6 11 धृतिर्मतिर्बलं धाष्टर्यं (Ñ2 वाक्य, D1-3 6 11 दाक्ष्य) (for c) B1 सन्, D5 8 (before corr in marg) T2 3 G1 M3 स्व-, M2 न (for स) D8 (before corr in marg) -कर्मस्थ (for कर्मसु) M2 स (for न) B3 धृतिर्मतिर्गतिर्बुद्धिस्तस्य सर्वं प्रसीदति —After 180, Ś1 D10 ins l 3-4 of 86*, while D1 3 ins 88*

181 a) Ś1 Ñ B1 2 4 D1 3 6 10 सभाजितः, B3 D7-9 G1 2 Ck t स (B3 सु) पूजित, Cg as in text (for संभावित) Ś1 Ñ B D1 3 6 10 प्राज्ञ, T3 G1 3 पूज्यं (for पूज्य) D2 11 स ते सस्तुय (D11 °याच) मानो च —b) Ś1 D10 प्रपन्न शतयोजन, D2 11 खविपण्ण प्रयोजने, D5 प्रतिपन्न प्रयोजन, Cv m g k as in text, Ct प्रतिपन्नप्रयोजनं —c) Ś1 Ñ1 D1-3 10 11 जगाम पुनराकाश (Ñ1 illeg from काश up to प्राप्तभू in 182a) —d) Ñ2 B D6 त्वरमाणो महाकपि —After 181, Ñ2 B D6 ins

89* स सागरमनाधृष्य क्रमितुं वानरर्षभ ।

182 Ñ1 illeg for प्राप्तभू (cf v l 181) Ñ2 B D6 transp ab and cd —a) Ś1 D10 -पार स, Ñ2 B1 2 D1 3 6 -पारश्च, B3 -पार्श्वयो, M3 -पारस्तु (for -पारस्तु) —b) Ś1 Ñ1 D1 3 8 10 प्रति, Ñ2 B1 2 4 D6 स वि-, D7 9 परि- (for प्रति-) B3 दिशो दश विलोकयन् —After 182ab, Ñ2 B D6 ins

90* ददर्श नगरी लङ्का त्रिकूटशिखरे स्थिताम् ।
सपूर्णां राक्षसैर्घोरैरिन्द्रस्येवामरावतीम् ।

[(l 1) B1 महती (for नगरी)]

—d) Ś1 B2 D1 9 11 T1 2 वनराजी, D2 10 G2 M1 °राजीर् (for वनराजि) Ñ B D5 6 G2 ह (for स) —After 182, Ś1 D10 ins

91* सालान्प्रियकतालाश्च चम्पकान्सहरिद्रकान् ।
चूताशोकाशोकपुष्पान्पनसाश्च करकिंशुकान् ।
तिन्दुकाञ्जम्बुकाजम्बून्पनसान्पाटलान् ।
कदम्बान्सप्तपर्णांश्च खर्जूरान्कुकुभान्वटान् ।
बन्धूकान्तिलकान्फुल्लानशोकानर्जुनानपि ।     [5]

[(l 3) Ś1 (sup lin also) D10 चन्दनान् (for जम्बुकान्)]

183 Ñ2 B D6 om 183-184 —a) Ñ1 illeg for ददर्श T1 G3 स (for च) D1 3 प्लवन् (for पतन्) Ś1 D10 स ददर्शापरत्रैव, D2 11 स ददर्श सरनेन (sic) —b) Ñ1 D1-3 10 11 -शोभित (for -भूषितम्) Ś1 विविधद्रुमशोभितं —c) Ñ1 D2 11 द्वीपशाखामृगश्रेष्ठ —d) Ś1 D3 10 त्रिकूट- (for मलय-) Ñ1 D2 11 -[उ]पवन महत् (for -[उ]पवनानि च) ⊛ Cv मलयोपवनानि । लङ्कामलय इति दक्षिण तीरेऽप्यस्ति मलयस्तस्योपवनानि ।, Cm मलयो लङ्काया मलयो नाम गिरि ।, Cg मलयोपवनानि लङ्कामलय इति दक्षिणतीरे स्थितमलयस्तस्योपवनानि ।, Ck t मलयोपवनानि । (Ct अनेन) उत्तरतीर इव दक्षिणतीरेऽपि मलयाख्य पर्वतोऽस्ति (Ct °स्तीति गम्यते) ⊛

184 Ñ2 B D6 om 184 (cf v l 183) —a) Ś1 D10 सागरानूपे, T1 3 G M1 3 सागरानूप (for °नूपान्) —b) D1 3 सागरोपवनानि च —c) D9 om च (subm) —Ñ1 illeg for 184d —d) Ś1 D1 2 10 11 M1 [अ]पि, D3 om, D5 [अ]ति (for [अ]पि) Ś1 D1-9 G विलोकयत, D2 11 [अ]विलोकयन् (for विलोकयन्) ⊛ Ct विलोकयन्व्यलोकयत ⊛ —After 184, Ś1 D10 ins

G 5. 8 23
B 5. 1 195
L 4 62. 75

स महामेघसंकाशं समीक्ष्यात्मानमात्मवान् ।
निरुन्धन्तमिवाकाशं चकार मतिमान्मतिम् ॥ १८५
कायवृद्धिं प्रवेगं च मम दृष्ट्वैव राक्षसाः ।
मयि कौतूहलं कुर्युरिति मेने महाकपिः ॥ १८६
ततः शरीरं संक्षिप्य तन्महीधरसंनिभम् ।
पुनः प्रकृतिमापेदे वीतमोह इवात्मवान् ॥ १८७
स चारुनानाविधरूपधारी
परं समासाद्य समुद्रतीरम् ।
परैरशक्यप्रतिपन्नरूपः
समीक्षितात्मा समवेक्षितार्थः ॥ १८८
ततः स लम्बस्य गिरेः समृद्धे
विचित्रकूटे निपपात कूटे ।
सकेतकोद्दालकनालिकेरे
महाद्रिकूटप्रतिमो महात्मा ॥ १८९

---

92* समुद्रतीरेषु तथा सूक्ष्मकाञ्चनवालुका ।
दृष्टिरम्याणि पश्यन्स चिन्तयामास वानर ।

185 [a]) B7 तदा, D1 महान् (for महा) D6 -तेज- (for -मेघ-) B2 D1 3 -सकाश —[b]) B2 निरीक्ष्य (for समीक्ष्य) Ś1 Ñ2 B D1 3 6 10 T1 3 G1 आत्मना, Ct as in text (for °वान्) —[c]) Ś1 B3 D6 10 M2 निरुध्यतम्, Ñ2 विरुधतम्, B2 T2 निरुद्धतम्, D1-3 11 निरुधानम् (for निरुन्धन्तम्) G2 महा (for इव) —[d]) Ñ2 B D6 प्रदध्यावा( Ñ2 °ध्यौ चा )त्मनात्कपि

186 D6 om (hapl ?) 186 —[a]) D10 कार्य-, D11 लका- (for काय-) B4 -व्यग (for -वृद्धि) Ś1 Ñ B D1-3 5 8 10 11 प्र( B2 वि )वेश (for प्रवेग) —[b]) D2 11 दृष्ट्वव मम (by transp) —B3 om 186[cd] —[c]) Ś1 D10 अति, B2 मम, B4 अपि (for मयि). —[d]) Ś1 D10 स वानर, Ñ1 निश्चय, D7 9 महामति (for महाकपि) Ñ2 B1 2 4 D1-3 11 इति मे निश्चिता मति

187 [ab]) Ś1 D10 स (for तन्) D1 3 संक्षिप्य तु शरीर हि( D3 स्व ) महीधरसमोपम —[d]) D1 3 [आ]त्मनि (for °वान्) —For 187, Ñ B D2 6 11 subst., while Ś1 D1 3 10 ins after 187

93* तत शरीरमत्यर्थं सक्षिप्याथ सुसवृत ।
कपि प्रकृतिमापेदे विष्णुर्विक्रान्तवानिव ।

[(l 1) Ñ2 अत्यत (for अत्यर्थ) Ś1 D10 सक्षिप्य च सुसवृत, B2 स सक्षिप्याथ सवृत, D1 2 11 सहृत्य च( D1 स ) सुसवृत ( D1 °हत ) (for the post half) —(l 2) D10 हरि (for कपि) Ś1 D10 हरिर्, D6 विभुर् (for विष्णुर्) D2 11 विष्णुस्त्रीनिव( D11 °णि च ) विक्रमान् (for the post half) ]
—After 187, D6 7-9 S ins.

94* तद्रूपमतिसक्षिप्य हनूमान्प्रकृतौ स्थित ।
त्रीन्क्रमानिव विक्रम्य बलिवीर्यहरो हरि. ।

[(l 1) D6 8 T2 G2 M1 2 अपि, Ck t as above (for अति-) M1 सवीक्ष्य (for -सक्षिप्य) —(l 2) T2 इति, Ck.t as above (for इव) D6 T3 Ck t बलेर् (for बलि-) ]

188 Ñ2 B D6 om 188 —[a]) G1 चापि, Cr g.t as in text (for चारु-) —[b]) Ś1 D10 पारं (for पर) —After 188[ab], D8 9 read erroneously l 2-4 of 96* —[c]) Ñ1 D1 7 9 T1 3 G1 M2 Ck t अशक्य (for अशक्य-) M1 -रूप (for -रूप) —[d]) G1 समीक्ष्यतार्थो (for समीक्षितात्मा) Ś1 समवीक्षितार्थ, Ñ1 समवे कृतार्थ ❀, Cv पूर्वोक्तोपसहारश्लोक एष ।, Cr पूर्वोक्तार्थसग्रहश्लोको ऽयम् ❀

189 Ñ2 B D6 transp 189 and 190 —[a]) D10 यत (for तत) Ś1 Ñ2 B D1 3 6 10 सुवेलस्य, D2 प्रलम्बस्य, T2 (with hiatus) सुखे अस्य, M1 समालम्ब्य (for स लम्बस्य) Ś1 D10 प्रवीर, Ñ B D1-3 6 प्रवृद्धे( B4 °द्धो ), (for समृद्धे) D11 तत प्रलम्बायिमिरे प्रवृद्धे (corrupt) ❀ Cr m k t लम्बस्य लम्बाख्यस्य (Cm °ख्यस्य गिरे, Ck °ख्यगिरे ) ।, Cg लम्बस्य लम्बमानस्येव स्थितस्य । अविज्ञाताग्रस्येत्यर्थ . ❀ —[b]) B2 विविक्तकूटे (for विचित्र°) Ñ2 B D6 शृङ्गे (for कूटे) Ś1 D10 प्रवृद्धकूटस्य पपात कूटे —[c]) Ś1 D10 सकेतकीचपक- (Ś1 °चम्पक-) (for सकेतकोद्दालक-) Ś1 Ñ B D5 7-10 T1 -नारि( Ñ1 °लि )केले (Ś1 D10 °रे, B2 T2 °लैर्), D6 -नालिकेरके (for -नालिकेरे) ❀ Cv उद्दालका वृक्षविशेषा ।, Cg उद्दालका श्लेष्मातका ।, so also Ck t ❀ —[d]) Ś1 Ñ B1 2 4 D1 3 6-10 T2 G3 M1 2 महाभ्रकूट, D2 11 महानकूट- (sic) (for महाद्रिकूट-) Ñ1 B1-3 D1.2 6 11 -प्रतिमे (for -प्रतिमो) Ñ1 D2 11 कपीश (for महात्मा) —After 189, Ś1 D10 ins

95* तत शरीर वडवामुखाभ
सक्षिप्य वीरो गिरिसनिकाशम् ।,

—Ś1 D10 cont, while Ñ1 (partly illeg.) D2.5 7-9 11 S ins. after 189

96* ततस्तु सप्राप्य समुद्रतीर
समीक्ष्य लङ्का गिरिवर्यमूर्ध्नि ।
कपिस्तु तस्मिन्निपपात पर्वते
विधूय रूप व्यथयन्मृगद्विजान् ।

[Ś1 D10 transp l 1-2 and l 3-4 —(l 1) Ñ1 D2 11 ततस्तु पार सरितां पतेर्गत —(l 2) Ś1 Ñ1 D10 गिरिम-

स सागरं दानवपन्नगायुतं
बलेन विक्रम्य महोर्मिमालिनम् ।
निपत्य तीरे च महोदधेस्तदा
ददर्श लङ्कामम्रावतीमिव ॥ १९०

G 5 8 0
B 5 1 202
L 4 62 83

इति श्रीरामायणे सुन्दरकाण्डे प्रथमः सर्गः ॥ १ ॥

बुदाभ, D2 11 गिरिमबुन्नेपम, Ch t as above ( for गिरिवर्यमूर्ध्नि ) —After l 2 ( transp ), Ś1 ins , D10 ins after l 4 ( transp )

96(A)* कपिस्तु तस्मिन्विचचार शैले
रामस्य पादौ मनसा प्रणम्य ।

—(l 3) D2 11 स (for तु) —(l 4) D11 विषयान्, T1 विधमन् ( for व्यधयन् ) D5 नृगान् ( for मृग- ) M1 2 -द्विपान् ( for -द्विजान् ) ॐ Cv ततस्तु सप्राप्येत्याधुक्तार्थोपन्यास ।, Cg वृत्तमुपजाति , Ch उपसंहारेण वाद कपिरित्वित्यादि ॐ ]

190 Ñ2 B D6 transp 189 and 190 —[a]) D5 पन्नगदानव- ( by transp ) Ñ2 B D1 3 6 -[आ]लय ( for -[आ]युत ) —[c]) Ś1 D10 पार स, Ñ1 पारे स, Ñ2 B1 2 4 D1-3 6 11 पारे च, B3 वेगेन ( for तीरे च ) D5 तथा ( for तदा ) —[d]) Ś1 D10 यथा ( for इव ) B3 ददर्श लङ्काममला-तराशय ॐ Cg अस्मिन्सर्गे सार्धैकाधिकद्विशतश्लोका ॐ

Colophon Before colophon, G3 records st no 2134 —*Kānda name* Ś1 Ñ1 D1 2 4 10 11 किष्किंधाकाडे. —After *Kānda name*, D4 ins उद्योगपर्वणि दिग्विजये —*Sarga name* Ś1 B1 2 4 D6 10 सागरलंघन( B4 °प्लवन ), Ñ B3 D2 11 समुद्रलंघन , D1 नगरप्रवण , D3 हनुमत्सागरप्लवन , D4 हनुमत्पर्वतारोहण, D8 हनूमदुदधितरण —*Sarga no* ( figures, words or both ) Ś1 Ñ1 B1 3 D2 4 10 11 om , Ñ2 B2 4 D6 8, D1 12, D3 3 —After colophon, Ś1 ins

समाप्तश्चाय किष्किन्धाकाण्ड । शुभमस्तु । अत पर सुन्दरकाण्डो भविष्यति ।

—Ñ1 ins

सवत् १०७६ आषाढ वदि ४ महाराजाधिराजपुण्यावलोकसोमवशोद्भवगरुडध्वजश्रीमद्गाङ्गेयदेवभुज्यमानतीरभुक्तौ कल्याणविजयराज्ये नेपालदेशीयभाण्डशालिकश्रीआनन्दस्य कृते पाटकावस्थितपण्डितकायस्थश्रीश्रीकुरस्यात्मजश्रीगोपतिनालेखीदम् ॥

—D1 ins

सवत १८७९ वर्षे कार्तिक वदि ५ दिने अद्येह निरमग्राममध्ये लेखकनागरज्ञातीय त्रवाडी गगाराम उपास्मिक भवानीदास श्री
—D2 ins ( marg )

समाप्त किष्किंधाकाण्ड ।

—D10 ins

समाप्तोय किष्किन्धाकाण्ड ।
श्लोकाना द्वे सहस्रे च अष्टौ श्लोकशतानि च ।
श्लोकाना च शतं ज्ञेय पचविंशतिरेव च ।
श्रीरामाय नम ।

—D11 ins .

समाप्तमिति । इति किष्किन्धाकाण्ड समाप्तिमगमत् ।

—After colophon, G M2 conclude with श्रीरामाय नम

# २

G 5.9.1 B 5.2.1 L 5.1.1 स सागरमनाधृष्यमतिक्रम्य महाबलः ।
त्रिकूटशिखरे लङ्कां स्थितां स्वस्थो ददर्श ह ॥ १
ततः पादपमुक्तेन पुष्पवर्षेण वीर्यवान् ।
अभिवृष्टः स्थितस्तत्र बभौ पुष्पमयो यथा ॥ २
योजनानां शतं श्रीमांस्तीर्त्वाप्युत्तमविक्रमः ।
अनिश्वसन्कपिस्तत्र न ग्लानिमधिगच्छति ॥ ३
शतान्यहं योजनानां क्रमेयं सुबहून्यपि ।
किं पुनः सागरस्यान्तं संख्यातं शतयोजनम् ॥ ४
स तु वीर्यवतां श्रेष्ठः प्लवतामपि चोत्तमः ।
जगाम वेगवाँल्लङ्कां लङ्घयित्वा महोदधिम् ॥ ५

## 2

Ś1 begins with ॐ अथ सुन्दरकाण्ड लिख्यते, Ñ1 ॐ नमो श्रीरामचन्द्राय, V2 D1 ॐ नमो रामचन्द्राय, D2 राम, D4 11 श्रीगणेशाय नम , D10 ॐ श्रीरामचन्द्राय नम ॐ, M1 2 श्रीरामाय नम
—Thereafter, Ś1 D10 read the introductory st जित भगवता तेन etc , Ñ1 D1 4 read कूजन्त राम रामेति etc and V2 reads जयति रघुवशतिलक etc
—Before 1, B D6 ins , while Ñ2 ins after 2

97* तत स हनुमान्क्रान्त सागर मकरालयम् ।

1 V1 illeg up to पवना in 11$^{d}$ (cf v l 6*) Ñ2 repeats 1$^{ab}$ after 97* —$^{a}$) Ñ2(second time) V2 B D6 निपत्य च परे पारे —$^{b}$) Ñ2 (second time) V2 B विश्रम्य च, D6 निश्वस्य च, M2 अभिगम्य ( for अतिक्रम्य ) B3 महाकपि (for °बल ) Ś1 Ñ (Ñ2 first time) D1 2 4 10 11 विक्रम्य हरिपुगव , D3 विलङ्घ्य कपिकुजर —$^{cd}$) Ś1 Ñ1 D1–6 7 9–11 T2 G1 M1 2 Ck t त्रिकूटस्य तटे (D1 G1 M1 °टे) लङ्का( Ś1 गगा [ sic ] ), Ñ2 चित्रकूटतटे लङ्का ( for $^{c}$) Ś1 Ñ D1 3–6 7 9–11 T2 M1 2 Ck t स्थित (for स्थिता) Ś1 Ñ1 D2 4 10 निरक्षत, Ñ2 D1 11 निरीक्ष त, D3 न्यवेक्षत (for ददर्श ह) V2 B D6 ददर्श ता( B3 ततस्ता तु ) पुरी लङ्का त्रिकूटशिखरे( V2 D6 °र ) स्थिता ❀ Cr त्रिकूटशिखरे लङ्का स्थितामिति पाठ ❀

2 V1 illeg for 2(cf v l 1) V2 B D6 om 2 —$^{a}$) D2 -मुक्तस्य (for -मुक्तेन) G2 पादप सम्प्रमुक्तेन —$^{b}$) D2 -वर्षस्य (for -वर्षेण) —$^{c}$) D2 11 दृष्ट (for -वृष्ट ) D6 7 9 G3 M1 ततस् (for स्थितस्) —$^{d}$) D7 9 हरि (for यथा) —After 2, Ñ2 ins 97*, while D3 ins

98* स कीर्यमाण शुशुभे नभस्तारागणैरिव ।

3 V1 illeg for 3 (cf v l 1) B1 transp $^{ab}$ and $^{cd}$ Ñ1 illeg from $^{a}$ up to [अ]प्यु in $^{b}$ —$^{a}$) D8 तीर्त्वा (for श्रीमास्) —$^{b}$) D8 तथा (for तीर्त्वा) —For 3$^{ab}$, Ś1 Ñ2 V2 B D1–4 6 10 11 subst

99* सारवान्सागरस्यान्ते निपत्योत्तमविक्रम ।

[ V2 B3 स गत्वा ( for सारवान्) Ś1 D10 निमज्य ( for निपत्य ) D2 [अ]तुल- ( for [उ]त्तम- ) ]

—$^{c}$) Ś1 Ñ B4 D6 समाश्वास्य, V2 B1–3 D1–4 10 11 समा (D2 स चा )श्वस्य, Cr m k t as in text (for अनिश्वसन्) —$^{d}$) M1 ग्लानम् (for ग्लानिम्) Ś1 D10 चाध्यगच्छत, Ñ1 illeg , D1 3 4 सो यगच्छत, D11 अधिगच्छत, T1 अधिगच्छति (for अधि°) Ñ2 V2 B2–4 D6 स ग्लानि नाध्यगच्छत (B2 3 °ति), B1 सोद्विग्नात्मा( marg also स श्रम ना and स ग्लानि ना )धिगच्छति ❀ Cv तत्र न ग्लानिमधिगच्छति । तत्र समुद्रलङ्घने ग्लानि नाध्यगच्छत । भूतार्थ लट् ।, Cr अनिश्वसन्श्रमनिबन्धनाधीर्घनिश्वासमसुञ्चन् । आलम्बने निमित्त सप्तमीयम् । अधिगच्छति । अध्यगच्छत् ।, Cm अधिगच्छति । अध्यगच्छत् ।, Ck न ग्लानि गच्छति स्मेति कविवाक्यमिदम् । एव कवेरुक्तिमूलो हनुमद्भाव कविना प्रदर्शित ।, Ct न ग्लानिमिति । कविवाक्यमेतत् ❀ —After 3, Ś1 Ñ1( mostly illeg ) D1 3 4 10 11 ins.

100* आत्मसत्त्व मन कृत्वा चिन्तयामास वानर ।

[ D11 आत्मसत्त्व स निर्गत (for the prior half). D3 वीर्यवान् (for वानर ) Ñ1 (illeg except चिन्तय) D1 4 11 स्मयमानो ह्य( D11 °भ्य )चिन्तयत् (for the post half) ]

4 V1 illeg for 4 (cf v l 1) —$^{a}$) D2 इत्येव (for शतानि) Ñ2 V2 B D6 11 योजनाना सहस्राणि —$^{b}$) Ñ1 विक्रमेय बहून्यपि —$^{c}$) B2 [अ]त , D4 11 [अ]न्त (for [अ]न्त) —$^{d}$) Ś1 Ñ1 D1 4 10 11 परि( D11 अत्र [ with hiatus ] )सख्यान( D1 4 °न )गोचर, Ñ2 V2 B D2 3 6 परिसख्याततयोजन ❀ Cv शतान्यहमित्यादि । अस्यान्ते हेत्वर्थे इतिशब्दो द्रष्टव्य ।, Cr m अह सुबहून्यपि योजनाना शतानि क्रमेयम् । शतयोजन( Cm °जन यथा तथा )सख्यात सागरस्यान्त किं पुनरित्यमन्यतेति शेष ।, Ck t योजनाना( Ck °नाना सु ) बहूनि शतान्यपि क्रमेय क्रामेय क्रमितु शक्त ( Ck °क्तोऽस्मि )। शतयोजनमिति सख्यात सागरस्यान्त पर पार क्रामेयमिति का गणना ममेति । मन्यते स्मेति शेष . ❀

5 V1 illeg. for 5 (cf v l 1) —$^{ab}$) Ñ2 V2 B1 2 4 D6 इति (for स तु) Ñ2 V2 B1 2 4 D6 मति कृत्वानिलात्मज , D2 ददर्श सुमहाबल (for $^{b}$) B3 इति सम्यड्मतिं कृत्वा तदा स पवनात्मज .—D2 om 5$^{cd}$ —$^{c}$) Ñ1 illeg up to वेगवाँ Ś1 D1 4 10 11 मतिमाँल्, Ck as in text

शाद्वलानि च नीलानि गन्धवन्ति वनानि च ।
गण्डवन्ति च मध्येन जगाम नगवन्ति च ॥ ६
शैलांश्च तरुसंछन्नान्वनराजीश्च पुष्पिताः ।
अभिचक्राम तेजस्वी हनुमान्प्लवगर्षभः ॥ ७
स तस्मिन्नचले तिष्ठन्वनान्युपवनानि च ।
स नगाग्रे च तां लङ्कां ददर्श पवनात्मजः ॥ ८

सरलान्कर्णिकारांश्च खर्जूरांश्च सुपुष्पितान् ।
प्रियालान्मुचुलिन्दांश्च कुटजान्केतकानपि ॥ ९
प्रियङ्गून्गन्धपूर्णांश्च नीपान्सप्तच्छदांस्तथा ।
असनान्कोविदारांश्च करवीरांश्च पुष्पितान् ॥ १०
पुष्पभारनिबद्धांश्च तथा मुकुलितानपि ।
पादपान्विहगाकीर्णान्पवनाधूतमस्तकान् ॥ ११ G 5 0 9 B 5 2 11 L 5 1 11

(for वेगवान्) D3 ददर्शाप्रतिमा वेला —For 5^cd, Ñ2 V2 B D6 subst

101* प्रतिष्ठत समाश्वस्तो लङ्कां प्रति महाकपि ।

[ Ñ2 D6 महाबाहुर् (for समाश्वस्तो) Ñ2 D6 नाक्रमत (for लङ्कां प्रति) V2 B1 महाबल ]

6 V1 illeg for 6 (cf v 1 1) —^a) D3-5 7-9 11 G M1 2 शाड्वलानि, Cr m g शाद्वलानि (as in text) Ñ1 illeg after च up to गन्धवन्ति in ^b D2 रम्याणि (for नीलानि) —^b) Ś1 D1 3 4 10 11 माल्यवन्ति, Ñ2 V2 B1 3 4 D6 विविधानि (for गन्धवन्ति) Ñ1 V2 वलानि (for वनानि) B2 वनानि विविधानि च, D2 पुष्पवन्ति बृहन्ति च —^c) D7 9 G1 मधुमन्ति, D8 G2 M1 2 गजवन्ति, Cr गधवन्ति, Cm g as in text (for गण्ड°) Ś1 Ñ V2 B D1-4 6 10 11 T M3 गधवन्ति च संपश्यन् (Ś1 D10 गधेन, Ñ1 D2 7 11 T M3 मध्येन, B3 सोपश्यत, D1 4 ह्यानि) —^d) Ñ2 V2 B D6 प्रफुल्ल-, D1 4 तथैव (for जगाम) V2 B1 (marg also) 2 (after corr marg also as in text) D1 4 रसवन्ति (for नग°) ॐ Cr नगवन्ति प्रशस्तवृक्षयुक्तानि।, Cm गण्डवन्ति स्थूलपाषाणवन्ति। नगवन्ति क्षुद्रगिरिवन्ति।, Cg गण्डवन्ति स्थूलोपलवन्ति। नामैकदेशे नामग्रहणेन गण्डशब्देन गण्डशैल उच्यते।, Ck t नगवन्ति वृक्षवन्ति। प्राशस्त्ये मतुप् ॐ

7 V1 illeg for 7 (cf. v 1 1) —^a) Ś1 D10 शिलामिश्रामिसच्छन्ना ॐ Cr शैलानिति। अत्र शैलशब्द शृङ्गपर। लम्बगिरेरुपरिगमनस्योच्यमानत्वात्।, Ck शैलानिति। लम्बगिरिपादरूपानित्यर्थ।, so also Ct ॐ —Ñ2 V2 B D2 6 om 7^c-8 —^c) Ś1 D1 4 10 11 अति-, D3 परि- (for अभि-) —^d) Ñ1 D1 4 11 मारुतात्मज, T2 वानरर्षभ (for प्लवगर्षभ)

8 V1 illeg for 8 (cf v 1 1) Ñ2 V2 B D2 6 om 8 (cf v 1 7) —^a) Ś1 D10 स च तस्मिन्वने तिष्ठन —^c) Ñ1 D10 11 पर्वताग्रे, Ct as in text (for स नगाग्रे) D7 9 G2 M1 Ct स्थिता, D3 स्थितो (for च ता) Ś1 सपर्वता चला लका (sic), D1 4 पर्वताग्रे च लङ्का स, D3 पर्वताग्रे च तान्सर्वान —^d) Ñ1 D1 4 11 ददर्श हनुमान्कपि ॐ Cv g स तस्मिन्नित्यर्धं च ददर्शेत्यत्रकृष्यते।, Cr स इति। तस्मिन्नचले लम्बगिरौ तिष्ठन्वानर उपवनानि च ददर्शेत्यपकृष्य संबन्धनीयम्। अन्यथा तच्छ्लोकोऽनिरिच्येत।, Ck स तस्मिँल्लम्बाचलपर्यन्तपर्वते तिष्ठँल्लङ्काया वनान्युपवनानि च ददर्श। अपि च स पवनात्मजस्तां च लङ्कां नगाग्रे पर्वताग्रे ददर्शेति तच्छ्लोकद्वयस्य योजना। स तस्मिन्निति श्लोकपूर्वोत्तरार्धोक्तार्थप्रपञ्चन सरलानित्यादि।, So also Ct ॐ

9 V1 illeg for 9 (cf v 1 1) —^a) Ś1 कांशिकान्, B4 मदारान्, D6 सबलान्, D10 सानिलान (for सरलान) Ñ1 शालास्तालास्तथा सालान्, D1 4 11 शालास्तालान्कर्णिकारान —^b) Ś1 B1 4 D1 2 4 10 11 खर्जूरांश्चाश्च पुष्पितान, B2 खर्जूरान्प्राशुपुष्पितान्, B3 प्रियालान्किंशुकानपि, D3 कदंबांश्चैव पुष्पितान् —After 9^ab, D3 ins

102* चन्दनान्वकुलन्लोध्रान तरांश्चैव पुष्पितान् ।

—Before 9^cd, D3 reads 11^ab D6 9 om (hapl) 9^c-10 —^c) V2 B1 2 पियालान्, B3 अश्वत्थान, M1 वकुलान, Cv r g as in text (for प्रियालान) Ñ1 च मुकुदाश्, Ñ2 B D1 2 4 8 11 मुचु(D8 °च)कुदाश्, V2 मचकुदाश्, D3 मुचकुदाश्, D5 पिचुमर्दांश्, T2 विचुमदाश्, G2 M1 Cv मुचिलिंदाश्, Cr g k t as in text (for मुचुलिन्दांश्) Ś1 D10 पिया(Ś1 मिथा)लाश्च पुलिंदाश्च ॐ Cv मुचिलिन्दो निम्ब।, Cr g मुचुलिन्दाञ्जम्बीरान।, so also Ck t ॐ —Ñ2 V2 B om (hapl ?) 9^d-10^a —^d) D1 कटुकान, D4 तिंदुकान्, G2 M2 कुटचान् (sic) (for °जान्) M3 कैतकान् (for केत°) D2 करवीरांश्च पुष्पितान् (=10^d).

10 V1 illeg for 10 (cf v 1 1) D6 9 om 10, Ñ2 V2 B om 10^a (for all, cf v 1 9) —^a) Ñ1 illeg from ङ्गून् up to पा in ^b Ś1 D10 नागवृक्षाश्, D1 4 च कपित्थान्, T2 स्कधपूर्णाश्, Ck t as in text (for गन्धपूर्णांश्) D2 स प्रियवर्कपुष्पाश्च, D11 प्रियागान्मार्गपुष्पांश्च —^b) Ś1 D2 10 T1 3 G2 अपि, T2 नरा, M2 चकृन् (for तथा) —D2 om 10^cd —^c) Ś1 Ñ1 D1 3 4 10 11 पनसान्, V2 B1-3 अशोकान्, D8 आसनान् (for असन°) B3 कोविदारादीन —^d) D3 कणवीराश् (for कर°) V2 (also) सु, D11 प्र- (for च) D1 4 पुष्पितान्फलितास्तथा —After 10, D3 ins

103* पुष्पभारावनताश्च पट्पदैरुपशोभितान्।

11 V1 illeg for 11 up to पवना in ^a (cf v 1 1) D3 reads 11^ab before 9^cd —^a) Ś1 D2 10 -विबद्धांश्, Ñ1 -विनद्धाश्, Ñ2 V2 B1-3 D1 4 11 -[न वनद्धाश्, B4

G 5 9 9
B 5 2 12
L 5 1 12

हंसकारण्डवाकीर्णा वापीः पद्मोत्पलायुताः ।
आक्रीडान्विविधान्रम्यान्विविधांश्च जलाशयान् ॥ १२
सततान्विविधैर्वृक्षैः सर्वर्तुफलपुष्पितैः ।
उद्यानानि च रम्याणि ददर्श कपिकुञ्जरः ॥ १३

समासाद्य च लक्ष्मीवॉल्लङ्कां रावणपालिताम् ।
परिखाभिः सपद्माभिः सोत्पलाभिरलंकृताम् ॥ १४
सीतापहरणार्थेन रावणेन सुरक्षिताम् ।
समन्ताद्विचरद्भिश्च राक्षसैरुग्रधन्विभिः ॥ १५

---

D6 -[अ]वनत्राश्च, D3 निवद्धाश्च, D8 I1 3 G1 -[अ]तिव (D8 °न /द्वाश्च, M1 -[अ]तिभाराश्च (for -निबद्धाश्च) —$^{b}$) T1 तदा (for तथा) B3 स्वर्गनिभान, D3 कुसुलितान (meta) (for मुकुलितान) D7 9 तथा मुकुलितानि च —$^{c}$) Ś1 D10 विहगास्तत्र, Ñ1 विचयाकीर्णान (for विहगाकीर्णान्) —$^{d}$) Ś1 Ñ1 D1 4 10 11 मारुतोद्धूत-, V B D2 3 6 8 T2 पवनोद्धूत-, D6 पवनाहत- (for पवनाधूत-)

12 T1 damaged from 12–13$^{c}$ —$^{a}$) B3 -[आ]कीर्णान् (for °कीर्णा) —$^{b}$) D3 वाप्य (for वापी) Ś1 Ñ2 D2 3 6 7 9–11 -[आ]वृता, Ñ1 -[आ]स्थिता, D1 4 -[अ]न्विता (for -[आ]युता) B3 नानाविधलतावृतान —After 12$^{ab}$, Ś1 Ñ V B D1 2 4 6 10 11 ins

104* नदीं शुभजलाश्चैव पादपरुपशोभिता ।

[Ś1 शुभ्र-, D6 शीत (for शुभ-) D1 4 11 चक्रवाकोपशोभिता (for the post half)],

while D3 ins

105* समन्तात्पुष्पसंवीतैः पादपैः पुष्पगन्धिभिः ।

—$^{c}$) D2 सक्रीडान (for आक्री°) Ś1 D10 विविधारण्यान्, Ñ2 V1 B4 D6 सुबहून्रम्यान, B2 3 सुबहूनन्यान, M1 विविधा नद्यो (for °धान्रम्यान्) —$^{d}$) V2 सुबहूंश्च (for विविधांश्च) D1 2 4 जलाश्रयान् (for °शयान)

13 T1 damaged for 13$^{abc}$ (cf v l 12) —$^{a}$) Ś1 Ñ1 B1 (marg also) D1–3 10 11 सन्नतान्, Ñ2 V B1 2 4 D6 सश्रितान, B3 सगतान, G1 वसतान (for सततान्) D2 T2 M1 विविधान् (for °धैर्) D2 वृक्षान (for वृक्षै) —$^{b}$) Ñ1 D1 4 11 -कुसुमोज्ज्व(D1 °ल्फ)लै (D11 °लान), Ñ2 V B2 4 D6 -फलपुष्पैः (for °पुष्पितैः) D3 सर्वत्र फलसंभृतैः —$^{d}$) Ś1 Ñ V B D1–4 6 10 11 निरीक्ष्य (for ददर्श) Ś1 Ñ2 V1 B1 3 4 D2 6 10 11 कपिसत्तम ❀ Cv आक्रीडान्क्रीडादेशान। सर्वर्तुफलपुष्पितैः सर्वर्तुषु फलपुष्प येषां सजातमिति सर्वर्तुफलपुष्पिता । तैः सर्वर्तुफलपुष्पितैः ।, Cr आक्रीडान्राजमवन्धित्वेऽपि मर्वसाधारणोद्यानविशेषान्। पुमानाक्रीड उद्यान राज्ञः साधारण वनमित्यमर । सर्वर्तुफलपुष्पितैः सर्वर्तुष्वपि सजातफलपुष्पैः। उद्यानानि राज्ञः साधारणान्युपवनानि।, Cm आक्रीडान्राजमवन्धित्वेऽपि साधारणोद्यानानि। उद्यानानि राज्ञामसाधारणानि।, Cg आक्रीडान्सर्वसाधारणक्रीडास्थानानि। उद्यानानि राजयोग्यानि। सर्वर्तुफलपुष्पितैः सर्वर्तुषु फलपुष्पाण्येषां सजातानीति तैः ।, Ck आक्रीडाः क्रीडापर्वताः ।, Ct रावणतपोबलात्तस्यां सर्वे वृक्षाः सर्वदा पुष्पिता इति न कश्चिद्विरोधः । आक्रीडाः क्रीडापर्वता इति कतक । साधारणोद्यानान्याक्रीडा इत्यन्ये ❀ —After 13, Ś1 Ñ1 D1–4 10 11 ins

106* ददर्श लङ्कां हनुमान्निविष्टां गिरिमूर्धनि ।

[Ś1 Ñ1 D10 निविष्टे (for °ष्टां)]

14 $^{a}$) Ś1 Ñ V B1 2 4 D1–4 6 10 11 आससाद (for समासाद्य) Ñ2 V B1 2 4 D6 T1 2 G1 स, D1 4 11 [अ]थ (for च) B3 आससाद ततो लङ्का —$^{b}$) B3 दृष्ट्वा (for लङ्कां) —$^{c}$) T G3 M परिखाभि. (for °खाभि) ❀ Cr m (Cr समासाद्येति।) लङ्कां लङ्कासमीपम्।, Cg समासाद्येति। समासाद्य ददर्शेति क्रियाभेदाल्लङ्कापदावृत्ति।, Ck t समासाद्येति लङ्कासमीपं प्राप्योच्यमानलक्षणां लङ्कां ददर्शेत्यन्वय, so also in Ct ❀ —After 14$^{ab}$, Ñ2 V B D6 ins

107* शङ्खमौक्तिकसंघातैरवकीर्णेन पर्वसु ।
अधिकोद्धूततोयेन वेलालोलमहोर्मिणा ।
नानारत्नाकरवता किंनरावासदायिना ।
नागासुरनिवासेन पवनोद्धूतवीचिना ।
प्रमत्तेव नभ कृत्स्न सागरेणाभिसंवृताम् । [5]

[(l 1) B1 (m also) 3 4 अवकीर्णेषु (for °कीर्णेन) —(l 2) V2 -[उ]द्वृत-, B3 4 -[उ]द्धृत-, D6 -[उ]द्धत- (for -[उ]द्धूत-) V2 B1 (m also as above) -तोय- (for -लोल-) B3 वेलातोये महोर्मिभि (for the post half) —(l 3) D6 -हासिना (for -दायिना) —(l 4) B3 नानासुर-. V2 -[उ]द्धत (for -[उ]द्धूत-) —B3 om l 5 —(l 5) V1 B4 -पालिता (for -संवृताम्)]

—For 14$^{c}$–16$^{b}$, Ñ2 V B D6 subst 109* —After 14, D3 ins

108* अनेकयोजनायामामुद्यानवनशोभिताम् ।

15 For subst in Ñ2 V B D6 cf v l 14 and 16 D3 transp 15$^{ab}$ and $^{cd}$ —$^{a}$) Ś1 D3 10 सीतापह(Ś1 °हा)रणोत्थेन, Ñ1 °हरणा . . (illeg), D1 2 4 °हरणार्केण (sic), D7 9 °हारणात्तेन, D11 °हरणाक्तेन ❀ Cv r सीतापहरणार्थेन सीतापहरणेनार्थेन हेतुना (Cr °रणरूपहेतुना। "अर्थः स्याद्विषये मोक्षे शब्दवाच्ये प्रयोजने। व्यवहारे धने शास्त्रे वस्त्रहेतुनिवृत्तिषु" इति न(घण्टुका)।, Cm सीतापहरणार्थेन सीतापहरणहेतुना अपहृतद्रव्यत्वेन हेतुना सुरक्षितामित्यर्थ ।, Cg सीतापहरणमर्थः प्रयोजन यस्य तेन। सुरक्षितत्वे हेतुरयम्।, Ck t सीतापहरणात्सीतां लङ्कायामपहृत्य स्थापनाद्धेतोरित्यर्थ ❀ —$^{b}$) Ś1 D1–4 10 11 रामतापेन तापिना, Ñ1 रामतापे . . . (illeg).

काञ्चनेनावृतां रम्यां प्राकारेण महापुरीम् ।
अट्टालकशताकीर्णां पताकाध्वजमालिनीम् ॥ १६
तोरणैः काञ्चनैर्दिव्यैर्लतापङ्क्तिविचित्रितैः ।
ददर्श हनुमाँल्लङ्कां दिवि देवपुरीमिव ॥ १७

गिरिमूर्ध्नि स्थितां लङ्कां पाण्डुरैर्भवनैः शुभैः ।
ददर्श स कपिः श्रीमान्पुरमाकाशगं यथा ॥ १८
पालितां राक्षसेन्द्रेण निर्मितां विश्वकर्मणा ।
प्लवमानामिवाकाशे ददर्श हनुमान्पुरीम् ॥ १९ G 5 9 24 B 5 2 20 L 5 1 21

—D3 reads $15^{cd}$ twice —$^{d}$) D1 4 अभिकाक्षिता, D2 3 (first time) अभिरक्षिता, D3 (second time) भीमदर्शन , D7 T G1 2 उग्रधन्वभि , D11 उपशोभिता (for उग्रधन्विभि ) Ś1 D10 राक्षसैरुपलक्षिता ❀ Cr उग्रधन्विन । उग्राश्च ते धन्विन ।, Cg विचरद्भिश्चेत्यत्र चकारो भिन्नक्रम । राक्षसैश्च सुरक्षिताम् ।, Ck उग्राश्च धन्विनश्च तथा ❀

16 Ñ1 illeg from 16 up to वलव in $32^{b}$ D2 reads $16^{ab}$ after $17^{ab}$ —$^{a}$) D2 10 सौवर्णेन (for काञ्चनेन) D1 3 4 11 दिव्या, M1 लका (for रम्या) —$^{b}$) T2 [ आ ]वृता (sic) (for महा-).—For $14^{c}$ – $16^{b}$, Ñ2 V B D6 subst

109* वप्रै श्वेतचयाकारै परिखाभिश्च सर्वत ।
अगाधाव्ययतोयाभिरध परिहितामिव ।
शातकुम्भेन महता प्राकारेण सुसवृताम् ।

[ (l 1) B3 प्राचीनैर्बहुधाकारै (for the prior half) B1 सर्वश (for सर्वत ) V2 परिघाभि समन्तत (for the post half) —(l 2) B3 (before corr ) अधिकोद्धयतोयाभिर् (for the prior half) B3 धर (meta ) (for अध ) Ñ2 B3 परिवृताम् (for °हिताम्) ]

—After $16^{ab}$, D1–5 7–11 S ins

110* गृहैश्च गिरिसकाशै शारदाम्बुदसनिभै ।
पाण्डुराभि प्रतोलीभिरुच्चाभिरभिसवृताम् ।

[ (l 1) M3 ग्रह- (for गिरि ) —(l 2) D1 4 मार्गनाभि , D10 प्रचुराभि , T1 G M Cv g पाडराभि , Cm t as above (for पाण्डु° ) D1 4 रथ्याभिर्, D2 ऊर्ध्वाभिर्, T2 द्विष्टाभिर् (for उच्चाभिर्) D1–4 10 11 उपशोभिता (for अभिसवृताम् ) ]
—Before $16^{cd}$, Ñ2 V B D6 read $20^{cd}$ —$^{cd}$) D3 -समाकीर्णां (for -शता° ) T3 G1 पताक , Cr m g t as in text (for पताका-) Ñ2 V1 B1 2 4 D6 7 9 G2 -शोभिता, V2 -सेविता, Cr m g t as in text (for -मालिनीम्) B3 रत्नकाचनचित्रादिपताकाभिरलकृता

17 Ñ1 illeg for 17 (cf v l 16) —$^{a}$) G1 दीप्ता (for दिव्यैर्) —$^{b}$) D1 लताभिश्च, D2 3 T2 °भक्ति-, G1 Ck °पत्ति-, Cv r m g t as in text (for °पङ्क्ति-) D7 9 विराजित , M3-विचीपिक , Cr as in text (for -विचित्रित ) Ś1 D10 स्तम्भै(D10 लवै)रतिविचित्रिता, D4 लताश्चैव विचित्रिता —After $17^{ab}$, D2 reads $16^{ab}$ (including 110*) —$^{c}$) Ś1 D1 2 4 10 11 transp हनुमाल्ल and लङ्का —$^{d}$) D7 देवो, D9 om (for दिवि ) ❀ Cr in ददर्श हनुमाँल्लङ्कामिति पुन पुन(Cm °मान्पुरीमिति पुन )र्दर्शनाभिधान विशेषान्तरविवक्षयोपमानान्तरविवक्षया च ❀ —For 17–19, Ñ2 V B D6 subst 111*

18 Ñ1 illeg for 18 (cf v l 16) For subst in Ñ2 V B D6 cf v l 17 and 19 —$^{a}$) M1 दिवि, Ck t as in text (for गिरि ) Ś1 D1 2 4 10 11 उच्चे , D3 ना तु, D8 T2 G1 M1 रम्या, Ct as in text (for लङ्का ) —$^{b}$) T1 G M1 3 पाडरैर् (for पाण्डु° ) Ś1 D1 2 4 10 11 भवनोत्तमैः (for °नै शुभै ) —$^{c}$) G3 transp ददर्श and स T2 नगरीं, G2 स हरि (for स कपि ) M3 कपिश्रेष्ठ (for कपि श्रीमान ) —$^{d}$) Ś1 D10 पुरमार्गं(Ś1 °र्गं ) गतस्तथा, D5 7 9 T2 पुरीमाकाशगामिव(D5 T2 °गा यथा ) ❀ Ck आकाशग पुरमिवेति ।, Ct गिरिमूर्धस्थत्वादाकाशगपुरोपमेयता लङ्काया ❀

19 Ñ1 illeg for 19 (cf v l 16) —$^{b}$) D3 विहिता (for निर्मिता ) —After $19^{ab}$, Ś1 D1 2 4 10 11 read 23 and om $19^{cd}$ —$^{c}$) D5 9 प्लवमानमिवाकाश(D5 °शे ) —$^{d}$) D3 5 7–9 T2 G2 3 M1 2 Cv g कपि , Cm as in text (for पुरीम्) ❀ Ck आकाशे प्लवमानामिति च गिरिमूर्ध्नि स्थितत्वात ।, Ct गिरिमूर्धस्थत्वादेवाकाशे प्लवमानामिव । लङ्का द्रष्टुर्हनूमत इव तद्वर्णनप्रसक्तस्य कवेरप्याश्चर्यमग्नतया ददर्शेति पुनरुक्तिर्न दोषाय । विस्मयेन पुन पुनर्ददर्शेति वा तात्पर्यम् ❀ —For 17–19, Ñ2 V B D6 subst

111* स्फाटिकै काञ्चनैश्चैव शोभितामिन्द्रगोपकै ।
प्राकारतलविन्यस्तैश्चन्द्रसूर्यगतैरिव ।
ससारगल्वर्कमयै स्तम्भैरञ्चिततोरणाम् ।
स्फाटिकैर्हैमभक्त्यन्तै कपाटैर्भूपितामिव ।
राक्षसैरभियुक्तैश्च यन्त्रै सायुधसचयै ।
अलकृतपुरद्वारा समृद्धिमिव रूपिणीम् ।
विमानैर्हर्म्यनिर्यूहविटङ्कैर्मणिवेदिकै ।
घण्टाध्वजपताकाभिर्दिव्यैरन्यामिव श्रियम् ।
नानातूर्यनिनादैश्च हयाना हेषितेन च ।
बृहितेन च नागाना रथनेमिस्वनेन च ।
सिंहनादैश्च दृप्ताना राक्षसाना भयावहै ।
सागरस्य च घोषेण हर्पाद्प्रहसितामिव ।
गिरिमूर्ध्नि स्थिता दिव्या निर्मिता विश्वकर्मणा ।
प्लवमानामिवाकाशे पुरीं देवपुरोपमाम् ।

[ (l 2) B3 D6 अपि (for इव ) —B2 reads l 3–4 in marg —(l 3) Ñ2 D6 हेमसारमयै शुभै , V2 ससारगर्भरत्नैस्तु, B3 महासारकनमयै (for the prior half) V1 illeg from स्तम्भै up to भक्त्यन्तै in l 4 V2 तैस्तैर् (for स्तम्भैर्) —(l 4) Ñ2 B1 -भक्तान्तै , V2 -वद्धैश्च, B1 (m also as

तानि प्रयत्नाभिसमाहितानि
मयेन साक्षादिव निर्मितानि ।
महीतले सर्वगुणोत्तराणि
ददर्श लङ्काधिपतेर्गृहाणि ॥ ४
ततो ददर्शोच्छ्रितमेघरूपं
मनोहरं काञ्चनचारुरूपम् ।
रक्षोऽधिपस्यात्मबलानुरूपं
गृहोत्तमं ह्यप्रतिरूपरूपम् ॥ ५
महीतले स्वर्गमिव प्रकीर्णं
श्रिया ज्वलन्तं बहुरत्नकीर्णम् ।
नानातरूणां कुसुमावकीर्णं
गिरेरिवाग्रं रजसावकीर्णम् ॥ ६
नारीप्रवेकैरिव दीप्यमानं
तडिद्भिरम्भोदवदर्च्यमानम् ।
हंसप्रवेकैरिव वाह्यमानं
श्रिया युतं खे सुकृतां विमानम् ॥ ७
यथा नगाग्रं बहुधातुचित्रं
यथा नभश्च ग्रहचन्द्रचित्रम् ।
ददर्श युक्तीकृतमेघचित्रं
विमानरत्नं बहुरत्नचित्रम् ॥ ८

G 500
B 578
L 550

4 G1 om (hapl) $4^{ab}$ —$^{a}$) Ś1 D2 3 10 प्रयत्नानि, D8 G2 3 M1 प्रयत्नेन, Cv r m g t as in text (for प्रयत्नाभि) D1 3 -सुमहतानि, G2 समारू°, Cv r m g t as in text (for -समाहितानि) Ñ2 V B D6 नाना(V2 महा)-प्रसन्नानि(B3 °शस्तानि) सुमह(Ñ2 B1 4 °हि, V1 °भृ)तानि, D4 तानि प्रयत्नानि ... तानि(marg also गृहाणि पुर्या) —After $4^{a}$, D4 repeats $3^{bc}$ (var) —$^{b}$) V2 भौमेन, B3 धात्रा तु (for मयेन) Ś1 D2 10 तनापि(D2 °मि) वि-, V2 D1 3 4 साक्षादभि- (for साक्षादिव) —$^{c}$) Ś1 Ñ2 V B D1–4 6 10 -गुणान्वितानि, D5 -गृहोत्तराणि (for -गुणोत्तराणि) ✻ Cv प्रयत्नाभिसमाहितानि प्रयत्नेन कृतसमाधानानि। लङ्कापतिना स्वयंकारितविषयोऽयं श्लोकः। अन्यथा लङ्काया विश्वकर्मनिर्मितत्वादिवार्थो न सङ्गच्छेत।, Cr मयेन प्रयत्नसमाहितानि प्रयत्नेन चित्रविधानेन कृतसाधनानि। Cg प्रयत्नाभिसमाहितानि प्रयत्नेन यथायोगं स्थापितानि। मयेनेति विश्वकर्मा लक्ष्यते। महीतले निर्मितानि। इव शब्देन मयस्य निर्मातृत्वव्याजमात्रम्। रावणप्रयत्नेनैव निर्मितानीत्यर्थः। यद्वा-ऽन्यानि गृहाणि विश्वकर्मनिर्मितानि। इमानि तु मयं व्याजीकृत्य स्वयमुपायप्रदर्शनमुखेन निर्मितानीति पूर्वगृहेभ्यो विशेष उच्यते ✻

5 $^{a}$) D2 [आ]दृत, M1 [उ]दृत- (for [उ]-च्छ्रित-) Ś1 D1–3 10 -शैल- (for -मेघ-) —$^{b}$) G1 मनोरम (for °हर) D1 3 4 -चित्ररूप, M2 -राशिवर्णं (for -चारुरूपम्) —$^{c}$) D1 3 4 तद्रावणस्यात्मगुणानुरूप —$^{d}$) Ś1 D10 सुप्रतिपन्न-, D1 3 4 चाप्रतिरूप-, D2 सुप्रति° (for ह्यप्रतिरूप) G1 गृहोत्तमस्य प्रतिरूपरूप —For 5, Ñ2 V B D6 subst

216* स वानरस्तत्र मनोज्ञरूप
ततो ददर्शोच्छ्रितशैलरूपम् ।
मनोहर काञ्चनजालरूप
रक्षोऽधिपस्यात्मबलानुरूपम् ।

[(l 1) V2 महोग्रस्य —(l 2) B1 -शृग- (for -शैल-) —(l 3) D6 जाल° (for -जालरूप) ]

6 Ś1 D10 om $6^{ab}$ —$^{a}$) D8 तल (for -तले) B3 रत्नम् (for स्वर्गम्) D8 G1 2 [अ]वकीर्णं, Cg t as in text (for प्रकीर्णं) —$^{b}$) M1 damaged for श्रिया V2 B1 4 -तूर्य-, B2 -सूर्य-, B3 -विप्र- (for -रत्न) D1 3 4 प्रक्रीडिते सूर्यशतानु(D4 [after corr *sup lin* ]°तश्च)-कीर्णं, D2 प्रक्रीडितैस्तूर्यसमानरूप —Ñ2 V B D6 om (hapl) $6^{cd}$ —$^{c}$) D1 3 4 कुसुमं प्रकीर्णं (for कुसुमाव°) —$^{d}$) Ś1 D1–4 10 रजतावकीर्णं

7 $^{a}$) D2 10 अपि, D1 3 4 अति- (for इव) —$^{b}$) D7 9 अम्भोधरम् (for °दवद्) Ś1 D1–4 10 तडिद्भिरम्भोदमिवोह्य(Ś1 °च)मान —For $7^{ab}$, Ñ2 V B D6 subst

219* नारीप्रवेकैरभितोऽभिपूर्णं
महोदधिं चन्द्रमसेव पूर्णम् ।

[(l 1) V2 नदीप्रवेगैर्, B3 नारीनिवेशैर् (for नारीप्रवेकैर्) Ñ2 V3 D6 प्र(V2 वि)कीर्णं, B1 [S]तिपूर्णं (for ऽभि°) ] —Ś1 Ñ2 V B D6 10 om (Ś1 D10 hapl) $7^{cd}$ —$^{c}$) D2 अतिव र्तमान (for इव वाह्य°) D1 3 4 मत्तप्रवेगैरिव नोद्यमान —$^{d}$) D1 3 4 युक्त (for युत) D1 3 4 7 9 G3 सुकृत, Cr m g as in text (for °ता) D2 वेश्मानमेवाभिसमुह्यमान ✻ Cv नारीप्रवेकैर्नारीश्रेष्ठैर्नारीसुख्य ।, Cl प्रवेक श्रेष्ठ । नारीप्रवेकैरिव। अन्ययानमनेका स्यान्नारीप्रवेकै श्रेत्यर्थं । तत्र दृष्टान्तस्तडिद्भिरम्भोदवदिति। अर्च्यमानं पूज्यमानम् । एवमादिपदे यत्रकर्तैन्वयप्रयुज्यमाने तु नानियत्न कार्यं ✻ —After 7, D1 3 4 read 11, D2 reads $11^{d}$

8 $^{a}$) Ś1 D2 10 बहुधातुपूर्णं D5 G1 °धा विचित्र (for °धातुचित्र) —Ś1 D2 10 om (hapl) $8^{bcd}$ —V2 reads $8^{b}$ after l 1 of 220* —$^{b}$) D2 om from च up to चित्रम् D1 4 नग्रह- (for च ग्रह-) V1 B2 4 D6 चन्द्र- (for -चन्द्र-) V2 यथा नभ सुग्रहचित्रचित्र, B1 (... also as in V1) यथा नभः शुक्रगणैविचित्रं —$^{c}$) D3 युक्तीकृत, G1 3 युक्त गृह (G3 कृत-) (for युक्तीकृत-) D7 9 चामरेण (for -मेघचित्र) —$^{d}$) D7 9 चित्र विमान (for विमानरत्न)

G 5 0. 0
B 5 7 0
L 5 5 15

महीं कृता पर्वतराजिपूर्णा
शैलाः कृता वृक्षवितानपूर्णाः ।
वृक्षाः कृताः पुष्पवितानपूर्णाः
पुष्पं कृतं केसरपत्रपूर्णम् ॥ ९

कृतानि वेश्मानि च पाण्डुराणि
तथा सुपुष्पा अपि पुष्करिण्यः ।
पुनश्च पद्मानि सकेसराणि
धन्यानि चित्राणि तथा वनानि ॥ १०

पुष्पाह्वयं नाम विराजमानं
रत्नप्रभाभिश्च विवर्धमानम् ।
वेश्मोत्तमानामपि चोच्चमानं
महाकपिस्तत्र महाविमानम् ॥ ११

कृताश्च वैदूर्यमया विहंगा
रूप्यप्रवालैश्च तथा विहंगाः ।
चित्राश्च नानावसुभिर्भुजंगा
जात्यानुरूपास्तुरगाः शुभाङ्गाः ॥ १२

M1 -चित्र- (for -रत्न-) —For 8^cd, Ñ2 V B D1 3 4 6 subst

220* यथा सरः साम्बुजहंसचित्रं
तथा बभौ तद्गुरुरत्नचित्रम् ।

[(l 1) V1 च (for स-) V2 सस्वज (for साम्बुज-).]

9 ^a) Ñ2 V B D6 कृत्रिमशैल (B3 °रत्न), D1 3 4 G3 M2 Cv पर्वतराज- (for पर्वतराजि-) Ś1 D2 10 महीभृता काचनराजिपूर्णं ❀ Cr मही कृता मही निर्मिता । एवमुत्तरत्रापि कृतशब्दार्थ ❀ —^b) V2 वृक्षा, B3 मला (sic) (for शैला) V2 पुष्प- (for वृक्ष) M1 -समूह-, M2 -विमान, Ct as in text (for -वितान-) Ś1 D2 10 अ(D2 शै)लकृत वृक्षवितानपूर्णं —After 9^ab, V2 ins

221* वाप्यः कृता पद्मपलाशपूर्णा
गृहाः कृता रत्नवितानपूर्णाः ।

—Ś1 D2 10 om (hapl) 9^c. —After 9^c, B2 ins in marg

222* तथा पुरीयं बहुवेश्मपूर्णा ।

—^d) Ś1 D10 पुष्पवृत्त, D2 पुष्पं कृत (for पुष्पं कृतं) Ñ2 V1 B1 2 4 केशर- Ś1 D2 10 -रत्न, B3 -गन्ध-, M1 -जाल- (for -पत्र-) G3 -कीर्णं (for -पूर्णम्)

10 ^a) Ś1 D2 10 सुपुष्कलानि (D2 °राणि), T1 G M च पाटराणि (for च पाण्डुराणि) —Ś1 D10 om 10^b —^b) Ñ2 V1 B D1-4 6 तथा प्रफुल्ला (D1 3 4 °हृष्टा) नि च पुष्कराणि, G1 M3 तथा सुपुष्पाणि च केस (M3 °ण्यपि पुष्क) राणि —^c) Ñ2 V1 B1-3 D6 स- (for च) Ś1 Ñ2 V1 B D1-4 6 10 पद्मोत्पल-, D8 पद्मानि सु- (for पद्मानि स-) V1 B2-4 D9 -केशराणि —D2 om 10^d – 11^c —^d) T3 धान्यानि, G3 धनानि (for धन्यानि) Ś1 Ñ2 V1 B D1 3 4 6 10 वनानि चित्राणि तथेत (Ś1 D10 मनोह, D1 3 4 तथोत्त) राणि, D5 7 9 T2 M1 वनानि चित्राणि तथा व (D7 9 सरोव, M1 तथाप) राणि, D6 वनानि चारूणि तथापराणि —For 10, V2 subst

223* रम्याणि वेश्मानि मनोहराणि
रत्नोपहारैरपि पाण्डुराणि ।
वनानि चित्राणि तथेतराणि
यत्र प्रफुल्लानि च केसराणि ।

—After 10, Ś1 ins

224* मृगाकुलान्यत्र मनोहराणि ।

11 D2 om 11^abc (cf v l 10) Ś1 Ñ2 V B D6 10 om 11 D1 3 4 read 11 (with subst) after 7 —^b) D7 9 विघूर्णमान (for विवर्ध°) D1 3 4 रत्नप्रवेकैरभिवर्धमान. —D2 reads 11^d after 7 —^d) T1 3 M2 Cv तत्तु (for तत्र) ❀ Cv महाकपिस्तत्तु महाविमानमिति पाठ ।, Cr. वेश्मोत्तमानामिव । पञ्चम्यर्थे षष्ठी । तेषां मध्य उच्चमानमुन्नतमिति यावत् । अपि चेति निपातसमुदायो विशेषणान्तरसमुच्चयपर ।, Ck वेश्मोत्तमाना देववेश्मभूतविमानानामुच्चमान सर्वसौभाग्यस्य परमकाष्ठा प्राप्तम् ।, so also Ct. —For 11^cd, D1 3 4 subst.

225* वेश्मोत्तमश्चापि स मुह्यमानं
ददर्श वीरः सुकृतं विमानम् ।

12 ^a) B3 महार्ह-, D2 भूताश्च (for कृताश्च) B4 वैदूर्यमहा, D7 M1 वैदूर्यमहा- (for वैदूर्यमया) —B4 om (hapl ?) from 12^b up to विहगा in 13^d Ś1 D10 om (hapl ?) 12^bc —^b) D1 3 4 रौप्य- (for रूप्य-) D1 3 4 तथाचि (D4 °चि) तागा, D2 पुनश्चिताङ्गा (for तथा विहगा) Ñ2 V1 B1-3 D6 रूप्य (B1 रौप्य, D6 रूप) प्रवाल (B2 [marg also] रूप्यातराल) भरणाचिताङ्गा —^c) D2 5 G3 विहगा (for भुजगा) —^d) T2 जात्या सु-, G3 जातानु-, Cv r m g t as in text (for जात्यानु-) Ś1 D2 10 पुष्पाह्वये भक्तिचिता कुरगा ❀ Ct जात्यानुरूपा जातिनुरूपसदृशा । तुरगविशेषणं चैतत् ❀ —For 12^cd, Ñ2 V1 B1-3 D6 subst

226* चित्रानना हेमविभूषिताङ्गा
यानेषु चित्रेषु विचित्रिताङ्गा ।

[(l 2) B1 स्थानेषु (for यानेषु]) B2 विचित्रेषु यानेषु (by transp.) ]

—For 12, V2 subst.

प्रवालजाम्बूनदपुष्पपक्षाः
सलीलमावर्जितजिह्मपक्षाः ।
कामस्य साक्षादिव भान्ति पक्षाः
कृता विहगाः सुमुखाः सुपक्षाः ॥ १३

नियुज्यमानाश्च गजाः सुहस्ताः
सकेसराश्चोत्पलपत्रहस्ताः ।
बभूव देवी च कृता सुहस्ता
लक्ष्मीस्तथा पद्मिनि पद्महस्ता ॥ १४

इतीव तद्गृहमभिगम्य शोभनं
सविस्मयो नगमिव चारुशोभनम् ।
पुनश्च तत्परमसुगन्धि सुन्दरं
हिमात्यये नगमिव चारुकन्दरम् ॥ १५

ततः स तां कपिरभिपत्य पूजितां
चरन्पुरीं दशमुखबाहुपालिताम् ।
अदृश्य तां जनकसुतां सुपूजितां
सुदुःखितां पतिगुणवेगनिर्जिताम् ॥ १६ G 5 0 0 B. 5 7 16 L 5 5 20

---

227* जलस्थलप्रक्रमगोचिताङ्गा
कृताश्च वैदूर्यमया विहगा ।
रूप्यप्रवालाभरणोचिताङ्गा-
श्चित्रानना हेमविभूषिताङ्गा ।

—After 12, D2 ins 228*

13 B4 om up to विहगा in $13^d$ (cf v l 12) Ś1 D10 om 13 V2 transp $^a$ and $^b$ —$^a$) Ñ2 V2 B1-3 D2 6 -रक्त(B3 रत्न)पक्षा , D1 3 4 नद्धकक्षा , T2 G3 °वृक्षा , G1 2 -चित्रपक्षा , Cv r m g t as in text (for पुष्पपक्षा ) —$^b$) Ñ2 V1 B1 2 D1 3 4 6 सली(D6 सनी)-लमावृत्य(B1 °या वृद्धि, B2 °मावृत्ति) विभूषिताक्षा , V2 रत्नेषु चित्रेषु विभूषिताक्षा , B3 सलीलसद्वृत्तविभूषिताङ्गा , D2 सशील-मावृत्य विजिह्मपक्षा (sic), Cv सलीलमालम्बितवक्त्रपक्षा —V2 transp $^c$ and $^d$ —$^c$) D7 9 पक्षा (for साक्षाद् ) Ñ2 B2 D6 भक्त-, V1 B1 भक्ति , V2 B3 शक्ति- (for भान्ति) —$^d$) Ñ2 V B1 2 D1 3 4 6 काता विहगा , B3 om (for कृता वि°) —After 13, Ñ2 V B D1.3 4 6 ins , whereas D2 ins after 12

228* द्विजाश्च रत्नाचितपक्षतुण्डा
द्विजाश्च हेमाजिनचारुदण्डा ।
द्विजाश्च चामीकरचारुतुण्डा
द्विजाश्च वाग्भि परिपूर्णतुण्डा ।

[ (l 1) D1 3 4 रत्नाकर- (for °चित-) V2 -तुण्डपक्षा (by transp ) (for पक्षतुण्डा) D2 द्विजाश्च पक्षार्चितरक्तमुण्डा —D2 om (hapl ) l 2-3 —(l 2) B1 (*sup lin* also) -बाहु (for चारु-) D1 3 4 तुण्डा (for दण्डा ) B2 द्विजाश्च रत्नाचित(marg also हेमाञ्चित )हेमतुण्डा —(l 3) V1 om. -तुण्डा —(l 4) D4 वह्नि (sic) (for वाग्भि ) B3 च सु- (for परि-) ]

14 $^a$) Ś1 Ñ2 V1 B2 3 D6 10 नि(Ś1 स)युध्यमानाश्च, V2 निबद्ध°, D2 निरुद्ध° (for नियुज्य°) M3 तु (for च) Ś1 B4 स्व(B4 स)हस्ता (for सु°) —D10 om (hapl ) $14^b$ —$^b$) D5 सकेसराश्च Ś1 D1-4 स्त्रियश्च(Ś1 D2 तथैव) पद्मोत्पलदामहस्ता , Ñ2 V B2 3 D6 सर सु(V D6 सर प्र, B3 वापीप्र)फुल्लोत्पलपद्म(V2 °त्र)हस्ता , B1 द्वार सपूर्णोत्पलपद्महस्ता (sic), B4 शरत्प्रवालोत्पलपद्महस्ता —$^c$) D5 चेदी (metri ) (for देवी ). G3 तथा (for कृता) —$^d$) T2 तदा, G1 स्थिता (for तथा) D1 3 4 लक्ष्मीस्तदा पद्मविलग्नहस्ता —For $14^{cd}$, Ś1 D2 10 subst .

229* लक्ष्मीस्तथा पद्मवितानहस्ता
गृहान्तरे राजति तस्य सस्था ।

[ (l 1) D2 लक्ष्मीस्तदा पद्मनिमग्नहस्ता —(l 2) D2 गृहाङ्गणे (for °न्तरे) Ś1 तत्र (for तस्य) ],

while Ñ2 V B D6 subst

230* बभुश्च देवा सुकृता समस्ता
लक्ष्मीस्तथा हेमसरोजहस्ता ।

[ (l 1) Ñ2 V1 D6 सुहस्ता (for समस्ता) B3 स योजमानाभिकृता समस्ता (sic) ]

15 $^a$) M1 उपगम्य (for अभि°) B(ed ) शोभमान (for शोभन) Ś1 इत्थ स तद्गृहमवेक्ष्य सुन्दर, Ñ2 V1 B1 2 4 D1-4 6 10 इति स्म(D1 3 4 अतीव, D2 10 इत्थ म) तद्गृहमभिवीक्ष्य सुदर, V2 इत्थ कपिस्तद्गृहमीक्ष्य सुदर, B3 इतस्ततो गृहमभिवीक्ष्य सुदर —$^b$) Ś1 D2 10 सु(Ś1 न)-विस्मय, V2 सविस्मयो, D1 3 4 विसिस्मये (for सविस्मयो) —D10 om (hapl ) from शोभनं up to चारु in $^d$ Ś1 Ñ2 V B D1-4 6 7 9 -कन्दर, T2 -दर्शन, Cg as in text (for -शोभनम्) —$^c$) Ś1 Ñ2 V B2 D1 3 4 6 पुर, B1 4 पर (for पुनश्च) Ś1 -मदिर, V2 B1 2 4 D6 -कन्दर (for सुन्दर) B3 पगपर गृहमतीव सुदर, D2 पुर च तत्पुरमुत्तमन्ति मदिर (sic) —M2 om ( hapl ) $15^d$ —$^d$) D1 3 4 वनम् (for नगम्) Ś1 B1 3 मदर, D1.3 4 Cm -सुदर, D2 -मदिर, Cv r k t as in text (for -कन्दरम्) ꣼ Cv इतीवेत्यादि । इव शब्द पादपूरणे ।, Cg इतीवेति । इव शब्दो वाक्यालङ्कारे । इतीवेत्येकनिपातो वा प्रकारार्थे ꣽ —After 15, D4 wrongly reads $16^a$, some portion of $16^b$ and $15^c$, and $^d$ twice

16 $^a$) D5 पुन (for तत ). M1 तु (for स) Ś1 D10 अपि(D10 अभि) वीक्ष्य, Ct as in text (for अभिपत्य).

G 5 0 0
B 5 7 17
L 5 5 21

ततस्तदा बहुविधभावितात्मनः
कृतात्मनो जनकसुतां सुवर्त्मनः ।
अपश्यतोऽभवदतिदुःखितं मनः
सुचक्षुषः प्रविचरतो महात्मनः ॥ १७

इति श्रीरामायणे सुन्दरकाण्डे षष्ठः सर्गः ॥ ६ ॥

D8 M1 2 सूर्जिता (for पूजिता) D2 ततस्तु ता स कपिरभिवीक्ष्य पूजिता, T2 तत स ता कपिवरभृत्य आर्जिता —b) D5 8 T2 M1 2 -निर्जिता (for -पालिताम्) Ś1 D2 10 वरा पुरी तदधिपबाहुनिर्जिता —For 16ab, D1 3 4 subst

231* तत स तत्कपिरभिभूय दुर्जंग
चरन्पुर तदधिपबाहुनिर्जितम् ।

—c) Ś1 D1–4 10 ददर्श नो जनकसुता गुणान्वि(D2 °र्जि)ता (D1 3 4 °तामनिंदिता) —d) Ś1 स दु खिता, D5 T1 3 M1 3 Cv r m सुदु खित (for सुदु खिता) Ś1 D2 10 -वेश (D2 °ग)वर्जिता (for -वेगनि°) D1 3 4 पतिसुखवेपव (D3 °मेव नि)र्जिता ❀ Cv g तत इत्यादि। अदृश्यादृष्टा। अपिनिपातनान्नञ्पूर्वेऽपि ल्यप्।, Cr अदृश्यादृष्टा। ल्यबादेश आर्ष।, So also Cr m g k t ❀ —For 16, Ñ2 V B D6 subst

232* तत स ता प्लवगवर सुदुर्जय
सुदु खिता पतिगुणभोगवर्जिताम् ।
इतस्ततो जनकसुता विलोकय-
न्न दृष्टवानभवदतीव दु खित ।

[(l 2) B1 सुदु स्थित (for सुदु खिता) B3 सुदु खिता नृपवरभोग्यवर्जिता ]

17 Ñ2 V B D6 om 17 —a) D5 T2 G2 तथा, D8 G3 M1 तु ता, Cg as in text (for तदा) G1 बहुगुण-, Cr m g k t as in text (for °विध-) —b) Ś1 D10 महात्मन स्वयमुचितार्थवर्त्मन , D1 3 4 कृतात्मन (D3 om hapl ) समरुचितार्थवर्त्मन , D2 महात्मनो लघु तु विचार्य यत्पुन —c) D2 G1 [ऽ]भवदभि , T3 भवति सु- (for ऽभवदति ) D8 अदृश्यतोभूदतिदु खित मन —d) Ś1 D1–4 10 वपुष्मत , D7 9 T1 3 G1 M2 Cv k t सचक्षुष , Cr m g as in text (for सुचक्षुष ) D5 प्रतिचरतो

Colophon V2 om (cont the Sarga) —*Sarga name* Ś1 D10 भवनवर्णन, Ñ2 V1 B1 4 D6 सीतान्वेषण, B2 राजगृहवर्णन, B3 D2 रावणभवनवर्णन(D2 °न ), D1 3 4 पुष्पकवर्णन(D3 °न ) —*Sarga no* (figures, words or both) D1 2 4 10 om , Ś1 5 , Ñ2 V1 B1 2 4 D6 13 , B3 12 , D3 9 , D5 7–9 S 7 —After colophon, D2 concludes with राम, G with श्रीरामाय नम .

७

तस्यालयवरिष्ठस्य मध्ये विपुलमायतम् ।
दद‍र्श भवनश्रेष्ठं हनूमान्मारुतात्मजः ॥ १
अर्धयोजनविस्तीर्णमायतं योजनं हि तत् ।
भवनं राक्षसेन्द्रस्य बहुप्रासादसंकुलम् ॥ २
मार्गमाणस्तु वैदेहीं सीतामायतलोचनाम् ।
सर्वतः परिचक्राम हनूमानरिसूदनः ॥ ३
चतुर्विषाणैर्द्विरदैस्त्रिविषाणैस्तथैव च ।
परिक्षिप्तमसंबाधं रक्ष्यमाणमुदायुधैः ॥ ४
राक्षसीभिश्च पत्नीभी रावणस्य निवेशनम् ।
आहृताभिश्च विक्रम्य राजकन्याभिरावृतम् ॥ ५

G 5 13 0
B 5 0 6
L 5 5 5

# 7

Before Sarga 7, D5 7–9 S ins App I (No 2) V3 cont the previous Sarga M1 3 begin with श्रीरामाय नमः

1 V2 om 1 Ś1 D10 om $1^{ab}$ Ś1 D2 10 read st 1–6, D1 3 4 read st $1–9^{b}$ (all including omissions and star passages) after 5 5 Ñ2 V1 B D6 read 1 and $2^{cd}$ (including star passages) after 245* —$^{a}$) Ñ B3 D5 6 [आ]लय (for [आ]लय-) Ñ2 B1 D6 वरिष्ठ च, D2 प्रविष्टस्य (for -वरिष्ठस्य) V1 B1 2 4 तस्यातीव वरिष्ठ च (B1 2 °ष्ठस्य) —$^{b}$) Ñ1 V1 D2 7 8 G विमलम् (for विपुलम्) D8 आस्थित (for आयतम्) —$^{c}$) B1 (m also as in text) प्लवगश्रेष्ठो, D2 4 8 11 G2 3 M1 भवन श्रेष्ठ, Cr m is in text (for भवनश्रेष्ठ) —$^{d}$) Ś1 Ñ1 D2 10 11 हरियूथप, D1 3 4 हरिपुगव (for मारुतात्मज) B3 तत्र मारुतनन्दन —After 1, Ñ2 V1 B1 2 4 D6 read 240*

Before $2^{ab}$, Ñ2 V B D6 ins

233* अथ शुश्राव निनद मेघानामिव गर्जताम् ।
मृदङ्गदुन्दुभिवाद्याना तूर्यगीतविमिश्रितम् ।
ततस्त देशमागम्य शुश्रुवे यत्र स स्वन ।
ददर्श पुष्पक नाम विमान काञ्चनप्रभम् ।

[(l 1) V D6 गर्जित, B1 गजन (for गर्जताम्) —(l 2) B1 D6 -घोष (for गीत-) Ñ2 तूर्यघोषमिवोच्छ्रित, V2 तूर्यघोषनिनादित (for the post half) —B3 om l 3 —(l 3) B2 तद्- (for त) B2 D6 आगत्य (for °म्य) V2 सुस्वन, B1 4 नि स्वन (for स स्वन)]

—Thereafter B2 cont

234* न दृष्ट न श्रुत तत्तु परमाश्चर्यरूपकम् ।

2 For sequence in S1 D1–4 10, cf v l 1 Ś1 Ñ1 D1–4 10 11 transp 2 and 3 (Ś1 D10 om $3^{ab}$) —$^{a}$) V2 सार्ध, D2 दृश (for अध-) Ñ2 V2 B D1 3 4 6 M1 2 -विस्तारम्, Ch t as in text (for विस्तीर्णम्) —$^{b}$) D5 7–9 T2 M1 महत् (for हि तत्) Ś1 Ñ V B D1–4 6 10 11 सार्ध (Ñ2 V B D6 अर्ध, D1–4 साग्र, D11 साग्र)योजनमायत (V2 °मुच्छ्रित) —After $2^{ab}$, Ñ2 V B D6 ins

235* काञ्चनस्तम्भसबाध मणिकाञ्चनतोरणम् ।
मुक्ताजालप्रतिच्छन्न सर्वकामफलद्रुमम् ।
नातिशीत न चात्युष्ण सर्वर्तुसुखद शुभम् ।
दिव्य कामगम दृष्ट्वा प्रवालोच्छ्रिततोरणम् ।

[(l 1) B3 माणिक्य- (for second काञ्चन-) —(l 2) B3 -परिच्छिन्न (for -प्रतिच्छन्न) V B1 3 D6 -फलप्रद —B3 om l 3 —(l 4) Ñ2 V1 दिव्य- (for दिव्य) B1 प्रवालाचित-]

—Thereafter, V2 reads 245* —Ñ2 V1 B D6 read 1 and $2^{cd}$ (including star passages) after 245*. V2 reads $2^{cd}$ after $15^{cd}$ —$^{c}$) Ś1 Ñ1 D1–4 10 11 तद्गृह, Ñ2 V B D6 सुगुप्त (for भवन) V2 राक्षसेन्द्रेण —$^{d}$) D5 -सयुत (for -सकुलम्) Ñ2 V B D6 बहु (V2 वर)प्राकारशोभित

3 For sequence in Ś1 D1–4 10, cf v l 1 B3 om $3–15^{d}$ Ñ2 V1 B1 2 4 D6 om $3–14^{b}$ V2 om $3^{ab}$ Ś1 Ñ1 D1–4 10 11 transp 2 and 3 (S1 D10 om $3^{ab}$) —$^{a}$) Ñ1 D1–4 11 स मार्गमाणो (for मार्गमाणस्तु) —$^{b}$) Ñ1 मलिनलोचना, D2 11 कमललोचना (for आयत°) —V2 reads $3^{cd}$ and 6–9 after 29 (preceded by 251*) —$^{c}$) Ś1 Ñ1 V2 D1–4 10 11 वानर (for सर्वत) ⁂ Cv m सर्वत पुष्पकादन्यत्र सर्वत्र ⁂ —$^{d}$) Ś1 Ñ1 V2 D1–4 10 11 शत्रुसूदन, D5 G3 रिपुसूदन —After 3, D5 7–9 S ins

236* उत्तम राक्षसावास हनुमानवलोकयन् ।
आससादाथ लक्ष्मीवान्राक्षसेन्द्रनिवेशनम् ।

[(l 1) D8 राक्षसेंद्रस्य ह्यावासम् (for °मावास हनुमान्)]

4 For sequence in Ś1 D1–4 10, cf v l 1 Ñ2 V1 B D6 om 4 (cf v l 3) V2 om. 4–5 Ñ1 illeg from द्विं in $^{a}$ up to $^{b}$ —$^{a}$) Ś1 D1–4 10 11 च गजैर् (for द्विरदैर्) —$^{b}$) Ś1 D1–4 10 11 T2 द्विविषाणैर् —$^{c}$) D11 असबद्ध —$^{d}$) D1 2 4 6 11 रक्षमाणम् Ñ1 रक्षोभिरायत्त महत (sic)

5 For sequence in Ś1 D1–4 10 cf v l 1 Ñ2 V B D6 om 5 (cf v l 3 and 4) —$^{a}$) Ś1 D2 10 सपत्नीभी, D1 3 4 11 च पत्नीभी (for च पत्नीभी) G2 राक्षसैं

G 5 13 0 / B 5 8 7 / L 5 5 5
तन्नक्रमकराकीर्णं तिमिंगिलझषाकुलम् ।
वायुवेगसमाधूतं पन्नगैरिव सागरम् ॥ ६
या हि वैश्रवणे लक्ष्मीर्या चेन्द्रे हरिवाहने ।
सा रावणगृहे सर्वा नित्यमेवानपायिनी ॥ ७
या च राज्ञः कुबेरस्य यमस्य वरुणस्य च ।
तादृशी तद्विशिष्टा वा ऋद्धी रक्षोगृहेष्विह ॥ ८
तस्य हर्म्यस्य मध्यस्थं वेश्म चान्यत्सुनिर्मितम् ।
बहुनिर्यूहसंकीर्णं ददर्श पवनात्मजः ॥ ९
ब्रह्मणोऽर्थे कृतं दिव्यं दिवि यद्विश्वकर्मणा ।
विमानं पुष्पकं नाम सर्वरत्नविभूषितम् ॥ १०
परेण तपसा लेभे यत्कुबेरः पितामहात् ।
कुबेरमोजसा जित्वा लेभे तद्राक्षसेश्वरः ॥ ११
ईहामृगसमायुक्तैः कार्तस्वरहिरण्मयैः ।
सुकृतैराचितं स्तम्भैः प्रदीप्तमिव च श्रिया ॥ १२

सह पत्नीभी ॐ Cv पुष्पकारोहणस्य पश्चाद्वक्ष्यमाणत्वाद्राक्षसीभिरित्यादौ श्लोकद्वयेऽप्यासत्तादेति सबन्ध । रावणस्य निवेशनमिति पुनरुपादान पूर्वविशेषणविवक्षया ॐ

6 For sequence in Ś1 D1–4 10, cf v l 1 Ñ2 V1 B D6 om 6 (cf v l 3) For sequence in V2, cf v l 3 —$^{a}$) Ś1 D10 तत्कूर्म , Cv r g as in text (for तन्नक्र-) —$^{b}$) Ś1 D11 G1 3 M3 तिमिगल-, M1 तिमिमीन , Cv r g as in text (for तिमिंगिल-) —$^{c}$) Ś1 D10 समप्रख्य, V2 D1 4 -समुद्धूत, D2 3 11 -समुद्भूत, D8 G1 -समाधूंत (for -समाधूत)

7 For sequence in Ś1 D1–4 10, cf v l 1 Ñ2 V1 B D6 om 7 (cf v l 3) For sequence in V2, cf v l 3 —$^{a}$) Ś1 Ñ1 V2 D1 4 10 11 च (for हि) —$^{b}$) Ñ1 V2 D2 5 9 T2 3 G3 M3 चन्द्रे (for चेन्द्रे) Ś1 हरिवाहिनी (sic) —$^{c}$) D3 om सा (subm ) D1 4 T2 रावणस्य गृहे (for सा रावणगृहे) Ś1 Ñ1 D10 लक्ष्मीर् , V2 D1 2 4 पद्मा, D3 7–9 रम्या, D11 यस्मान् (for सर्वा). —$^{d}$) ॐ Cr या हि वैश्रवण इति श्लोकद्वयेन वैष्णवेन्द्रयोर्ग्रहणमितरदिक्पालानामुपलक्षणम् ॐ

8 For sequence in Ś1 D1–4 10, cf v l 1 Ñ2 V1 B D6 om 8 (cf v l 3) For sequence in V2, cf v l 3 —$^{a}$) G3 हि (for च) Ś1 Ñ1 V2 D1–4 10 11 यादृश हि (for या च राज ) —$^{c}$) D5 तद्विशेषा (for °शिष्टा ) Ś1 V2 D1–4 10 11 तादृश तद्विशिष्ट च ( V2 D2 वा ) —$^{d}$) M1 लक्ष्मी (for ऋद्धी ) D5 [ अ ]पि, D9 G3 M1 [ इ ]व, T2 [ अ ]हो, G1 2 वै (for [ इ ]ह ) Ś1 Ñ1 V2 D1–4 10 11 तस्य रक्ष पतेर्गृह

9 Ñ2 V1 B D6 om 9 (cf v l 3) For sequence in V2 and D1 3 4, cf v l 3 and 1 respy —$^{a}$) G3 हर्म्यसु- (for हर्म्यस्य ) —$^{b}$) D6 सुनिर्मल —For 9$^{ab}$, Ś1 Ñ1 V2 D1–4 10 11 subst (D1 4 repeat after 9$^{cd}$ and D3 repeats before 9$^{cd}$ )

237* वेश्मनस्तस्य मध्यस्थमन्यद्वेश्म विनिर्मितम् ।
[ Ś1 D10 तस्यान्त (for मध्यस्थ ) ]

—After 237* (first time), D1 3 4 cont

238* निर्यूहाष्ट तु निर्यूह स्तम्भमित्तिषु यद्भवेत ।
[ D1 निर्यूह (for निर्व्यूह) ]

—$^{c}$) V2 D11 दिव्य- (for बहु-) D8 9 -निर्व्यूह- Ś1 Ñ1 D1–4 दिव्य निगूढ-(D1 3 4 °र्व्यूह-) D7 9 सयुक्त (for -सकीर्ण) —$^{d}$) Ś1 V2 D1–4 10 11 हनुमान्कपि , Ñ1 हरियूथप (for पवनात्मज ) ॐ Cv g तस्य हर्म्यस्येत्यादे पूर्वमुक्तार्थस्यापि पुनरुपन्यास पुष्पकस्य मध्ये रावणस्य निवासभवनमन्यदस्तीत्यस्यार्थस्य स्पष्टीभावार्थ ।, Cr तस्य हर्म्यस्य पूर्वोक्तविशेषणविशिष्टस्य रावणभवनस्य ।, Cm तस्य हर्म्यस्येत्यादिश्लोकत्रयस्य पवनात्मजस्तद्विमान ददर्शेति सबन्ध ।, Ck तस्य हर्म्यस्येति। अर्धयोजनविस्तीर्णमित्याद्युक्तरूपहर्म्यस्येत्यर्थ । वेश्मेति। सस्त्रीकशयनगृहम् ।, Ct तस्य हर्म्यस्यार्धयोजनविस्तीर्णत्वादिधर्मेण । वेश्म सस्त्रीकशयनगृहमिति कतक । वेश्म पुष्पकाख्यमिति तीर्थ । अत्र तीर्थव्याख्या ज्यायसी ॐ

10 Ñ2 V B D6 om 10 (for all except V2, cf v l 3) —$^{a}$) Ś1 Ñ1 D2 10 ब्रह्मार्थं हि, D1 3 4 ब्रह्मणो( D1 °णे ) हि, Cr g k t as in text (for °णोऽर्थे ) D11 ब्रह्मार्थं कृतदिव्य हि —$^{b}$) D8 M1 विधिवद् (for दिवि यद् ) —$^{d}$) Ś1 D1–4 10 11 सर्वकामगम शुभ, Ñ1 सर्वकामफलप्रद ॐ Cr ब्रह्मणो इत्यादि। यद्ब्रह्मणोऽर्थे कृत यत्कुबेरस्तपसा लेभे तद्वेश्म ददर्शेति पूर्वेण सबन्ध । कुबेर इत्यारभ्य सर्वत समलकृतमित्यन्तमेक वाक्यम् । अतो वक्ष्यमाणेन कूटागारशब्देन न पौनरुक्त्यम् ।, Cg ब्रह्मणोऽर्थे इत्यादि। ब्रह्मणोऽर्थे कृत यत्कुबेरस्तपसा लेभे तद्वेश्म ददर्शेति पूर्वेण सबन्ध ।, Ck ब्रह्मणोऽर्थे इत्यादि। भगवल्लीलाप्रयोजनायेत्यर्थ ।, Ct ब्रह्मणोऽर्थे इति। भगवतो लीलाफलकमित्यर्थ . ॐ —After 10, Ñ1 ins

239* ... ग दिव्यसकाश चन्द्रादित्यसुख शुभम् ।

11 Ñ2 V1 B D6 om 11 (cf v l 3) —$^{a}$) D5 G1 वरेण (for परेण ) —D10 om 11$^{cd}$ —$^{cd}$) Ś1 Ñ1 V2 D1–4 11 कुबेरादो( Ś1 Ñ1 D2 °त्ते )जसा लेभे रावणस्तद्गृहोत्तम

12 Ñ2 V1 B D6 om 12 (cf v l 3) —$^{a}$) Ñ1 V2 D11 G2 -गणाकीर्णै( G2 °युक्तै ), D1–4 समायुक्त (for -समायुक्तै ) Ś1 D10 चित्रैर्मृगै समायुक्त —$^{b}$) D1–4 -विभूषित, T2 3 G2 -विभूषितै (for हिरण्मयै ) G1 कार्तस्वरमयैर्वरै ॐ Ct कार्तस्वरहिरण्ये स्वर्णजातिविशेषौ रूप्यस्वर्णे इति कश्चित् ॐ —$^{c}$) Ś1 Ñ1 D10 सुकृत चावृत, V2

मेरुमन्दरसंकाशैरुल्लिखद्भिरिवाम्बरम् ।
कूटागारैः शुभाकारैः सर्वतः समलंकृतम् ॥ १३

ज्वलनार्कप्रतीकाशं सुकृतं विश्वकर्मणा ।
हेमसोपानसंयुक्तं चारुप्रवरवेदिकम् ॥ १४

जालवातायनैर्युक्तं काञ्चनैः स्फाटिकैरपि ।
इन्द्रनीलमहानीलमणिप्रवरवेदिकम् ।
विमानं पुष्पकं दिव्यमारुरोह महाकपिः ॥ १५

तत्रस्थः स तदा गन्धं पानभक्ष्यान्नसंभवम् ।
दिव्यं संमूर्छितं जिघ्रद्रूपवन्तमिवानिलम् ॥ १६

G. 5 13 6
B 5 9 20
L. 5 5 41

D1 3 4 11 सु( V2 स्व, D3 स )वृत्तैरावृत, D2 6 सुकृतैरावृत, D7 9 °त राजित, D8 °ते राजत-, T2 G2 M1 सुकृतं राजते, M2 सुकृतराचितं (for सुकृतैराचित)

13 Ñ2 V1 B D6 om 13 (cf v l 3) —[b]) D3 उल्लिखतम्, D8 G1 आलिखद्भिर् (for उल्लिखद्भिर्) —[c]) Ś1 D10 शुभाचारैः, Ñ1 D1-6 9 M2 शुभागारैः, V2 भाडागारैः (for शुभाकारैः) D7 कूटागारायुधागारैः

14 B3 om 14, Ñ2 V1 B1 2 4 D6 om 14[ab] (for both, cf v l 3) —[a]) Ś1 Ñ1 D1-4 7.9-11 T2 G2 3 M2 -प्रतीकाशैः, Cr as in text (for -प्रतीकाशं) —[b]) V2 D1 3 4 11 सुकृतैर् (for सुकृत) —[c]) D7 9 G1 2 -युक्त च (for -संयुक्त) —G2 om (hapl ) 14[d]-15[a] —For 14[cd], Ś1 Ñ V B1 2 4 D1-4 6 10 11 subst (Ñ2 V1 B1 2 4 D6 read after 1)

240* हेमजालप्रतिच्छन्नं रुक्मवैदूर्यवेदिकम् ।

[ B1 परिच्छन्न, D11 परिच्छिन्न D1 3 4 मुक्ता- (for रुक्म-) Ñ2 V1 B1 2 4 D6 तोरण D1 4 वेदिका D11 वैडूर्यमणिवेदिका (for the post half) ]

—Thereafter S1 Ñ1 V2 D1-4 10 11 cont

241* सर्वरत्नसमाकीर्णं तपनीयविचित्रितम् ।

[ D1 3 4 11 -समायुक्त (for °कीर्णं) ]

15 Ñ2 V1 B D6 om 15[a-d] (for B3, cf v.l 3) G2 om 15[a] (cf v l 14) —[b]) D2 9 10 स्फटिकैर् —After 15[ab], Ś1 Ñ1 V2 D1-4 10 11 ins

242* हेमैराभरणैः श्लक्ष्णैः प्रसृतैः सुसमाहितैः ।

[ Ś1 D2 10 आरोहणै (for आभरणैः) V2 तीक्ष्णैः, D11 सूक्ष्मै (for श्लक्ष्णैः) D1 3 4 11 प्रथितैः (for प्रसृतैः) D4 सुसमाहित ]

—[c]) D3 इदानीं त (for इन्द्रनील-) G3 -महानील ❀ Ck जालवातायनकार्तस्वरकाञ्चनसध्वासवाद्रिप्रयोगा इह्ल्या सर्वत्र कथचिदवान्तरभेदप्रकल्पनेन नेया । कनिष्ठली किं कुर्मः ।, Ct जालवातायनयो काञ्चनकार्तस्वरयोर्मध्वासवयोश्च कश्चिद्भेद परिकल्प्य निर्वाह । एवमिन्द्रनीलमहानील्योरपि ❀ —After 15[ca], Ś1 D1-4 10 ins a passage relegated to App I (No 2), V2 reads 2[cd], while D5-9 S ins

243* विद्रुमेण विचित्रेण मणिभिश्च महाधनैः ।
निस्तुलाभिश्च मुक्ताभिस्तलेनाभिविराजितम् ।
चन्दनेन च रक्तेन तपनीयनिभेन च ।
सुपुण्यगन्धिना युक्तमादित्यतरुणोपमम् ।

[ (l 1) G1 विद्रुमैश्च विचित्रैश्च (for the prior half) —(l 2) D6 8 T2 Cv k निस्तलाभिश्, Cr m g t निस्तुलाभिश् (as above) M1 स्थलेन (for तलेन) —(l 4) D8 M1 -गन्धिन (for °ना) M1 तरुणादित्यसंनिभ (for the post half) ❀ Cv g निस्तु( Cv °स्त )लाभिर्वृत्ताकाराभि । आदित्यतरुणोपमम् । तरुणादित्योपमम् । एतदन्ते ‘ लेभे तद्राक्षसेश्वर ’ इति सबध्यते । कूटागारपुनरुक्तिपरिहाराय (Cg °ध्यते । अन्यथा कूटागारैरित्यनेन पुनरुक्ति स्यात् ) ।, Cr निस्तुलाभिमुक्ताभिश्च करणं । विचित्रेण तलेन विराजितमिति सबन्ध । आदित्यतरुणोपमम् । तरुणादित्योपमम् । उपसर्जनस्य परनिपात आर्ष ।, Cm निस्तुलाभिर्वर्तुलाभिर्मुक्ताभिश्च करणैर्विचित्रेण तलेन कुट्टिमेन विराजितमिति सबन्ध । आदित्यतरुणोपमम् । तरुणादित्योपमम् । Ck निस्तलाभिवर्तुलाभि । तलेन कुट्टिमप्रदेशेन । Ct निस्तुलाभिवर्तुलाभिर्निरुपमाभिर्वा । तलेन कुट्टिमप्रदेशेन ❀ ]

—Thereafter D6 T2 G1 3 M cont, D8 ins after 15[ef]

244* कूटागारैर्वराकारैर्विविधैः समलंकृतम् ।

[ D8 महागारैः, G1 3 शुभाकारैर् M1 वराग्रैश्च (for वराकारैर्) D8 सवत (for विविधैः) ]

—Ś1 D10 om 15[ef] —For 15[ef], Ñ V1 2( subst and reads after 235*) B D1-4 6 11 subst

245* आरुरोह हरिश्रेष्ठो विमानं पुष्पकं महत् ।

[ D11 आरुह्य स (for आरुरोह) —After the prior half, Ñ1 ins

245(A)* हनुमान्मारुतात्मज ।

Ñ1]D1-4 शुभ B1 नत, D11 तदा (for महत्) ]

—Thereafter Ñ2 V1 B D6 read 1 and 2[cd] (including star passages)

16 [a]) D5-9 G1 सर्वतो, T2 G1 3 M1 2 स ततो (for स तदा) —[b]) G1 पान —For 16[ab], Ś1 D10 subst

246* तत प्रसक्त सौगन्ध्य पानमन्योन्यभूषणम् ।

[ D10 प्रसक्तो गन्ध त (for प्रसक्त सौगन्ध्य) ]

while Ñ1 D1-4 11 subst

247* स्थित स तत्र त गन्ध माल्यपानादभक्षजन् ।

[ Ñ1 illeg up to तत्र ; D2 11 स तत्र ... 

G 5 13 9
B 5 9 20
L 5 5 42

स गन्धस्तं महासत्त्वं बन्धुर्बन्धुमिवोत्तमम् ।
इत एहीत्युवाचेव तत्र यत्र स रावणः ॥ १७

ततस्तां प्रस्थितः शालां ददर्श महतीं शुभाम् ।
रावणस्य मनःकान्तां कान्तामिव वरस्त्रियम् ॥ १८

मणिसोपानविकृतां हेमजालविराजिताम् ।
स्फाटिकैरावृततलां दन्तान्तरितरूपिकाम् ॥ १९

मुक्ताभिश्च प्रवालैश्च रूप्यचामीकरैरपि ।
विभूषितां मणिस्तम्भैः सुबहुस्तम्भभूषिताम् ॥ २०

(D11 गवाक्ष) (for the prior half) Ñ1 पानमाल्यानुभक्षज, D11 पानमाल्यानभोजन (for the post half) ]

—c) D5 8 T2 M1 2 समुच्छ्रित, Ck t as in text (for सम्मूर्छित) Ś1 D2 10 जघ्रौ, D6 8 11 T1 M3 Cv r m g जिघ्रद्, Ck t as in text (for जिघ्रन्) ✻ Cv जिघ्रत। अजिघ्रन। अडागमशासनस्यानित्यत्वादडागमाभाव ।, Cr जिघ्रत्। अजिघ्रत्। अडभाव आर्ष ।, Cm g जिघ्रत। अजिघ्रत् ✻ —d) D7–9 G1 [अ]नल, D11 [अ]चल, Cr m k t as in text (for [अ]निलम्) —For 16, Ñ2 V B D6 subst

248* वना च तत्र सुरभि पानमाल्यानुलेपनं ।
दिव्य सम्मूर्छितो गन्धो रूपवानिव मारुत ।

[(l 1) V2 -माल्योपलेपनै —(l 2) B2 (m) समुत्थितो, B3 समन्वितो (for सम्मूर्छितो) ]

17 a) B1 सुगधिस्त, B2 3 सुगधस्त, B4 सुगधस्व, D3 सगधस्व (for स गन्धस्त) V2 यत्र यत्र जगामासौ —b) V2 हरिर् (for बन्धुर्) V2 [उ]त्थित, B3 [उ]त्थित, M1 [आ]गत (for [उ]त्तमम्) Ñ2 V1 B1 2 4 D6 बन्धु बन्धुरिवोत्थित —c) Ś1 Ñ2 V B1 2 4 D1–4 6 10 [ए]न, B3 [अ]थ, D11 [इ]दं (for [इ]व) —d) D1 3 4 8 T2 यत्र (for तत्र) Ñ2 B1 2 4 D1 3 4 6 8 तत्र, Ck t as in text (for यत्र) Ñ2 V1 B1 2 4 D6 वानर, D11 वानर (sic) (for रावण) V2 तत्र यत्र पताकया, B1 प्रवीर त स वानर ✻ Ck यत्र स रावणो यस्मिन्गृहे स रावणस्तत्रेत एहीत्युवाचेव। दिव्यगन्धेन रावणो यत्र शेते तद्गृह ज्ञातवानित्यर्थ ।, Ct यत्र स रावणस्तत्र स्थान इत एहीत्युवाचेव। उक्तगुणवायु कर्ता। दिव्यगन्धेन रावणशयनगृह ज्ञातवानित्यर्थ ✻

18 a) D7 11 T1 G3 तत्रस्था, Cr m k t as in text (for ततस्ता) Ñ V B D6 स(Ñ1 स)प्रस्थित (for ता प्रस्थित) —b) D7–9 शिवा (for शुभाम्) —c) B4 स ..., D7 9 महा, D11 मणि- (sic) (for मन-) ✻ Cr m ततस्तामित्यारभ्य ता शोकनाशिनीं दिव्या श्रिय सजननीमिवेत्यन्तमेक वाक्यम्। एकमन्यच्च प्रस्थित इत्यनेन सबध्यते। अपरो ददर्शेत्यनेन।, Ck "ततस्ता प्रस्थित शालाम्" इति ल्यब्लोपे पञ्चमी। तस्मा पुष्पकादवरुह्य ता रावणशयनशाला प्रति प्रस्थित सन्ता शाला ददर्श। परस्तु ततस्तस्मादुर्ध्व सन्तानामित्यत्र पुष्पकस्था शाला प्रस्थित सन्ता पुष्पकस्था रावणशयनशाला ददर्शेति तदसत। स्थिरगुप्तमूप्रतिष्ठितस्वगृह एव सस्त्रीकशयनस्योचितत्वात्प्रस्थित इत्युक्तिवैयर्थ्याच्च। अपि च अर्धयोजनविस्तीर्णमित्यादिना मूलालयप्रदर्शनोपक्रमवैयर्थ्यं च। अत्र मूलालयदर्शनानन्तर तद्बहि प्रतिष्ठित पुष्पकमेव तावदन्विष्य पश्चाद्रावणमूलालय विचेष्यामीति धिया पुष्पकारोह। तस्मिन्विचिते तत्स्थ एव सन्दिव्यगन्धेन रावणशयनगृहमनुमाय ता प्रति पुष्पकादवरुह्य प्रस्थित सस्तदा ददर्शेति न्याय्य मन्यामहे मूलालयवर्णनम्।, Ct ततस्तस्मात्पुष्पकादवरुह्य गन्धानुमिता ता रावणशयनशाला प्रस्थितस्ता शाला ददर्श। यत्तु पुष्पकस्यैव सा शाला तत इत्यस्य तदनन्तरमित्यर्थ इति, तच्चिन्त्यम्। प्रस्थित इति पदस्वारस्यात्। अर्धयोजनविस्तीर्णमित्यादिना मूलालयप्रदर्शनोपक्रमाच्च। मूलालय दृष्ट्वा तद्बहि स्थ पुष्पकमन्विष्य तत्स्थ एव रावणशयनगृह तद्गृहवर्त्यनुमाय पुष्पकादवरुह्य त प्रति प्रस्थितस्ता ददर्शत्येव न्याय्यमिति कतक। यत्त्वित्यादिनोक्ता व्याख्यैव युक्तेति मम भाति। "अवतीर्य विमानाच्च हनुमान्मारुतात्मज" इत्यग्र उपसहारात ✻

19 a) Ś1 Ñ1 D10 -सुकृता, V B D6 -वितता (for -विकृता) —b) Ñ2 D6 G2 M3 -विभूपिता, G1 3 -विराजता (for -विराजिताम्) —c) Ñ1 illeg for स्फाटिकैरावृत Ś1 Ñ2 V B D1–4 6 10 11 स्फाटिकप्रावृततला (D10 °लता [meta]) —d) Ś1 D10 धात्वतरित-, V1 B1 4 दताताचित, V2 ततास्तुतित- (sic), B2 दताताचित-, B3 दतचित्रित-, D11 दत्तात्वरित (corrupt) (for दन्तान्तरित) Ś1 Ñ2 V B D1–4 6 10 11 रूपका (for रूपिकाम्)

20 B3 om 20ab —a) Ś1 Ñ V B1 2 D1–4 6 10 11 मुक्तामणि-, B4 मणिमुक्ता-, D7–9 G1 मुक्तावज्र- (for मुक्ताभिश्च) V2 तु (for second च) —b) V2 B1 रौप्य- (for रूप्य-) G3 तथा (for अपि) —c) Ñ2 V B1 2 4 D6 विभूषितैर् (V2 °पणैर्) (for विभूषिता) Ś1 Ñ1 D1–4 10 11 विभूषितमणिस्तभा —d) Ś1 D1–4 10 सुवर्ण (for सुबहु-) D1 3 4 11 -मडिता (for -भूषिताम्) Ñ2 V B D6 समतादुपशोभिता, D8 बहुस्तभविभूषिता, T2 समतात्सुविभूषित, M1 सुभगैश्च विभूषिता ✻ Cr सुबहुस्तम्भभूषित। स्वस्मिन्परितो विनिर्मितावान्तरसुबहुस्तम्भभूषित। भूषितामिति पाठे सुवर्णादिसुबहुस्तम्भभूषितामित्यर्थ।, Cm सुबहुस्तम्भभूषितामित्यत्र बहुत्वविधानाय स्तम्भानुवादान्न पौनरुक्त्यम्।, Cg सुबाहुस्तम्भभूषिताम्। अवान्तरबहुस्तम्भभूषिताम्। सुबहुस्तम्भभूषितैरिति पाठे सुबहुस्तम्भ स्तम्भदार्वाकारैपट्टैरलङ्कृतामित्यर्थ।, Ct बहुत्वबोधनाय पुन स्तम्भानुवाद। बहुत्व च विपुलत्वम ✻

गर्भैर्ऋजुभिरत्युच्चैः समन्तात्सुविभूषितैः ।
स्तम्भैः पक्षैरिवात्युच्चैर्दिवं संप्रस्थितामिव ॥ २१

महत्या कुथयास्तीर्णां पृथिवीलक्षणाङ्कया ।
पृथिवीमिव विस्तीर्णां सराष्ट्रगृहमालिनीम् ॥ २२

नादितां मत्तविहगैर्दिव्यगन्धाधिवासिताम् ।
परार्ध्यास्तरणोपेतां रक्षोधिपनिषेविताम् ॥ २३

धूम्रामगरुधूपेन विमलां हंसपाण्डुराम् ।
चित्रां पुष्पोपहारेण कल्माषीमिव सुप्रभाम् ॥ २४

मनःसंह्लादजननीं वर्णस्यापि प्रसादिनीम् ।
तां शोकनाशिनीं दिव्यां श्रियः संजननीमिव ॥ २५

इन्द्रियाणीन्द्रियार्थैस्तु पञ्च पञ्चभिरुत्तमैः ।
तर्पयामास मातेव तदा रावणपालिता ॥ २६ G 5 13 18 B 5 9 30 L 5 5 51

21 Ñ1 partly illeg for $^{ab}$ —$^{a}$) V1 ध्वजाभिर्, B1 उत्लङ्घिर् (for ऋजुभिर्) B3 D2 3 11 अत्युग्रै, D6 इत्युच्चै (for अत्युच्चै) —$^{b}$) D2 च, D4 स- (for सु-) Ñ1 D1–4 T1 G3 -विभूषिता (D2 3 °त), Ct as in text (for °षितैः) Ś1 D10 समेता च विभूषिता, Ñ2 V B D6 सर्वतः समलंकृतैः (V1 °ता, V2 °त) —$^{c}$) B1 ध्वजैस् (for पक्षैर्) Ñ2 V1 B D6 तथा (for इव) Ñ1 [अ]त्युग्रैर् (for °च्चैर्) —Ñ1 illeg from 21$^{d}$ up to 22$^{a}$ —$^{d}$) D1 3 4 11 Ck दिवि, D2 6 दिव, Cr m g as in text (for दिवं) Ś1 D2 6 10 संप्रस्थितैरपि, Ñ2 V1 B1 2 4 संप्रस्थितैरिव; Cm k t as in text (for °तामिव) V2 विविधैः सस्थितैरपि

22 Ñ1 illeg for 22$^{a}$ (cf v l 21) Ś1 D10 om 22$^{ab}$ —$^{a}$) B1 (m also as in text) कक्षया, D3 11 कुप्यया (for कुथया) Ñ2 V2 B1 D7 [आ]स्तीर्णं, D1–4 8 [आ]कीर्णां (for [आ]स्तीर्णां) —D2 transp $^{b}$ and $^{d}$ —$^{b}$) B3 -लक्षणान्विता, B4 लक्षणाक्षया (sic) (for °णाङ्कया) D2 स ता नूपुरमालिनीं —After 22$^{ab}$, D1 wrongly reads 22$^{b}$ —$^{d}$) G2 सुराष्ट्र- (for सराष्ट्र-) Ñ V1 D2 11 -मालया, D9 -पालिनी, T2 Ct -शालिनीं (for -मालिनीम्) Ś1 D10 शाला नूपुरशा (D10 °मा)लिनीं, V2 B1 (marg also) 2–4 सु (B1 स)राष्ट्रगृहमालया, B1 स्फाटिकास्तरणावृता, D1 3 4 6 सराष्ट्रा गृहमाल्या, M1 सुराष्ट्रग्राममालिनीं

23 $^{a}$) Ś1 उदिता, Ñ2 V1 B D6 उपेता (for नादिता) Ś1 Ñ1 D4 11 यत्र, D1–3 10 यत्र- (for मत्त-) —$^{b}$) V2 -गधादिवासिता, B1 -गधसुवासितैं, D8 -गधविवासिता, D11 -गधैश्च वासिता —B3 om (hapl ?) 23$^{cd}$ —$^{c}$) Ś1 V2 D1 2 10 -[आ]स्तरणैर्जुष्टा (V2 °र्युक्ता), Ñ2 V1 B1 2 4 D6 शयनैर्जुष्टा, D3 4 11 -[आ]भरणैर्जुष्टा (for -[आ]स्तरणोपेता) —$^{d}$) G3 रक्षोगण- (for रक्षोधिप) D5 -निवेदिता (for -निषेविताम्) Ś1 Ñ1 B1 D1–4 6 10 11 रक्षोधिपतिसेविता

24 V1 illeg from 24–52 —$^{a}$) V2 आगुरु, D5 8 अगुरु- (for अगरु-) Ś1 Ñ1 D2 10 धूपे (D2 °पै)नागुरु धूपाणा (Ñ1 °पेन), B3 स्वस्तामगरु धूपेन D1 3 4 11 धूपेनागरुणा चाद्या (D4 वाद्या), D6 रसदामागरुधूपेन —$^{b}$) Ś1 D2 10 हंसपाण्डुरा, Ñ2 B D6 हंसपक्तिभि (for हंसपाण्डुराम्) Ñ1 नाना [illegible] (illeg), G1 विमलागा सपाण्डरा —After 24$^{ab}$, Ñ1 reads a line which is illeg —$^{c}$) Ś1 D10 पूर्णां, D7 9 पत्र- (for चित्रां) Ś1 पुष्पोपका ([marg also] °हा)रेण, Ñ2 D6 G1 पुष्पोपहारैश्च Ñ1 चित्रमाल्योपहारेण —$^{d}$) Ñ2 B1 4 D6 10 कल्मषा (B1 °ल्याणा)मिव, V2 कल्माषग्रीव- (for कल्माषीमिव) T2 सप्रभा Ś1 कल्मषा सुप्रभामिव, B2 कल्मषामिव च प्रभा, B3 कल्याभिव च सुप्रभा

25 V1 illeg for 25 (cf v l 24) —$^{a}$) Ñ1 मनःप्रहर्ष-, Ñ2 B1 2 4 D6 मनःप्रह्लाद-, V2 मनःप्रसादि-, B3 मनःप्रसाद-, D1 मनःसहृदे (sic), D5 T2 G1 M1 मनसो ह्लाद-, D7 9 मनसो मोद-, G3 मनसा ह्लाद- (for मनःसंह्लाद-) —$^{b}$) Ś1 D10 कामस्य, Ñ2 D6 चित्तस्य (for वर्णस्य) Ñ B1 D7–9 T3 G2 Cg t प्रसाधि (B1 °ध)नीं, B2 4 D1–3 10 M2 प्रसादनीं (for °दिनीम्) D4 रावणस्य प्रसादनीं, T2 वर्णस्यातिप्रसाधिनीं —$^{c}$) D7 T2 3 M2 शोकनाशनीं Ś1 Ñ2 B D1–4 6 10 11 हृच्छोक (D2 °प)नाशि (B1 2 D1–4 11 °श)नीं, V2 कृच्छ्रोरनाशिनीं (for तां शोकनाशिनीं) —$^{d}$) Ś1 Ñ1 D1–4 10 श्रेय D11 सेय (for श्रियः) G1 M2 अपि (for इव) V2 श्रेयसा जननीमिव ⊛ Cv 'ततस्तां प्रस्थितः' इत्येतदारभ्य 'श्रियः संजननीमिव' इत्येतदन्ते वाक्यार्थे प्रथमस्तां शब्दः प्रस्थितः इत्यनेन संबध्यते । द्वितीयो ददर्शेत्यनेन । तां प्रस्थितस्तां ददर्शेति ।, Cg तां शोकनाशिनीमिति । ततस्तामिति वर्तमाने पुनस्तच्छब्द उपसंहारार्थः । तां प्रति प्रस्थितो ददर्शेति वा संबन्धः ⊛

26 V1 illeg for 26 (cf v l 24) —$^{a}$) Ś1 G3 इन्द्रियाने (for इन्द्रियाणि) Ś1 Ñ V2 B D2 6 10 च (for तु) D11 [इ]न्द्रियार्थाश्च D1 3 4 इन्द्रियाणा प्रियार्थैश्च —$^{b}$) Ś1 Ñ1 D2 10 समं, Ñ2 V2 B1 3 4 D3 4 6 11 सम, B2 स्वय (for पञ्च) —V2 B1 om 26$^{cd}$ —$^{c}$) D11 तर्जयामास Ñ1 D1–4 सतत, D11 स तदा (for मातेव) Ś1 D10 तर्पयन्ती च सतत Ñ2 B2–4 D6 तर्पयन्तीमिव शुद्ध —$^{d}$) Ś1 Ñ B2–4 D6 10 M1 सदा, D2 मात (corrupt) (for तदा) Ś1 Ñ B2–4 D2 6 8 10 -सेविता (D9 10 °त, D8 °ता) (for पालिता) D1 3 4 रक्षोधिपनिषेवित D11 राक्षसाधिपसेविता —After 26, Ñ2 B4 ins 250*, while D7 reads 5 5 26–42$^{b}$ (o n 41)

G 5.13 20
B 5 9 30
L 5 5 52

स्वर्गोऽयं देवलोकोऽयमिन्द्रस्येयं पुरी भवेत् ।
सिद्धिर्वेयं परा हि स्यादित्यमन्यत मारुतिः ॥ २७
प्रध्यायत इवापश्यत्प्रदीपांस्तत्र काञ्चनान् ।
धूर्तानिव महाधूर्तैर्देवनेन पराजितान् ॥ २८
दीपानां च प्रकाशेन तेजसा रावणस्य च ।
अर्चिर्भिर्भूषणानां च प्रदीप्तेत्यभ्यमन्यत ॥ २९
ततोऽपश्यत्कुथासीनं नानावर्णाम्बरस्रजम् ।
सहस्रं वरनारीणां नानावेषविभूषितम् ॥ ३०

27 V1 illeg for 27 (cf v l 24) —[a]) Ñ1 D11 ब्रह्म- (for देव ) Ś1 D10 स्वर्गार्थं देवलोकार्थम्, D7 ब्रह्मलोकोयमिति च —[b]) D7 9 इन्द्रस्यापि, M1 गाधर्वीय (for इन्द्रस्येय ) Ś1 Ñ B D1–4 6 10 11 इय सिद्धि परा(Ś1 D10 °द्धिप्रदा )भवेत ( Ñ1 मता ), V2 इति सिद्धि परा मता —[c]) D8 G2 M2 गाधर्वीय (for सिद्धिर्वेय ) T3 G3 M2 पुरा, G2 M1 पुरी (for परा) D8 सिद्धिद् (for हि स्याद् ) ❀ Cv स्वर्गोऽयमित्यादि। पाताल स्वर्गो भौम स्वर्गो वास्ति। तत स्वर्गदेवलोकयोर्न पुनरुक्ति । गान्धर्वी अलका ।, Cr स्वर्ग इति। स्वर्गश्चिदिव देवलोकोऽस्यन्तकादिलोक । इन्द्रस्य पुरी वस्वौकसारा शक्रस्येत्युक्ता पूर्वदिगवस्थिता शक्रस्य पुरी प्रसिद्धा। उत्कृष्टतप फलभूतो ब्रह्मलोक ।, Cm स्वर्ग पातालादि । देवलोको वायुवरुणादिलोक । इन्द्रपुर्यमरावती। परा सिद्धिरुत्कृष्टतप फलभूतो ब्रह्मलोक ।, Cg स्वर्गोऽयमिति। सामान्यत स्वर्गोऽयम्। तत्रापि देवलोकस्त्रयस्त्रिशद्देवाना लोक । तत्रापीन्द्रस्य पुर्यमरावती। परा सिद्धिर्ब्रह्मण स्थानमित्युत्तरोत्तरोत्कर्ष ।, Ct स्वर्गो ज्योतिष्टोमादिकफलभोगभूमि । देवलोको वायुवरुणादिलोक । इन्द्रस्य पुर्यमरावती ❀ —For 27[cd], Ś1 Ñ V2 B D1–4 6 10 11 subst, while D5 ins after 27

249* इति सचिन्तयामास बहुधा स विलोकयन ।

[ Ś1 Ñ1 D2 10 बहु चिंतयन् ( D2 °या ), B1 सविलोकयन्, D1 4 मारुतात्मज, D6 बहुवत्तया, D11 कपिकुञ्जर (for स विलोकयन् ) D7 हनुमान्बहुशस्तदा (for the post half) ]

28 V1 illeg for 28 (cf v l 24) —[a]) V2 अध्यायत, T2 विस्मापित, Cr m g k t as in text (for प्रध्यायत ) B1 तदा (for इव ) Ś1 D10 प्रध्यायन्नेव चा (D10 वा)पश्यत् —Ñ1 illeg for 28[bcd] —[b]) D7 9 11 G1 M3 Ck प्रदीप्तास् Ñ2 B D6 दीपास्तत्र च( B4 स) काचनान् ❀ Cr g प्रध्यायत इव निश्चलतया प्रकृष्टध्यानयुक्तानिव।, Cm प्रध्यायत इव ध्याननिष्ठानिव। प्रत्यायत इति पाठे झटिति प्रकाशसंभारात्प्रत्यागच्छत इव स्थितान्।, Ck प्रध्यायत इति द्वितीयाबहुवचनम्।, Ct प्रध्यायतो ध्यान निष्ठान् ❀ —[cd]) D2 4 11 धूर्तामिव Ś1 D10 देवर्तन, Ñ2 V2 B4 देवनेषु (for °नेन ) D2 4 11 पराजिता, B3 धूपानि पवने सम्यक्सबल सपराजितान् (sic)

29 For sequence in V2, cf. v l 3 V1 illeg for 29 (cf v l 24) —[a]) V2 B4 तु (for च ) —[b]) Ś1 Ñ1 V2 B1 D1–4 10 श्रिया चातुलया ( V2 चातुला [subm ], D4 वातुलया ) तथा( D2 °या ), D11 श्रिया वत्सलया तथा —[c]) D1–5 11 M3 अचिभिर् (for अर्चिर्भिर् ) Ś1 Ñ1 V2 D7 तु (for च ) —[d]) D6 च मन्यते (for [ऽभ्य]मन्यत ) Ś1 D10 दीप्त( D10 °प )दीप्तामसन्यत, V2 D7 प्रदीप्ता ताममन्यत( V2 °दृश्यत ), B4 D1 2 4 ता प्रदीप्ताममन्यत, D11 सा प्रदीप्तेति मन्यते —For 29, Ñ2 (reads after 26) B1–3 D6 subst, V2 ins after 30, while B4 ins after 26

250* राक्षसेन्द्रप्रभावेन श्रिया चातुलया तथा ।
अर्चिषा भूषणाना च ज्वलन्तीमिव सर्वत ।

[ (l 1) Ñ2 B D6 -प्रभावेण B1 तथा (for तथा ) B3 चापि विभूषिता (for चातुलया तथा ) —(l 2) V2 B1( marg ) अर्चिभिर् (for °चिषा ) B4 च शशाकस्य (for भूषणाना च ) B3 कामिनीं (for सर्वत ) V2 ज्वलद्भिरिव सवश (for the post half ) ]

—After 29, Ś1 Ñ1 V2 B4 D1 2 4 6 10 11 ins

251* काञ्चनैरुज्वलैर्दीप्तैं समन्तादवभासिताम् ।
कपाटजालैर्विततैरुद्वमन्तीं प्रभामिव ।
ता तदा प्राविशद्धृष्टो हनूमान्मारुतात्मज ।
नि शब्दपदविक्षेपैर्दूरात्प्रणिहितेक्षण ।

[ D6 om l 1 —(l 1) V2 वज्जुलैर् (for उज्ज्वलैर् ) Ś1 D10 दूरात्प्रणिहितेक्षण (for the post half) —Ñ1 (partly) illeg for l 2 —(l 2) Ś1 Ñ1 V2 B4 कनाट- (for कपाट- ) Ś1 B4 D2 विवृतर, D10 विधृतैर् (for विततर् ) V2 D1 2 4 6 उद्वमनी, B4 उज्ज्वलतीं, D10 उद्वसतीं (for उद्वमन्तीं ) D11 उद्वहती प्रजामिव (for the post half) —(l 3) B4 पुरी (for तदा ) Ñ1 तदा ताम् (by transp ), D1 4 तदा स (for ता तदा ) Ñ1 आविशद् (for प्रा° ) Ś1 Ñ1 D10 पवनात्मज (for मारुता° ) —(l 4) Ñ1 -पदनि क्षेपाद्, V2 -पदनिक्षेपो, B4 -पादविक्षेपो, D1 4 -पदनिक्षेपैर् (for °विक्षेपैर् ) Ś1 D10 दूर- (for दूरात् ) Ś1 -[ ]क्षणे ]

—Thereafter V2 reads 3[cd] and 6–9 —After 29, D8 ins a passage relegated to App I (No 3)

30 V1 illeg for 30 (cf v l 24) —[a]) Ś1 Ñ1 D1–4 11 अथ, V2 तत्र (for ततो ) Ś1 D10 कचाकीर्णं, Ñ1 D11 कुशास्तीर्णं, V2 कुथास्तीर्णं, D2 कथाकीर्णां (sic), D3 सुखासीनं (for कुथासीनं ) —[b]) D11 नानागधाबरस्रिय ❀ Cr नानावर्णाम्बरस्रजम्। नानावर्णा अम्बरस्रजो यस्य तत्। स्रक्शब्दस्य हलन्तत्वाट्टाबन्तत्व वा( भा ?)गुरिमते सिद्धम्।, Cg नानावर्णाम्बरस्रजमिति हलन्तस्य स्रक्शब्दस्य भागुरमतेन टाबन्तत्वादजन्तत्वोपपत्ति ❀ —After 30[ab], D3 ins

252* स्वेनैव तेजसा युक्तं राक्षसाना च सञ्चयम् ।

परिवृत्तेऽर्धरात्रे तु पाननिद्रावशं गतम् ।
क्रीडित्वोपरतं रात्रौ सुष्वाप बलवत्तदा ॥ ३१
तत्प्रसुप्तं विरुरुचे निःशब्दान्तरभूषणम् ।
निःशब्दहंसभ्रमरं यथा पद्मवनं महत् ॥ ३२
तासां संवृतदन्तानि मीलिताक्षाणि मारुतिः ।
अपश्यत्पद्मगन्धीनि वदनानि सुयोषिताम् ॥ ३३
प्रबुद्धानीव पद्मानि तासां भूत्वा क्षपाक्षये ।
पुनः संवृतपत्राणि रात्राविव बभुस्तदा ॥ ३४
इमानि मुखपद्मानि नियतं मत्तषट्पदाः ।
अम्बुजानीव फुल्लानि प्रार्थयन्ति पुनः पुनः ॥ ३५

G 5 13 27
B 5 9 34
L 5 5 62

—$^{cd}$) D8 सहस्र- Ś1 Ñ1 D1 2 10 11 सहस्रमेव( D11 °क ) ( for सहस्र वर- ) G1 2 -वर्ण- ( for वेष- ) Ś1 Ñ1 D10 वेशचय( D10 °य )त्विषा, D1 3 11 -वेषधरश्रिया( D3 °त्विषा ), D2 -वेषवयस्त्विषा ( for -वेषविभूषितम् ) D8 वराभरणभूषित ( for $^{d}$ ) V2 शयनीय परार्ध्यं च स्त्रिय शतसहस्रश —For 30, Ñ2 B D6 subst

253* कुथाश्वापश्यदासीना नानावर्णाम्बरस्रजम् ।
नारी सहस्रशस्तत्र नानावेषोज्ज्वलत्विष ।

[ (l 1) Ñ2 D6 कुथास्त्वपश्यद, B1 कथान्नापश्च ( after corr m also कुथास्त्वपश्यद ), B3 कुथयापश्यद् B1 नानावर्णा सुरस्रज ( for the post half ) —(l 2) B2( m as in B4 ) 3 -वेश, B4 वर्ण ( for वेष ) B3 -[अ]चिप ( for -त्विष ) ] —After 30, V2 reads 250*

31 V1 illeg for 31 (cf v l 24) —$^{a}$) Ś1 Ñ V2 B1 2 4 D2 6 10 परावृत्ते, B3 परावृत्त ( for परिवृत्ते ) B2 च ( for तु ) D1 4 11 परावृत्ता( D11 °त्य [ sic ] )र्धरात्रेण —$^{b}$) V2 ग्रसेत्, D6 तत्र, T2 पानान् ( for पान- ) B4 गता ( sic ) ( for गतम् ) —$^{c}$) Ś1 Ñ1 D1–4 10 11 क्रीडना( Ñ1 D2 °डिता )द्विरत ( for क्रीडित्वोपरत ) Ś1 D2 10 सर्वं, Ñ1 सुप्त, D1 3 4 श्रान्तं, D11 रम्य ( for रात्रौ ) Ñ2 B1 ( marg ) D6 क्रीडि( D6 °ड )तोपरतस्त्रैण( B1 [ orig ]°त तासि ), V2 क्रीडत परम स्त्रैण —$^{d}$) Ś1 Ñ2 B D1 3 4 6 7 9 10 G Ck t प्रसुप्त, Ñ1 शुश्राव, V2 प्रशस्त, D2 सुषुपे ( for सुष्वाप ) Ś1 Ñ1 D2 10 बहुल तत , Ñ2 V2 B1 2 4 D6 बहुधा तदा ( Ñ2 reads तदा in marg ), B3 वरशय्यया, D1 3 4 अभव° ( for बलवत्तदा ) D11 जन सुबहुल तत

32 V1 illeg for 32 (cf v l. 24) —$^{a}$) Ś1 D10 तत्र सुप्त, Ñ1 [illegible] ( illeg ), D2 स च सुप्त, Ct as in text ( for तत्प्रसुप्त ) M1 प्रविबभौ ( for विरुरुचे ) Ñ2 V2 B D6 प्रसुप्तविहग चव, D11 तत प्रसुप्त रुरुचे —$^{b}$) V2 B1–3 D1–4 6 11 -[अ]वर ( for -[अ]न्तर- ) D7–9 भूषित ( for -भूषणम् ) Ś1 Ñ1 D10 नि शब्द वरभूषण —$^{c}$) D3 निलीन- ( for नि शब्द- ) —$^{d}$) Ñ2 V2 B D6 वभा, D11 पपा ( for यथा ) Ñ2 V2 B D11 यथा, D1 4 r तथा ( for महत् )

33 V1 illeg for 33 (cf v l 24) —$^{a}$) V2 स[illegible]त, Cr m g k t as in text ( for संवृत ) Ś1 Ñ2 B2 4 D1 2 4 6 10 11 दंष्ट्राणि D- दाताति, Cr m g k t as in text ( for -दन्तानि ) B1( orig ) 3 सुश्रित( B1 [ m also ]संवृत, B1 सुवृत )दंष्ट्राणि D9 स वृत्तदातानि ( for संवृतदन्तानि ) —$^{b}$) Ś1 Ñ V2 B4 D3 4 6–10 T1 2 Ck t मीलिताक्षीणि, M2 निर्मलाक्षाणि ( for मीलिताक्षाणि ) ※ Ck निद्रा(?)गतत्वात संवृतदान्तानि संवृतपक्ष्माणि ग्लानिदमु( ग्लानिज ? )खेदेन मीलिताक्षीणीति । अतिसंवृतपक्ष्माणि । स्वर्गदेवलोकान्वितसंवृत मीलितादेरपि कल्प्यो भेद इत्युक्तमेव । अपि वा वर्णना । सर्वत पौनरुक्त्यमशक्यमित्येवोपरम परिहार । तच्चिन्ताया व्याख्यातॄणाम( तॄणा ? )व्याख्यानकथवास्तमियात् । अपि च नेद सूत्र भाष्यादिक वा । येन प्रयोजनानि चिन्त्येते( °न्त्येरन् ? ) । अपि च काव्यमेवेदम् । तत्र च न केनापि ( कर्तुं ? ) शक्या पदप्रयोजनचिन्ता ।, Ct निद्रितत्वात्संवृतानि संवृतपक्ष्माणि तादृशानि च तानि दान्तानि ग्लानानि मीलिताक्षीण्यतिसंवृतपक्ष्माणि स्वर्गदेवलोकादेरिव संवृतमीलितयोरपि भेदो बोध्य । यद्वा संवृतदान्तानीत्यस्यैव व्याख्यान निमीलिनाक्षीणीति । यद्वा संवृतत्वमोष्ठयो ※ —$^{c}$) Ś1 D10 पद्मगधानि, D4( m also ) वक्त्रपद्मानि ( for पद्मगन्धीनि ) —D4 reads 33$^{d}$ in marg —$^{d}$) Ś1 V2 B D2 3 6 10 स योषिता

34 V1 illeg for 34 (cf v l 24) D4 om 34 —$^{a}$) D2 प्रसुप्तानीव, D6 प्रवृद्धानीव —$^{b}$) B3 निशि, M1 पुरा ( for तासां ) Ś1 Ñ V2 B D1 2 6 10 11 बुद्ध्वा ( for भूत्वा ) Ñ2 B2–4 D2 5 6 10 क्षपात्यये, Cr m g k t as in text ( for °क्षये ) D3 तन्मुखानि क्षपात्यये —$^{c}$) Ś1 D10 11 T2 G1 2 M1 Ck संहृत-, D2 सभृत , Cr m g as in text ( for संवृत ) D3 -गात्राणि ( for -पत्राणि ) —$^{d}$) D3 रात्रावथ Ś1 D10 यथा तथा, D5 बभा तदा ( corrupt ), T1 स्मस्तथा, Cr m g k t as in text ( for बभुस्तदा ) D2 गात्राणि विरभुस्तदा, D11 रात्रौ विरमसुस्तदा —For 34$^{cd}$, Ñ2 V2 B D6 subst

254* तदा वे कुड्मलानीव वदनानि विलोक्य स ।

[ Ñ2 B2 D6 तदा तु, B4 तदान्न ( for तदा वे ) B2 कुडलानि ( for कुड्मलानि ) B2 स योषिता ( for विलोक्य स ). ]

35 V1 illeg for 35 (cf v l 24) —$^{a}$) Cr इदानीं ( for इमानि ) Ś1 Ñ V2 B D1–4 10 11 वक्त्र( V2 रक्त )पद्मानि, D6 वहुपद्मानि, Cr m g t as in text ( for मुख° ) —$^{b}$) Ñ2 B D6 प्रिय-, D1 तत्र, D10 स तु T2 पद्म ( for मत्त ) Ś1( before corr as in text ) D11 -षट्पद . D6 नियतप्रियवल्लभा —$^{c}$) D6 सनुजानीम ( for अम्बुजानीव D1 पद्मानि ( for फुल्लानि ) Ś1 Ñ1 D1 2 4 10 11 अनुजानीति

G 5 13 28 B 5 9 39 L 5 5 63

इति वामन्यत श्रीमानुपपत्त्या महाकपिः ।
मेने हि गुणतस्तानि समानि सलिलोद्भवैः ॥ ३६
सा तस्य शुशुभे शाला ताभिः स्त्रीभिर्विराजिता ।
शारदीव प्रसन्ना द्यौस्ताराभिरभिशोभिता ॥ ३७
स च ताभिः परिवृतः शुशुभे राक्षसाधिपः ।
यथा ह्युडुपतिः श्रीमांस्ताराभिरभिसंवृतः ॥ ३८
याश्च्यवन्तेऽम्बरात्ताराः पुण्यशेषसमावृताः ।
इमास्ताः संगताः कृत्स्ना इति मेने हरिस्तदा ॥ ३९
ताराणामिव सुव्यक्तं महतीनां शुभार्चिषाम् ।
प्रभावर्णप्रसादाश्च विरेजुस्तत्र योषिताम् ॥ ४०
व्यावृत्तगुरुपीनस्रक्प्रकीर्णवरभूषणाः ।
पानव्यायामकालेषु निद्रापहृतचेतसः ॥ ४१
व्यावृत्ततिलकाः काश्चित्काश्चिदुद्भ्रान्तनूपुराः ।
पार्श्वे गलितहाराश्च काश्चित्परमयोषितः ॥ ४२

(Ñ1 D1 4 11 °व) मन्वाना (D10 सधाना) —$^d$) Ś1 B2 D2 3 10 11 प्रार्थयते, T2 प्रास्रवत (for प्रार्थयन्ति) ❀ Cr प्रार्थयन्ति प्रार्थयेरन् । नियत नूनम् ।, Cm प्रार्थयन्ति प्रार्थयेरन्। नियत नूनम्। 'प्रार्थयन्त' इति पाठे प्रार्थयमाना भवेयुरिति शेष ।, Cg प्रार्थयन्ति प्रार्थयेरन्। मधुरसलुब्धतयात्र पुन पुन पतेयुरित्यर्थ । व्यत्ययेन परस्मैपदम्। अनुदात्तत्वेनात्मनेपदत्वात्। नियत नूनम्।, Ck t नियत नित्यम् ❀

36 V1 illeg for 36 (cf v l 24) —$^a$) Ś1 V2 D4 5 8 G1 3 [इ]व (for वा) D11 [इ]वामन्यते, G2 M1 3 चामन्यत (for वामन्यत) Ñ2 B D6 इत्यमन्यत स श्रीमान —$^b$) Ś1 Ñ1 D10 11 M1 उत्पत्य च (D10 स), Ñ2 B2 (m after corr) 3 4 D6 तान्यालोक्य, V2 उत्प्लुत्य स, B1 (m also तद्विलोक्य) ता विलोक्य, D1 4 उपेत्य स, T3 G उपपत्य (G3 °च), Cr m g t as in text (for उपपत्त्या) D1 महान् (for महा-) D2 उत्पत्य सहसा कपि, D3 उपेत्याभिमुख तदा —$^c$) B3 सम (for मेने) Ñ1 च (for हि) D2 द्विगुणतस्, D11 व गुणतम् (for हि गुणतस्) —$^d$) D11 समान- (for °नि)

37 V1 illeg for 37 (cf v l 24) —$^b$) D2 तत (for ताभि) —M1 om 37$^{cd}$ —$^c$) B1 (after corr in m) D1–5 7 9 10 T1 G1 M2 शरदीव (for शारदीव) —$^d$) Ñ2 V2 B D1 2 4 6 11 उपशोभिता, I2 3 इव शोभिता, G1 अभिसवृता (for अभिशोभिता)

38 V1 illeg for 38 (cf v l 24) —$^a$) S1 Ñ V2 B D1–4 6 10 11 ताभि परिवृत शुर (Ñ2 V2 B D6 स्त्रीभि) —$^b$) Ś1 Ñ1 D2 4 10 11 M1 राक्षसेश्वर, Ñ2 B D6 राक्षसस्तदा (B2 °था) —D11 om 38$^{cd}$ —$^c$) Ñ2 V2 B D6 तारापति, D3 ताराधिप, T2 चोडुपति (for ह्युडुपति) —$^d$) Ś1 D10 परिवारित, Ñ1 D5 7 9 G1 इव सवृत, Ñ2 V2 B D1 4 6 उपशोभित, D2 इव शोभित, D3 अभिसवृत (for अभिसवृत)

39 V1 illeg for 39 (cf v l 24) Ś1 D10 om 39$^{ab}$ —$^a$) Ñ1 या[...] -रात्तारा (illeg), D1 4 याश्च्युता ह्यम्बरात्तारा, D2 6 11 G1 याश्च्यवत्यम्बरात्तारा, D3 याश्च्युता नभसस्तारास् —$^b$) Ñ1 V2 D1 2 4 11 काले काले निराकृता, Ñ2 B D6 तत्र मन्ये (B3 °न्ये) निराकृता —$^c$) Ś1 Ñ1 V2 D1 2 4 10 11 सर्वा, D3 तारा (for कृत्स्ना) —Ś1 D10 om 39$^d$–41$^a$ —$^d$) D1 2 4 11 तत्रामन्यत वै हरि —After 39, B3 ins

255* सेवन्ते कुड्मलानीव वदनानि विलोक्य ते ।

40 V1 illeg for 40 (cf v l 24) Ś1 D10 om 40 (cf v l 39) B3 om 40$^{ab}$ —$^a$) Ñ2 V2 B1 4 D1 2 4 11 हि व्यक्त, D2 सुव्यक्ति (for सुव्यक्त) D6 तारागणमिव व्यक्त —$^b$) D11 महर्ती च (for महतीना). Ñ1 illeg, B1 सुवर्चसा, B2 (after corr as in text) सुरार्चिषा, D1–4 11 महार्चिषा (for शुभार्चिषाम्). —V2 om 40$^c$–43 —$^c$) B1 प्रभाव तत्-, B3 प्रभावाच, D3 प्रभावर्द्धि- (for प्रभावर्ण-) B3 प्रसादाच्, T1 3 G2 -प्रभावाश् (for -प्रसादाश्) M1 -प्रसादार्चिर् B2 प्रभावर्णा प्रसादश्च, D2 प्रभाववर्णा प्रासादा (sic) —$^d$) B4 चात्र (for तत्र) B3 विवेकाश्चापि (for विरेजुस्तत्र)

41 V1 illeg for 41 (cf v l 24) S1 D10 om 41$^a$ (cf v l 39) V2 om 41 (cf v l 40) —$^a$) D7 9 G1 Ct -कच-, D8 -कुच-, Cr m g as in text (for गुरु-) Ñ B D6 व्यावृत्त (B4 °त्ता) शिरसस्तत्र, D1–4 व्यावृत्तगृहि (D3 °गोपि) तसस्ता, D11 व्यावृत्त गृहत शस्ता (sic) —$^b$) Ś1 Ñ2 B D1–4 6 -[अ]वर- (for -वर-) D10 प्रकीर्णा स्वरभूषणा ❀ Cr व्यावृत्तगुरुपीनस्रजश्च ता प्रकीर्णवरभूषणाश्चेति कर्मधारय ❀ —$^c$) Ś1 D1 2 4 10 -कालैश्च, Ñ1 -काले च, Ñ2 B D3 6 -खिन्नाश्च, G2 -लोलाक्ष्यो, Cv m g t as in text (for -कालेषु) D11 यातव्या यामकाले च —$^d$) Ś1 Ñ D7–9 Ct -[उ]पहृत-, B4 D3 4 10 G3 -[अ]पहृत, Cg as in text (for -[अ]पहृत-) D5 निद्राप्रभूतचेतना, D6 निद्रया हृतचेतस

42 V1 illeg for 42 (cf v l 24) V2 om 42 (cf v l 40) —$^a$) Ś1 Ñ D1 3 4 10 11 नि (Ñ2 वि) वृत्त-, B व्यामृष्ट-, D2 दुर्वृत्त-, D6 विसृष्ट-, Cg t as in text (for व्यावृत्त-) D10 11 -तिलका काचित् —$^b$) D3 om (hapl), D10 11 काचिद् (for काश्चिद्) Ś1 D1 4 10 उत्सृष्ट-, Ñ1 illeg, Ñ2 भ्रष्टात-, D2 11 उत्कृष्ट-, Cr m g t as in text (for उद्भ्रान्त-) D10 11 -नूपुरा —$^{cd}$) B3 D1 2 4 पार्श्वाद् (for पार्श्वे) Ñ2 B1 (m) 2 4 D5 6 पार्श्वागलित- (B1 [before corr] °कुलित-), T2 पार्श्वोद्गलित-

G 5. 15. 1
B 5. 12. 6
L 5. 7. 6

दृष्टमन्तःपुरं सर्वं दृष्टा रावणयोषितः ।
न सीता दृश्यते साध्वी वृथा जातो मम श्रमः ॥ ६
किं नु मां वानराः सर्वे गतं वक्ष्यन्ति संगताः ।
गत्वा तत्र त्वया वीर किं कृतं तद्वदस्व नः ॥ ७
अदृष्ट्वा किं प्रवक्ष्यामि तामहं जनकात्मजाम् ।
ध्रुवं प्रायमुपेष्यन्ति कालस्य व्यतिवर्तने ॥ ८
किं वा वक्ष्यति वृद्धश्च जाम्बवानङ्गदश्च सः ।
गतं पारं समुद्रस्य वानराश्च समागताः ॥ ९
अनिर्वेदः श्रियो मूलमनिर्वेदः परं सुखम् ।
भूयस्तावद्विचेष्यामि न यत्र विचयः कृतः ॥ १०
अनिर्वेदो हि सततं सर्वार्थेषु प्रवर्तकः ।
करोति सफलं जन्तोः कर्म यच्च करोति सः ॥ ११
तस्मादनिर्वेदकृतं यत्नं चेष्टेऽहमुत्तमम् ।
अदृष्टांश्च विचेष्यामि देशान्रावणपालितान् ॥ १२

---

6 $^{b}$) Ś1 Ñ1 D2 10.11 सर्वा, D1 5 8 9 दृष्ट्वा (sic) (for दृष्टा). Ś1 Ñ D राक्षस- (for रावण-). D3 -योषिता. —After $6^{ab}$, Ñ1 ins.

316* न च सीता महासाध्वी दृष्टा * * * * ।

—$^{d}$) D4 (after corr. sup. lin.) व्यर्थ- (for वृथा). Ś1 Ñ1 D1 2 4 10 11 परिश्रम (for मम श्रम).

7 $^{a}$) Ñ2 V1 न, V2 B1 3 4 D1–4 6 10 11 तु (for नु). —$^{b}$) D1 द्रक्ष्यति, Ck t as in text (for व°). Ś1 Ñ1 V2 D1 2 4 10 11 मानिन, Ñ2 V1 B शुष्मिण., D3 मामित; D6 पुष्पिण (for सगता). —$^{c}$) B1 ब्रुवन् (for तत्र). —$^{d}$) Ś1 Ñ1 V2 D1–4 10 11 किं कृत पवनात्मज, Ñ2 V1 B2 3 D6 कृत किं तद् (Ñ2 न, D6 तु) व्यवस्थित, B1 4 कृत किं तद्विवक्षित ॥ Cg किं न्विति सामान्येन निर्वेदोक्तिः । विशेषतश्चाह—गत्वेति । इत्युक्त इति शेषः । वदस्व न इत्युक्त किं प्रवक्ष्यामि । यद्वा किं त्विति पाठः । पूर्ववदर्थत्रयमेक वाक्यम् । किं त्विति पूर्वस्माद्विशेषोक्तिः । मां वानरा वदस्व न इति वक्ष्यन्ति तदादृष्ट्वा किं प्रवक्ष्यामीति योजना ॥ —After 7, Ñ1 ins.

317* तेषु वानरमुख्येषु प्रस्थितेषु यशस्विषु ।

8 $^{a}$) M1 अपश्यन (for अदृष्ट्वा). B2 नु (for प्र-). —$^{b}$) V1 B4 तत्र (for ताम्). —After $8^{ab}$, V2 reads 9 for the first time, repeating it in its proper place. —$^{c}$) D1 4 नूनं (for ध्रुवं). Ś1 D10 प्रासम्, Ñ2 D6 कालम्, V2 प्रियाम् (sic), D11 प्राप्यम्, Cg t as in text (for प्रायम्). Ś1 Ñ D6 10 11 उ(Ñ2 D6 अ)पेक्षते (D11 °ति), D1 4 T1 3 G1 उपेष्यामि, D3 उपेक्ष्यामि, D5 M3 उपेष्यति, D7 9 T2 M2 उपामिष्ये (for उपेष्यन्ति). —$^{d}$) D6 प्रति- (for व्यति-). Ñ1 V2 -वर्तनात्, D1 वर्तिन, Cg t as in text (for वर्तने). Ś1 D2 10 कालश्च परिवर्तते, Ñ2 कालस्य प्रतिवर्णने, D4 कालस्य वशवर्तिन, G1 कालश्चाप्यतिवर्तते. —For $8^{cd}$, V1 B subst. and read after 9, while Ñ2 D6 ins. after 9:

318* पुनः प्रायमुपैष्यन्ति नूनं हि गतिरीदृशी ।

[Ñ2 V1 उपेक्ष्यन्ति, B1 (m. also) 4 उपेष्यति, B3 पतिष्यामि (for उपैष्यति). B1 पुन प्रायासमप्यम्नि (corrupt) (for the prior half). D6 om. हि.]

9 V2 reads 9 after $8^{ab}$, repeating it here. —$^{a}$) Ś1 Ñ1 D1–4 10 11 T2 G1 M1 Cr मा, Ct as in text (for वा). Ś1 Ñ1 D1 4 10.11 तु (for च). Ñ2 V B D6 किं नु (V2 [first time] B1 4 D6 तु) वक्ष्यत्यसौ वृद्धो, V2 (second time) किं मां वक्ष्यति सुग्रीवो. —$^{b}$) Ś1 D1 4 जाम्बुवान्. Ś1 Ñ1 D2 10 11 तथा, Ñ2 D5 6 च मां, V2 (second time) तदा (for च सः). —$^{c}$) D10 गतु. —$^{d}$) Ñ1 illeg. after वा up to अनिर्वेद in $10^{b}$. Ś1 ये, D2 10 वा (for च). V1 2 (first time) B D6 लङ्घन व्यर्थक (V2 °ता) मम. —After 9, Ñ2 V1 B D6 read 318*.

10 Ñ1 illeg. up to अनिर्वेद in $^{b}$ (cf. v. l. 9). D1 4 T2 transp. $^{ab}$ and $^{cd}$. —$^{b}$) D2 सनिर्वेद (sic). B4 सदा (for परं). D11 निर्वेद परम सुखं. —T1 3 G1 3 M3 om. $10^{cd}$. Ñ2 V2 B1–3 D6 read $10^{cd}$ and $14^{cd}$, V1 B4 G2 read only $10^{cd}$ after $12^{ab}$. —$^{c}$) D3 पुनस् (for भूयस्). Ś1 D10 ता च, D1 4 7–9 तत्र (for तावद्).

11 $^{a}$) Ñ1 om. सतत. —$^{b}$) Ś1 D3 10 निवर्तक, Ñ2 V2 B2 4 D1 4 [अ]नुवर्तते (D1 4 °क), V1 B1 3 प्रवर्तते, D2 6 11 [अ]निवर्तक (D6 न°) (for प्रवर्तकः). —$^{c}$) B2 G1 सकल, M1 सतत, Cg t as in text (for सफल). D1 4 जन्म, D11 तस्य, G1 M1 जतु (for जन्तो). —$^{d}$) T2 यश (for यच्). D8 M1 3 तत् (for च). T3 G2 च (for स). Ś1 D2 10 जीवित जीवितेऽप्यपि (Ś1 [with hiatus] °ते अपि), Ñ V B1 3 4 D1 4 6 जीवित त्यज्य (Ñ1 [illeg.])जेऽप्यपि (B3 °पु च), B2 जीवित मनु (m. also °तमड)जेऽप्यपि, D3 जीवितत्व त्यजेदपि, D11 जीवित त्यजतेऽप्यपि (corrupt).

12 Ñ1 illeg. for 12 except तस्मादनि. —$^{a}$) Ś1 Ñ2 V B D1–4 6 7 9–11 G1 3 Ck t -कर, G2 -गत, Cr m g as in text (for -कृत). —$^{b}$) D3 यत्र, T1 3 यत्तच्, G2 युक्त, Cg t as in text (for यत्न). Ś1 D10 चेच्छे (Ś1 °ष्टे)यम्, D1 4 इच्छेयम् (for चेष्टेऽहम्). D4 उत्तर. Ñ2 V1 B यत्न कर्तास्म्यनुत्तम, D6 यत्न कर्तुमनुत्तम, D11 यत्न चेष्टे हनूमत (corrupt), G1 3 यत्न कुर्यादनुत्तम. —After $12^{ab}$, Ñ2 V B D6 G1 2 (V1 B4 G2 only $10^{cd}$, G1 only $14^{cd}$) read $10^{cd}$ and $14^{cd}$, D2 reads $14^{ab}$. Ñ2 V B D6 om. $12^{cd}$. —$^{c}$) Ś1 D1 3 4 10 11 अदृष्टा

आपानशाला विचितास्तथा पुष्पगृहाणि च ।
चित्रशालाश्च विचिता भूयः क्रीडागृहाणि च ॥ १३

निष्कुटान्तररथ्याश्च विमानानि च सर्वशः ।
इति संचिन्त्य भूयोऽपि विचेतुमुपचक्रमे ॥ १४

भूमीगृहांश्चैत्यगृहान्गृहातिगृहकानपि ।
उत्पतन्निपतंश्चापि तिष्ठन्गच्छन्पुनः क्वचित् ॥ १५

अपावृण्वंश्च द्वाराणि कपाटान्यवघट्टयन् ।
प्रविशन्निष्पतंश्चापि प्रपतन्नुत्पतन्नपि ।
सर्वमप्यवकाशं स विचचार महाकपिः ॥ १६

चतुरङ्गुलमात्रोऽपि नावकाशः स विद्यते ।
रावणान्तःपुरे तस्मिन्य कपिर्न जगाम सः ॥ १७

प्राकारान्तररथ्याश्च वेदिकाश्चैत्यसंश्रयाः ।
श्वभ्राश्च पुष्करिण्यश्च सर्वं तेनावलोकितम् ॥ १८

G 5 15 13
B 5 12 18
L 5 7 18

ह्रि, D2 °ष्ट्वा तु, G1 भूयस्तास्तान्, M3 भूयस्तावद् (for अदृष्टाश्च) —[d]) Ś1 D1 2 4 10 11 दिश (D1 4 पुरीं) रावण (D11 वरुण) पालिता —After 12, T2 reads $14^{cd}$

13 G1 om $13$–$14^{b}$ —[a]) D11 आपणाश्च (subm) (for आपानशाला) Ś1 Ñ2 V1 B D2 6 10 विविधास् (for विचितास्) —V1 om (hapl) $13^{bc}$ —[b]) D1 4 तस्य (for तथा) —Ś1 D10 om $13^{c}$–$15^{b}$ Ñ1 D1–4 11 om (hapl) $13^{cd}$ —[c]) Ñ2 V2 B D6 T2 M1 विविधा (for विचिता) —[d]) V2 B3 भूतक्रीडा, B1 मालाकार (for भूय क्रीडा) V2 [अ]पि (for च) ❀ Cv भूय क्रीडागृहाणि चेत्यत्र चिन्तासमाप्तिसूचक इति शब्दो द्रष्टव्य ❀

14 Ś1 D10 om 14, G1 om $14^{ab}$ (for both, cf v l 13) Ñ1 D1 3 4 11 transp $14^{ab}$ and $15^{ab}$ D2 reads $14^{ab}$ after $12^{ab}$ —[a]) B2 -कक्षाश्च, D11 -रथ्यानि M1 -वीथ्यश्च, Cv r m g t as in text (for -रथ्याश्च) V2 निष्कुटांतरमासाद्य —D6 om $14^{b}$ —[b]) M2 सर्वत (for °श) —V1 om $14^{c}$–$15^{b}$ Ñ1 D1–4 11 om $14^{cd}$ Ñ2 V2 B1–3 D6 G1 (only $14^{cd}$) read $10^{cd}$ and $14^{cd}$ after $12^{ab}$ T2 reads $14^{cd}$ after 12 —[cd]) T2 ववृधे, G1 हनुमान (for भूयोऽपि) Ñ2 V2 B D6 इति कृत्वा मति तत्र हनुमान्मारुतात्मज

15 Ś1 V1 D10 om $15^{ab}$ (cf v l 13 and 14) D6 om $15$–$16^{e}$ Ñ2 B G1 om $15^{ab}$ Ñ1 D1 3 4 11 transp $14^{ab}$ and $15^{ab}$ —[a]) V2 D1 4 5 8 भूमि (V2 निशा) गृहाश्च, T2 भामान्गृहाश्च D8 विल, M1 चित्र- (for चैत्य-) D2 11 भूमीगृहाश्चैत्यगृहा —Ñ1 illeg for [b] —[b]) D1 4 गृहाणि (for °ति-) D2 11 गृहाश्च (D11 °णि) गृहका अपि, D3 गृहाणि गृहकान्यपि, D8 तथा चैत्यगृहानपि, T1 3 G2 M1 गृहानतिगृहाणि च (G2 M1 °नपि), M2 गृहातिगृहकानि च —[c]) Ś1 D10 निष्पतश्च, D5 न्यपत° (for निप°) D4 उत्पत्यापिपतश्चापि —[d]) Ś1 D2 10 प्रवि- (for तिष्ठन्) D3 om. गच्छन् Ś1 Ñ1 B4 D1–4 8 10 11 M3 पुन (for क्वचित्) V2 गच्छस्तिष्ठन्पुन पुन ❀ Cv गृहस्य दूरेणैकान्ते स्वैरविहारार्थं निर्मिता गृहा गृहातिगृहका ।, Cr m g as in Cv ❀

16 D6 om $16^{a-e}$ (cf v l 15) —[a]) Ś1 D10 आपानभूमि, D3 11 अपावर्तंश्च, D8 अपावृत्यानि G1 2 अपवृण्वश्च (for °वृण्वंश्च) Ñ2 V1 B द्वा (V1 पु) राणि समुपा (B3 च समा) वृण्वन् —[b]) Ñ1 V2 कपाटान्, B2 4 G M1 3 कवाटानि (for कपा°) B2 [अ]पवाटयन्, D2 विघाट°, D5 [अ]वपाट°, D11 च पीड°, T G1 M2 3 Cr g [अ]वघाट°, Ck t as in text (for [अ]वघट्ट°) Ś1 D10 कवाटान्यवपा (D10 °पवा [meta]) टयन, D1 4 कपाटानवघाटयन् —Ś1 D10 om $16^{cd}$ —[c]) V2 नि सरश्च, D1 8 11 M3 निपतश्च, D3 T2 उत्पतश्च, D4 नियत, Cm g t as in text (for निष्पतश्च) —[d]) D2 न्यपतन्, T2 निष्पतन (for उत्प°) D7–9 इव (for अपि) D1 4 निष्क्रामन्प्रविशन्पुन, D3 निविशन्नापतन्नपि —B1 3 om $16^{ef}$ —[e]) Ś1 Ñ1 V B4 D10 11 अल्पम्, D2 अन्यम्, D3 स्वल्पम् (for सर्वम्) D3 [अ]वकाशे Ś1 Ñ1 V2 D1 5 10 11 च (for स) Ñ2 B2 अन्यानप्यवकाशांश्च —[f]) D11 स (for वि-) —After 16, B2 ins

319* त्वरमाणस्ततोऽद्विग्नो न दृष्ट्वा कुत्र जानकीम् ।

—Then B2 cont, while Ñ2 V B1 3 4 (B1 3 after $16^{cd}$ owing to om) D6 ins after 16.

320* स कपि शीघ्रसचारी प्रभञ्जन इवापर ।

[V2 पुन (for कपि) Ñ2 V2 B4 D6 -सचार (for °री)]

17 [a]) Ñ2 V1 B1 4 D6 -मात्र सन, V2 (also) -मात्र तु, B2 -मात्रश्च, B3 -मात्र स (for -मात्रोऽपि) —After $17^{a}$, Ñ2 V1 B D6 ins

321* परिबभ्राम वानर ।
न हि यत्र गतिस्तस्य
[(l 2) B1 [आ]गतिर (for गतिस्)]

—[b]) Ś1 स, V2 तु, D1 4 [ऽ]न (for स) Ñ2 B1 2 D6 transp. न and स V1 B3 4 सोऽवकाशो हि विद्य (B4 दृश्य) ते, T2 सावकाशो न विद्यते —[d]) D4 11 य (for य) D3 transp य and कपिर् D4 [आ]जगाम (for ज°) Ś1 D10 वानरो निर्जगाम स, Ñ1 ** स कपिकुञ्जर (illeg), Ñ2 V1 B D6 न किंचित्र चचा (B4 °का) र स, G1 न जगाम महाकपि ❀ Cr य कपिर्न जगाम स इति पाठ ❀

18 [a]) D2 -रथ्याश्च, D7–9 Ct -वीथ्यश्च, Cv r m g as in text (for रथ्याश्च) —[b]) B3 प्रश्रया, Cv r m g

G. 5 15 14 B 5 12 19 L 5 7 18

राक्षस्यो विविधाकारा विरूपा विकृतास्तथा ।
दृष्टा हनूमता तत्र न तु सा जनकात्मजा ॥ १९
रूपेणाप्रतिमा लोके वरा विद्याधरस्त्रियः ।
दृष्टा हनूमता तत्र न तु राघवनन्दिनी ॥ २०
नागकन्या वरारोहाः पूर्णचन्द्रनिभाननाः ।
दृष्टा हनूमता तत्र न तु सीता सुमध्यमा ॥ २१
प्रमथ्य राक्षसेन्द्रेण नागकन्या बलाद्धृताः ।
दृष्टा हनूमता तत्र न सा जनकनन्दिनी ॥ २२
सोऽपश्यंस्तां महाबाहुः पश्यंश्चान्या वरस्त्रियः ।
विषसाद महाबाहुर्हनूमान्मारुतात्मजः ॥ २३
उद्योगं वानरेन्द्राणां प्लवनं सागरस्य च ।
व्यर्थं वीक्ष्यानिलसुतश्चिन्तां पुनरुपागमत् ॥ २४
अवतीर्य विमानाच्च हनूमान्मारुतात्मजः ।
चिन्तामुपजगामाथ शोकोपहतचेतनः ॥ २५

इति श्रीरामायणे सुन्दरकाण्डे दशमः सर्गः ॥ १० ॥

---

as in text (for सश्रया) D2 वदिकाश्चसमश्रयान्, D3 वेदिकाश्चैव सश्रया —D10 om $18^{c}$–$20^{b}$ —$^{c}$) Ñ1 V2 D1 4 5 8 शुभ्राश्च, Ñ2 V1 B1 3 4 शुभ्राणि, B2(*sup lin* also as in Ñ2) विभ्राणि, D3 6 शुभ्राणि, D11 शुभाश्च, G1 गुहाश्च, M3 दीर्घिका, Ct as in text (for शुभ्राश्च) —$^{d}$) Ñ2 V1 B1–3 D6 सर्वा( B2 °म )स्तास्तेन वीक्षिता, B4 सर्वास्तेन निरीक्षिता, D1 3 4 सर्वं तेन( D3 °ना )व लक्षित

19 D10 om 19 (cf v l 18) —$^{a}$) Ñ2 D6 विविधास्तत्र, B3 विकृताकारा (for विविधा°) —$^{b}$) Ñ2 V1 B1–3 D6 सुरूपा, B4 स्वरूपा(sic) (for वि°) V2 D1 4 G2 विकृतानना Ś1 Ñ1 स्वरूपा विविधाश्च( Ñ1 °कृताश्च ) या, D2 3 11 सु( D3 स )रूपा विविधा( D3 °कृता )श्च( D2 °श्र ) या. —B2 om $19^{c}$–$20^{b}$ T1 reads *inf lin* $19^{c}$–21 —$^{c}$) B3 D1 4 11 दृष्ट्वा (sic) (for दृष्टा) —Ś1 T3 om (hapl) $19^{d}$–$22^{c}$ D2 om (hapl) $19^{d}$–$20^{c}$ —$^{d}$) Ñ1 न त्वेका, Ñ2 V D3 6 11 न त्वेव, B1 न त्वेव, B4 नात्रैव, D1 4 न दृष्टा (for न तु सा) B3 न सा दशरथस्नुषा, T2 न तु राघवनंदिनी, G2 न तु सीता सुमध्यमा

20 D8 10 om $20^{ab}$ (for D10, cf v l 18) Ś1 T3 om 20, D2 om $20^{abc}$, B2 om $20^{ab}$, T1 reads 20 *inf lin* (for all, cf v l 19) G2 reads 20 twice —$^{a}$) V2 चैव (for लोके) —$^{b}$) Ñ2 V1 B1 3 4 D6 श्रेष्ठा, D1 3 4 सिद्ध-, D7 9 M2 परा (for वरा) Ñ1 V2 D11 देवगन्धर्वयोषित, G1 विद्याधरवरस्त्रिय, G2 (first time) तथा यक्षवराङ्गना —B2 reads $20^{cd}$ after $22^{ab}$ D8 transp. $20^{cd}$ and $21^{ab}$ —$^{c}$) V2 तेन (for तत्र) —T1 om (hapl) $20^{d}$–$21^{c}$ —$^{d}$) D5 कामिनी (for नन्दिनी). Ñ V B1 2 4 D1–4 6 10 11 न सा( D2 दृष्टा [hypm]) दशरथस्नुषा, B3 T2 G2(second time) न सा जनकनन्दिनी, T2 (also) न सा राघवसुंदरी, G2(first time) न तु सा जनकात्मजा

21 Ś1 T3 om 21 (cf v l 19) T1 om $21^{abc}$ (cf v l 20) Ñ2 V1 B D6 om 21 D8 transp $20^{cd}$ and $21^{ab}$ —$^{b}$) D2 पूर्णाश्च, D9 पूर्णं (for पूर्ण-) —D3 8 om $21^{cd}$.—T1 reads $21^{d}$ *inf lin* —$^{d}$) Ñ1 V2 D1 2 4 10 11 न सा जनकनंदि( D1 4 11 °द )नी, D7 9 न तु सा जनकात्मजा.

22 Ś1 T3 om $22^{abc}$ (cf v l 19) B2 transp $^{ab}$ and $^{cd}$ ($22^{cd}$ read twice) T1 reads $22^{ab}$ *inf lin* —$^{b}$) Ñ V B1 2 D1–4 6 11 T1 M1 देव, D10 G1 राज-, Cv r m g t as in text (for नाग-) Ñ2 हृता बलात्, V2 हृताश्च या, D9 °कृता (for बलाद्धृता) B3 4 बलाद्धृता हृता *cf* Cv प्रमथ्येत्यादि। प्रमथ्य प्रसह्य बन्दीकृता नागकन्या उच्यन्ते। पूर्वश्लोकेऽन्यासां नागकन्यानां सुपादानात्।, Cr बलाद्धृता नागकन्या इत्यभिधानादत्र बन्दीकृतानां ग्रहणम्। पूर्वत्र तु तासां नागकन्यानाम्। अतो न पुनरुक्तिः।, so also Cm g t —After $22^{ab}$, B2 reads $20^{cd}$ —$^{c}$) V2 तेन (for तत्र) —$^{d}$) Ñ1 B2(second time) D2 11 न सा दशरथस्नुषा V2 D1 4 न त्वेव जनकात्मजा, T2 न सा राघवसुंदरी, G2 न तु सीता सुमध्यमा —After 22, Ñ1 (partly illeg) ins

322* प्रमदानां कुलं तत्र रतिजातिविभूषितम्।
दृष्ट्वा मारुतेः पुत्रः [illegible]।
इति चिन्ता [illegible] ।

23 $^{a}$) Ś1 Ñ2 V B D1 2 4 6 10 अपश्यम्, G1 चोपश्यम् —$^{b}$) Ś1 B2 D10 अन्या, D2 स्त्वन्या (for चान्या). —After $23^{ab}$, M2 wrongly repeats $23^{c}$ and $23^{b}$ —$^{c}$) Ś1 Ñ1 V2 D1–4 10 11 महातेजा, Ñ2 V1 B1 2 4 D6 तदा तत्र, B3 कपिस्तत्र, M3 मुहुर्धीमान् (for महाबाहुर्) D8 G1 M1 विषादमगमद्धीमान् (M1 °द्धीरो) —$^{d}$) Ś1 D10 पवनात्मज, Ñ1 दीर्घ( also वीर्य )विक्रम (for मारुतात्मज) ※ Cr "विषादमगमद्धीमान्हनुमान्मारुतात्मज" इति पाठः ※

24 Ś1 D2 om (hapl) $24$–$25^{b}$ Ñ2 V1 B D6 om 24 —$^{a}$) Ñ1 तद्योग D4 वानरेंद्रस्य (for °न्द्राणां). —$^{c}$) D10 व्यक्त (for व्यर्थं) Ñ1 illeg after वीक्ष्या up to 25 —$^{d}$) D7–9 उपागत, D10 उपेयिवान् (for उपागमत्)

25 Ś1 D2 om $25^{ab}$, Ñ1 illeg for 25 (for both, cf v l 24) —$^{a}$) D1 11 विमानास्स, D8 G2 °नाग्राच्,

# ११

विमानात्तु सुसंक्रम्य प्राकारं हरियूथपः ।
हनूमान्वेगवानासीद्यथा विद्युद्घनान्तरे ॥ १

संपरिक्रम्य हनुमान्रावणस्य निवेशनात् ।
अदृष्ट्वा जानकीं सीतामब्रवीद्वचनं कपिः ॥ २

G 5 15 0
B 5 13 2
L 5 8 4

(G2 °प्राद्), Cm k t as in text (for °नाच) —b) Ñ2 V1 B2-4 D6 चिन्तयामास दु खित , D10 हनुमान्पवनात्मज —After 25ab, Ñ2 V1 B D6 ins

323* न प्रकाशमिह स्थातु शक्यते राक्षसालये ।
राजा हि रावण क्रूर इति सचिन्त्य बुद्धिमान् ।
परिक्रम्य ततो दीन पुनर्ध्यानमुपागमत् ।
ततो लङ्का प्रयत्नेन विचित्य पवनात्मज ।
रजन्यामर्धशेषाया प्राकारे निपसाद स । [5]
निराशो मोघसकल्पश्चिन्तयन्विविधा गती ।
विक्रान्त सागर क्रान्तो मग्नश्चिन्तामहार्णवे ।
स त्वहृष्टेन मनसा प्राकारस्थो महाकपि ।
अपश्यञ्जानकी सीता विललाप सुदु खित ।

[ (l 1) B2 transp न and प्रकाशमिह —(l 2) B4 राक्षस (for रावण) —(l 3) V1 B4 उपागत (for °गमत्) —(l 4) B1 3 D6 विचिल (sic) (for विचित्य) —(l 5) B4 ह (for स) —(l 6) B3 मुक्त (for मोघ) Ñ2 B3 D6 विविधा गति —(l 7) B1 3 सागर- (for °र) V1 श्रान्तो, B1 [आ]क्रान्तो, B4 तीर्णो (for क्रान्तो) —(l 8) B3 [अ]कुठेन (for [अ]हृष्टेन) —(l 9) B4 नापश्यत् (for अप°) B2 तत्र (for सीता) ]

—V1 B1 3 4 om from 25c to 5 11 4 Ñ2 B2 D6 om from 25c to 5 11 2 —c) D2 -[आ]जगाम (for -जगाम) Ś1 [अ]सा, D2 10 11 [आ]शु (for [अ]थ) —d) D11 सकोप (for शोकोप-) —After 25, Ś1 V2 D1-4 10 11 ins

324* ध्यात्वा क्षण ततो भूयो विचेतुमुपचक्रमे ।
हृदि कृत्वा प्रयत्न तु प्रयत्न भजते विधि ।

[ (l 1) V2 D1 3 4 तदा (for ततो) —D1 3 4 om l 2 —(l 2) Ś1 स्व, D10 च, D11 स (for तु) V2 प्रयत्ने (for second °त्न) ]

Colophon Ś1 Ñ V B D2 6 10 11 om D3 reads colophon after 5 11 1 —*Sarga name* D1 3 4 अंत पुरविचय —*Sarga no* (figures, words or both) D1 4 om , D3 15, D5 7-9 S 12 —After colophon, G concludes with श्रीरामाय नम

## 11

Ś1 Ñ1 V2 D2 4 10 11 continue the previous Sarga M2 begins with श्रीरामाय नम

1 V1 B1 3 4 om 1-4, Ñ2 B2 D6 om 1-2 (for both, cf v l 5 10 25) —a) D5 7-9 T2 M1 Cv r m स (for सु) Ś1 Ñ1 D2 10 स विमानाच निष्क्रम्य, V2 D11 स विमानाद्विनि स्त्य, D1 3 4 स विमान तु सक्रम्य —b) T2 प्रासादान् (for प्राकार) M2 प्रासाद हरियूथप —c) V2 अथ हनुमान् (hypm) (for हनूमान) Ñ1 यथा वेगेन हनुमान —d) Ś1 Ñ1 V2 D1 2 10 घनाद्धन, D3 4 व(D4 घ)-नाद्धन, Cv r m k t as in text (for घनान्तरे) D11 यथा विद्युद्दिवाघन (sic) —After 1, D3 reads colophon of 5 10

2 Ñ2 V1 B D6 om 2 (cf v l 1) —b) D5 7-9 Cv r m निवेशनात्, G2 Cvp निवेशनं, Ct निवेशनान (as in text) —For 2ab, Ś1 Ñ1 V2 D1-4 10 11 subst

325* रावणान्त पुर सर्वं विचित्य स महाकपि ।

[ D3 रम्य, D11 दिव्य (for सर्व) V2 विचिन्वन्, D1 4 निविच्य, D2 3 विचित्य Ñ1 मारुतात्मज (for स महाकपि) ]

—Then Ś1 Ñ1 V2 D2 10 11 cont , while D1 3 4 cont l 1 and 3 and ins l 4 after 2

326* न ददर्श तत सीता मैथिलीं जनकात्मजाम् ।
चन्द्रलेखामिव नवा व्योम्नि नीलाभ्रसवृताम् ।
तत्र प्रासादहर्म्येषु विमानभवनेषु च ।
निष्कुटेषु च रम्येषु तथा सर्ववनेषु च ।

[ (l 1) V2 D1 4 तदा (for तत ). Ś1 D10 न तत्र ददृशे सीता (for the prior half) V2 निरीक्ष्य च पुन पुन (for the post half) —After l 1, Ñ1 ins

326(A)* राघवस्य प्रिया भार्या यत्नेऽदृष्टिदागन ।

—(l 2) Ñ1 -सदृशा, V2 -सन्निभा, D11 -समभूते (for सवृताम्) —(l 3) D3 सन (for तत्र) D4 मानव- (sic) (for विमान-) D3 तथा सयानेषु च (for the post half) —V2 om (hapl) l 4 —(l 4) Ñ1 D2 नि कुटेषु Ś1 शाल-, D10 माल- (for सर्व-) D2 -जनेषु (for वनेषु) D1 4 स भवनेषु (for सर्वव°) Ñ1 जन्जेषु वनेषु च, D3 तथासवगृहेषु च (for the post half) ]

—d) Ś1 V2 D1-4 10 11 निरीक्ष्य च मुहुर्मुहु , Ñ1 समिप्रेक्ष्य पुन पुन —After 2, Ś1 V2 D2 10 11 ins , D1 3 4 cont after l 4 of 326*, whereas Ñ2 B2 D6 ins before 3

327* नेह सीतेति हनुमाश्चक्रे बुद्धि महाकपि ।

[ V2 नेय (for नेह) and हनुमानि (for °मान्) Ñ2 D2 D6 चिन्तयानाम वानर (for the post half) ]

—Thereafter Ś1 D1-4 10 11 read 6 (followed by 333*) —After 2, Ñ1 ins

G 5 15 0
B 5 13 3
L 5 8 9

भूयिष्ठं लोडिता लङ्का रामस्य चरता प्रियम् ।
न हि पश्यामि वैदेहीं सीतां सर्वाङ्गशोभनाम् ॥ ३
पल्वलानि तटाकानि सरांसि सरितस्तथा ।
नद्योऽनूपवनान्ताश्च दुर्गाश्च धरणीधराः ।
लोडिता वसुधा सर्वा न च पश्यामि जानकीम् ॥ ४
इह संपातिना सीता रावणस्य निवेशने ।
आख्याता गृध्रराजेन न च पश्यामि तामहम् ॥ ५
किं नु सीताथ वैदेही मैथिली जनकात्मजा ।
उपतिष्ठेत विवशा रावणं दुष्टचारिणम् ॥ ६

---

328* सीता नेहेति नेहेति सकलान्त पुरे कपि ।
विमानाद्विचरस्तत्र बुद्धि चक्रे महामति ।

—Thereafter Ñ1 reads st 6

3 V1 B1 3 4 om 3 (cf v l 1) Ñ2 B2 D6 ins 327* before 3 —[a]) D5 6 भूयिष्ठा Ś1 Ñ V2 B2 D1-4 6 10 11 विचिता, D7-9 S Cr m g k t लोलि(S °ळि)ता (for लोडिता) —[b]) Ś1 D2 10 [अ]नुग(Ś1 D2 °र)ता (for चरता) Ś1 B2 D2 3 11 प्रिया (for प्रियम्) G1 परमप्रिया (for चरता प्रियम्) —D1 4 om 3[cd] —[c]) Ś1 नानु, Ñ1 D10 नैव, Ñ2 V2 B2 D2 3 6 11 न च (for न हि) G3 ‥श्यामि —[d]) Ñ1 T1 3 सर्वांगसुन्दरी —After 3, Ñ2 D6 ins

329* अपश्यञ्जानकी सीता वेदिकाश्चैत्यसश्रया ।
[ D6 प्राकारातररथ्याश्च (for the prior half) ]

4 V1 B om 4 (for V1 B1 3 4, cf v l 1) —[a]) Ś1 Ñ D1-4 6 10 11 तडागानि (for तटाका°) —[c]) Ś1 Ñ2 D2 6 10 नद्यश्चोपवनाता(D6 °त)श्च, Ñ1 कुत्या नद्यो नदावता (sic), V2 कुत्या नदा वनाताश्च, D1 4 नदकूपवनाना (D1 °नाताश्) च, D3 G1 उद्यानोपवनाताश्च, Cv r m g as in text —[d]) Ś1 Ñ V2 D1-4 6 10 11 दुर्गाणि Ś1 D6 धरणीधर (sic), V2 D11 °धरान् (for °धरा) —[e]) Ś1 Ñ V2 D2 3 10 11 विचिता, D7-9 S लोलि(S °ळि)ता (for लोडिता) D1 4 विचिता वहुधा सर्वे, D6 विचित्य वहुधा सर्वं —[f]) D8 T1 3 M3 तु (for च) D10 पश्यामि च (by transp.) Ñ1 मैथिली —After 4, Ś1 Ñ1 V2 D1-4 6 (repeating after 331*) 10 11 ins, Ñ2 B cont after 331*

330* सीता कमलपत्राक्षी रामस्य महिषीं प्रियाम् ।
न सोऽस्ति शैलो भूमिर्वा सरित काननानि च ।
यत्र नार्या मया सीता मार्गिता चरता महीम् ।

[ (l 2) Ñ1 म नास्ति (by transp) (for न सोऽस्ति) Ñ2 B D6 (second time) न सति भुवि शैला वा(B3 °लान्ते), V2 न सास्ति भूमिर्वा शलो, D6 (first time) न मास्ति भूमि शलो वा (for the prior half) V2 नद्यश्च, D6 (first time) नर (sic) (for सरित) Ñ2 B2 4 D2 3 6 (both times) वा (for च) —(l 3) Ñ1 न यत्र (by transp) V2 यत्र चार्या Ñ2 B D6 (second time) येष्वार्या न(B3 आर्या येन [sic]) प्रयत्नेन (for the prior half) Ñ2 B D6 (second time) मया (for महीम्) ],

while Ñ2 ins after 4, B ins before 5 (preceded by 330*) and D6 cont after 330* (first time)

331* यत्कृते वानरा सर्वे विक्षिप्ता सर्वतो दिश ।
यत्र चाप्रतिम तीर्णा सागर मकरालयम् ।
ता न पश्यामि वैदेहीं धर्मज्ञा धर्मदर्शिनीम् ।

[ (l 3) B2 transp ता and न B1 धर्मचारिणी (for °दर्शिनीम्) ]

5 Before 5, B ins 331* and 330* —[a]) Ñ2 B3 4 इति (for इह) —[c]) D6 गृहराजेन (sic), G3 गृध्ररा · —[d]) G3 damaged for न च. D4 om च (subm) Ś1 Ñ2 D6 T2 जानकीं, Ñ1 V1 B D2 10 11 मैथिलीं (for तामहम्) D7 9 न च मा दृश्यते तु किं

6 Ñ2 V B D6 G1 om 6 Ś1 D1-4 10 11 read 6 (followed by 333*) after 327* Ñ1 reads 6 (followed by 333*) after 328* —[a]) D7 9 T1 G2 Cr तु, Cv m g k t as in text (for नु) T2 [अ]द्य, Cr m g as in text (for [अ]थ) Ś1 Ñ1 D1-4 10 11 कथ हि (Ñ1 तु, D3 च) सीता (for किं नु सीताथ) —After 6[ab], M2 ins

332* उपविष्टा विशालाक्षी रावणेन हृता बलात ।

—[c]) T3 अव-, Cv g as in text (for उप) Ś1 उपतिष्ठेदमत्या सा, Ñ1 चिरमेवावतिष्ठेत, D2 10 उपतिष्ठेत्तम(D2 °त वि)-वशा, D11 उपतिष्ठेत्तु विवशा, T2 उपातिष्ठद्विशालाक्षी —[d]) D4 ‥ दुष्टवारण, D7-9 Ct रावणेन हृता बलात् ❀ Ct 'रावण दुष्टचारिणम्' इति पाठे तु यथाश्रुतमेव ❀

—After 6, Ś1 Ñ1 V2 D1-4 10 11 ins

333* नेह स्थास्यति वैदेही रामपत्नी यशस्विनी ।
अन्य क्रमिष्ये दुर्धर्षं कानन प्रमदालयम् ।
विचित्य लङ्का यत्नेन हनुमान्मारुतात्मज ।
रजन्या यामशेषाया प्राकारे निपपात ह ।
स त्वहृष्टेन मनसा प्राकारस्थो महाकपि । [5]
क्व सा सीतेति हनुमाश्चिन्तयामास वानर ।

[ (l 2) Ñ1 V2 D4 अभ्यु(Ñ1 V2 °न्य)त्क्रमिष्ये, D11 अन्यद्गमिष्ये D10 दुर्गर्गं (for °र्धर्षं) Ś1 कचन, D2 10 काचन (for कानन) V2 प्रमदावन —For l 3-5, cf 323* (l 4, 5 and 8 respy). —(l 3) Ñ1 D1-3 विचित्य (sic) D3 तत्नेन, D4 यत्नेह (sic) (for यत्नेन) Ñ1 लघुविक्रम (for मारुतात्मज) —(l 4) Ś1 D10 राजधान्यामशेषाया

क्षिप्रमुत्पततो मन्ये सीतामादाय रक्षसः ।
बिभ्यतो रामबाणानामन्तरा पतिता भवेत् ॥ ७
अथवा ह्रियमाणायाः पथि सिद्धनिषेविते ।
मन्ये पतितमार्याया हृदयं प्रेक्ष्य सागरम् ॥ ८
रावणस्योरुवेगेन भुजाभ्यां पीडितेन च ।
तया मन्ये विशालाक्ष्या त्यक्तं जीवितमार्यया ॥ ९
उपर्युपरि वा नूनं सागरं क्रमतस्तदा ।
विवेष्टमाना पतिता समुद्रे जनकात्मजा ॥ १०
आहो क्षुद्रेण चानेन रक्षन्ती शीलमात्मनः ।
अबन्धुर्भक्षिता सीता रावणेन तपस्विनी ॥ ११
अथवा राक्षसेन्द्रस्य पत्नीभिरसितेक्षणा ।
अदुष्टा दुष्टभावाभिर्भक्षिता सा भविष्यति ॥ १२
संपूर्णचन्द्रप्रतिमं पद्मपत्रनिभेक्षणम् ।
रामस्य ध्यायती वक्त्रं पञ्चत्वं कृपणा गता ॥ १३ G 5 15 33 B 5 13 13 L 5 8 21

(for the prior half) V2 विनिपात (for निप°) —(1 5) Ś1 Ñ1 D10 स तु दृष्ट्वेन, V2 स प्रहृ°, D1 4 मोप्रहृ°, D3 तस्वहृ° (for स त्वहृ°) —(1 6) Ś1 D2 10 कामै सीनेति, Ñ1 क सा वस्तीति (sic), D3 नेह सी° (for क सा सीनेति) Ñ1 चिंतयस्तु महाकपि, D3 स्वचित्तेनावधारयन् (for the post half) ], whereas G2 reads 15 and 11–14 after 6

7 [a]) Ś1 Ñ1 B4 D2 6 10 11 उत्पतितो —[b]) Ś1 Ñ B3 D2 9–11 राक्षस, B1 (m as in text) रावण (for रक्षस) —[c]) Ñ1 निर्भीतो, D2 वित्रस्तो, G3 damaged (for बिभ्यतो) D1 4 -बाणैश्च (for बाणानाम्) Ś1 D10 वित्रस्ता राक्षस(D10 °वण) दृष्ट्वा, Ñ2 V1 B D6 प्रच्यु(B3 °स्यु)ता रावणस्याङ्काद् —[d]) Ś1 D1–4 10 11 अ(Ś1 चा, D10 सा)-कांत्रि, Ñ1 V2 लङ्का नि-, B1 (m as in text) 3 अथवा (for अन्तरा) Ñ2 V1 B D6 भुवि (for भवेत्)

8 [a]) Ñ2 V1 B D6 तस्या वा(B4 °श्च) (for अथवा) D4 क्रियमाणाया —B3 om (hapl ?) 8[bc] G3 mostly damaged for [b] —[c]) Ś1 Ñ1 V2 D1–4 10 11 नूनं स्फुटितम्, Ñ2 V1 B1 2 4 D6 शङ्के हृदयम् (for मन्ये पतितम्) —[d]) Ñ2 V1 B1 2 (marg as in B3) D6 स्फुटित, B3 फलित, B4 ज्ञानित (sic) (for हृदय) Ś1 Ñ1 V2 D1–5 9–11 वीक्ष्य Ñ2 V1 B D6 रावण, T2 सगर (for सागरम्)

9 [b]) V1 B D6 भुजयो V1 B2 4 D6 11 पीडनेन (for पीडितेन) V1 B4 वा (for च) —[c]) T1 3 तदा (for तया) —[d]) Ñ2 V1 B D6 जीवित त्यक्तम् (by transp)

10 [a]) G3 damaged from परि up to साग in [b] Ś1 Ñ V2 D2 5 7 9–11 T2 M2 सा (for वा) —[b]) Ñ2 V1 B2–4 D6 गच्छतस् (for क्रम°) D5 11 तथा —Ñ1 D11 repeat (var) 10[cd] after 15[ab] —[c]) Ś1 Ñ1 (first time) 2 V1 2 B D1–10 11 (both times) विचेष्टमाना —G3 damaged from प up to द्रे in [d] Ñ1 (second time) निश्चेष्टा पतिता सा वा —[d]) Ñ1 (first time) V2 D1 3 4 8 M1 सागरे Ś1 Ñ1 (both times) 2 V B2–4 D1–4 6 10 11 (both times) जानकी ध्रुव (for जनकात्मजा). B1 जानकी सुमुखी ध्रुव

11 G2 reads 15 and 11–14 after 6 —[a]) Ś1 Ñ1 D1–5 7–9 11 M3 Cv r g k अहो, Ñ2 V1 B D6 अथ, Ct आहो (as in text) Ñ1 क्षत्रेण, B2 (*sup lin* as in text) क्रुद्धेन (for क्षुद्रेण) Ś1 Ñ V1 B D1 3 4 6 10 वा तेन, D11 G3 M1 पापेन, G2 चान्येन (for चानेन) V2 अथ क्षीणेन धर्मेण —[b]) D6 रक्षसा (sic) (for रक्षन्ती) Ś1 D10 उत्तम, D11 आत्मना (for आत्मन) —[c]) Ñ2 D6 अवश्य, B1 (marg after corr as in text) सुबन्धुर् (for अबन्धुर्) B3 भविता (sic) (for भक्षिता) —[d]) V2 D6 यशस्विनी, M1 मनस्विनी —After 11, Ñ1 ins

334* दुरात्मना तेन देवी जानकी रामवल्लभा ।

12 For sequence in G2, cf v l 11 D6 om 12[c]–13[b] G3 damaged for 12[c] —[c]) Ś1 Ñ V2 B1–3 D1–4 10 11 -चित्ताभिर्, V1 -चेष्टाभिर् (for -भावाभिर्) B4 अदुष्टचित्ता दुष्टाभिर् —[d]) T2 M1 वा (for सा) D5 न्यस्तदेहा (for भक्षिता सा) Ś1 Ñ2 V B D1–4 10 11 जनकात्मजा, Ñ1 जानकी भवेत् (for सा भविष्यति) ❀ Ck अत पर समीचीन प्रक्षेपस्थलम् । अत्र द्वौ श्लोकौ प्रक्षिप्तौ प्राचीनकोशेषु न स्त । , Ct एतदुत्तरम्, "संपूर्णचन्द्र°, रामस्य ध्याय°, हा राम लक्ष्मणे°, विलप्य बहु वैदेही न्यस्त°" इत्यादि श्लोकद्वय प्रक्षिप्तमिति कनक ❀ —After 12, Ś1 D2 10 read 15

13 For sequence in G2, cf v l 11 D6 om 13[ab] (cf v l 12). D1 3 4 M1 om (M1 hapl ) 13–14 G3 repeats erroneously 13[ab] after 14 —For 13[ab], Ś1 Ñ1 V2 D2 10 11 subst

335* फुल्लपद्मजगर्भाभं शुभं ज्वलितकुण्डलम् ।

[Ñ1 -पद्माभ, D2 -गभाक्ष (for -गर्भाभ) V2 शुभ, D11 शुभ (for शुभं) D2 ज्वलित कुण्डलप्रिय (for the post half) ] —while Ñ2 V1 B subst.

336* अथवा चन्द्रसकाश वक्त्रमुज्ज्वलकुण्डलम् ।

[B3 उज्ज्वल- (for उज्ज्वल) ]

—[c]) G3 illeg from वक्त्र up to भविष्य in 14[d] Ś1 D10 11 रामस्य चिंतयत्यार्ये, D11 °यन्तस्य) Ñ1 V2 रामानन चिंतयती, Ñ2 V1 B D2 6 रामस्य चिंतयती (B3 विचरती)

G 5 15.34 B 5 13.13 L. 5 8.22 हा राम लक्ष्मणेत्येव हायोध्येति च मैथिली ।
विलप्य बहु वैदेही न्यस्तदेहा भविष्यति ॥ १४
अथवा निहिता मन्ये रावणस्य निवेशने ।
नूनं लालप्यते मन्दं पञ्जरस्थेव शारिका ॥ १५
जनकस्य कुले जाता रामपत्नी सुमध्यमा ।
कथमुत्पलपत्राक्षी रावणस्य वशं व्रजेत् ॥ १६
विनष्टा वा प्रनष्टा वा मृता वा जनकात्मजा ।
रामस्य प्रियभार्यस्य न निवेदयितुं क्षमम् ॥ १७
निवेद्यमाने दोषः स्याद्दोषः स्यादनिवेदने ।
कथं नु खलु कर्तव्यं विषमं प्रतिभाति मे ॥ १८
अस्मिन्नेवंगते कार्ये प्राप्तकालं क्षमं च किम् ।
भवेदिति मतिं भूयो हनुमान्प्रविचारयन् ॥ १९
यदि सीतामदृष्ट्वाहं वानरेन्द्रपुरीमितः ।
गमिष्यामि ततः को मे पुरुषार्थो भविष्यति ॥ २०
ममेदं लङ्घनं व्यर्थं सागरस्य भविष्यति ।
प्रवेशश्चैव लङ्कायां राक्षसानां च दर्शनम् ॥ २१

---

सा —d) Ś1 D2.10 नूनमागता, Ct as in text (for कृपणा गता) Ñ1 सा दैन्य कृपण गता, D11 हेल कृतपणा गता (sic)

14 For sequence in G2, cf v l 11 Ś1 D1 3 4 10 M1 om 14 (for D1 3 4 M1, cf v l 13) G3 illeg up to भविष्य in d (cf v l 13) —a) Ñ2 V B D2 6 8 11 T G2 M3 [ए]व, Ct as in text (for [ए]व). Ñ1 हा लक्ष्मणेति (for लक्ष्मणेत्येव) —b) Ñ1 V2 चासकृत्, D7 9 भामिनी (for मैथिली). Ñ2 V1 हायोध्यापि चासकृत् (subm), B1 हा चायोध्येति चासकृत्, B2-4 हायोध्या इति चा(B3 वा)मकृत् (with hiatus), D2 लक्ष्मणेति च चासकृत्, D5 हा अयोध्येति मैथिली (with hiatus), D6 हा हायेत्यपि चासकृत्, D11 अयोध्येति चामकृत् (subm) —c) Ñ1 बहुल सीता (for बहु वैदेही) —d) V2 D8 त्यक्त- (for न्यस्त-) Ñ2 V1 B D6 मृतावश्य तपस्विनी —After 14, G3 repeats erroneously 13ab

15 Ś1 D2 10 read 15 after 12 G2 reads 15 after 6 —a) D8 रहो वा, G3 अदृष्ट्वा (for अथवा) Ś1 D3 4 10 G1 Cm निहिता, Ñ1 B3 D1 6 11 निहता, B1 4 D5 निहता, Cv g k t निहिता (as in text) —b) D6 निवेशन —After 15ab, Ñ1 D11 repeat (var) 10cd —c) V1 B सीता, D2 11 क्वचिल्, D7 9 Ct भृशं, Ck as in text (for नूनं) M1 विलप्यते Ñ2 V1 B D1 3 4 6 7 9 G1 2 Ct बाला, D2 नूनं, D5 T1 3 M3 सीता, D11 नित्यं, Cr as in text (for मन्दं) Ś1 D10 क्वचिद्वालपती(Ś1 °प्यते) दीनं, Ñ1 क्वचिन्नालप्यते नून, V2 नून सा लपते बाला, T2 नून लालप्यमाना सा —d) Ś1 Ñ V B1 2 D1-6 8 11 Ct सारिका

16 Ś1 D10 om. 16ab —a) T1 3 M3 सुता सीता (for कुले जाता) —b) G3 damaged from ली up to कथमु in c Ñ V1 B2-4 D3 6 T2 G1 2 यशस्विनी, B1 तपस्विनी, D8 सुधार्मिका (for सुमध्यमा) —c) Ś1 अथवा (for कथम्) B1(m after corr as in text) -वर्णा या (for -पत्राक्षी) —After 16c, Ñ1 ins

337* वैदेही वामलोचना।
दशरथगृहलक्ष्मी सूर्यवंशविवर्धिनी।
राक्षसेन दुरात्मना

—d) Ś1 Ñ1 D1-4 10 11 वशानुगा, Ñ2 V B D6 वश गता (for वश व्रजेत्)

17 a) G3 damaged after विन up to प्रन —b) D1 4 वानरैर्, D11 मृता च (for मृता वा). Ñ2 V1 B D6 भक्षिता वापि मैथिली. —After 17ab, B2 ins

338* अदृष्ट्वा ता कथं यामि किं वदिष्यति राघव ।

—c) D11 तमस्य (sic) (for रामस्य). —d) D6 om न (subm) D5 हि वेदयितु (for निवेद°) B1 3.4 क्षम.

18 a) V2 D6 11 निवेद्यमानो —b) Ñ2 V1 B1 (orig.) 2-4 D6 स(B1 [marg also] 2 4 अ)दोषमनिवेदन —d) G2 मा (for मे) Ś1 Ñ V1 B1 4 D1-4 6 10 11 व्यसन खलिव(D1 4 नन्वि)द महत्, V2 B2 3 दारुण(V2 प्रासेद) व्यसन महत्

19 Ñ2 V1 B D6 om 19 G3 mostly damaged for a —a) Ś1 तस्मिन् D11 एवविधे (for °गते) D10 कार्यं —b) V2 काले, D3 -काल- (for -कालं) D3 तु (for च) —c) Ś1 D11 मतिर्, D1 4 पुनर्, D5 8 T2 3 M मत (for मतिं) —d) Ñ1 प्रविणोत्तम, D5 T2 3 M2 3 प्रविचारयत्, G3 प्रविचा[illegible] —After 19, Ñ1 (l 1 partly illeg) ins

339* [illegible] सति [illegible] विचेतु प्रविचारयत् ।
अन्तर्मना आत्मनैव सखा रामस्य वानर ।

20 a) D3 अदृष्ट्वैव, D4 अ[illegible] (for अदृष्ट्वाह) —b) B3 गमिष्यामि (sic), T1 3 वानरस्य (for वानरेन्द्र) D5 अत (for इत) D4 न भविष्यति गोचरे (gloss चक्षुर्विषये न भविष्यति) —D4 om 20c-21b

21 D4 om 21ab (cf v l 20) Ñ2 V1 B D6 om. 21 —b) Ś1 V2 D2 10 11 महात्मन', Ñ1 महीयस (for भविष्यति) —After 21ab, Ñ1 ins

किं वा वक्ष्यति सुग्रीवो हरयो वा समागताः ।
किष्किन्धां समनुप्राप्तौ तौ वा दशरथात्मजौ ॥ २२
गत्वा तु यदि काकुत्स्थं वक्ष्यामि परमप्रियम् ।
न दृष्टेति मया सीता ततस्त्यक्ष्यति जीवितम् ॥ २३
परुषं दारुणं क्रूरं तीक्ष्णमिन्द्रियतापनम् ।
सीतानिमित्तं दुर्वाक्यं श्रुत्वा स न भविष्यति ॥ २४
तं तु कृच्छ्रगतं दृष्ट्वा पञ्चत्वगतमानसम् ।
भृशानुरक्तो मेधावी न भविष्यति लक्ष्मणः ॥ २५
विनष्टौ भ्रातरौ श्रुत्वा भरतोऽपि मरिष्यति ।
भरतं च मृतं दृष्ट्वा शत्रुघ्नो न भविष्यति ॥ २६
पुत्रान्मृतान्समीक्ष्याथ न भविष्यन्ति मातरः ।
कौसल्या च सुमित्रा च कैकेयी च न संशयः ॥ २७
कृतज्ञः सत्यसंधश्च सुग्रीवः प्लवगाधिपः ।
रामं तथागतं दृष्ट्वा ततस्त्यक्ष्यति जीवितम् ॥ २८  G 5 15 46 B 5 13 26 L 5 8 35

---

340* महात्मान श्वतश्वासो कर्म मेऽविभविष्यति ।

—c) Ñ1 D8 [अ]पि (for [गु]व) Ñ1 V2 D1–6 10 11 एकाया —d) G3 damaged for राक्षसाना

22 a) Ś1 Ñ V B1 2 4 D1–4 10 11 T2 3 M3 मा, D6 T1 मा (for वा) B3 वक्ष्यस्य (sic), D9 वक्ष्यति (for वक्ष्यति) —After 22a, Ñ1 ins

341* वानराधिपतिर्नली ।
कुमुदाङ्गदद्विविदा मानवीयो महाकपि ।
सुषेण परमश्चव ये चैवाद्या कपीश्वरा ।
प्रेक्षिता रामसुग्रीवौ जाम्बवान्स हरीश्वर ।
कि मा वक्ष्यन्ति तत्रस्था [5]

—b) Ñ1 T2 [ऽ]पि (for वा) D7 9 [अ]पि सगता, D8 महात्मा (for समागता) —c) Ś1 B3 4 D6 किष्किन्ध्या (Ś1 °न्धा) B2 D1–4 T3 M2 3 समनुप्राप्त, D5 7 9 अनुमप्राप्त (D5 °प्तौ) —d) Ñ1 V2 उभौ वा रामलक्ष्मणौ

23 Ñ1 om 23–24b —a) D8 नत्वा, G1 यात्वा Ñ2 V1 B D6 [अ]ह (for तु) B1 काकुत्स्थौ —b) Ñ2 V1 B1 2 D6 परमाप्रियम्, V2 °मप्रिय, D7 9 परुष वच (for परमप्रियम्) ⊕ Cr g अप्रियमिति (Cr °ति पद)च्छेद ⊕ —c) D5 तु दृष्टा, D8 G3 दृष्टा हि, Ck t as in text (for दृष्टेति) Ś1 V2 D1–4 10 11 न सीतामधिगच्छामि, Ñ2 V1 B D6 न दृष्टा (B2 3 °ष्ट्वा) मैथिलीत्येव (B1 °ली हो )व —d) S1 D10 त्यक्ष्यामि (for °क्ष्यति) B4 जीवन

24 Ñ1 om 24ab (cf v l 23) —ab) B2 D4 (before corr ) 10 पुरुष, G2 पौरुष, Cv r m g t as in text (for प°) G3 दारुण- Ñ2 D6 क्षिप्र, V1 B4 कृच्छ्र, B1 3 क्षुद्र, B2 (sup lin as in B1) क्षुब्ध, Cv r m g as in text (for क्रूर) Ñ2 V1 B D6 क्रमम्, G1 तीव्रम्, Cv r m g as in text (for तीक्ष्णम्) V2 D3 5 7–9 G2 Ct transp क्रूर and तीक्ष्णम् B4 -दीपन (for तापनम्) —c) V1 D1 4 -निमित्ते Ñ2 B D6 स श्रुत्वा, D1 दुर्वाक्य (sic), D2 4 11 दुर्वाच्य (for दुर्वाक्य) —d) Ñ2 B2 D6 दुर्विनय, B1 4 दुर्वाच्य, B3 दुराप, D3 सत्य स (for श्रुत्वा स) S1 D2 11 न स (by transp ), D1 4 [अ]सौ न (for स न)

25 D2 6 om (hapl ) 25–26b —a) B2 च कृच्छ्र (for तु कृच्छ्र-) —b) Ś1 पञ्चत्वे, D5 पञ्चत्व (for पञ्चत्व ) Ñ2 V1 B राम पञ्च समागत, V2 पञ्चत्वमथवा गत, D1 4 स तत्र गतमानस —c) Ñ V B1 D7 -[अ]नुरक्त-, D5 -[अ]नुतप्तो (for °रक्तो) —d) B1 D3 लक्ष्मणो न भविष्यति

26 D2 6 om 26ab (cf v l 25) For 26–27, V1 B subst 343* —a) D10 दृष्ट्वा (for श्रुत्वा) —b) Ś1 Ñ1 V2 D1 4 G1 2 न भविष्यति (for ऽपि मरि°) —c) G2 श्रुत्वा (for दृष्ट्वा) —d) M2 [ऽ]पि मरिष्यति (for न भवि°) —For 26cd, Ś1 Ñ V2 D1–4 6 10 11 subst

342* भ्रातॄन्विनष्टाञ्छ्रुत्वा तु शत्रुघ्नोऽपि मरिष्यति ।

[Ś1 विनाश, Ñ2 विनष्टा, V2 D1 4 श्रुत्वा च, D2 10 जा°, D3 श्रुत्वापि, D6 °म, D11 तान्दृष्ट्वा (for श्रुत्वा तु) Ñ1 D1 4 न(Ñ1 [ऽ]पि )भविष्यति (for ऽपि मरि°) ]

27 a) Ś1 Ñ V2 D1–4 6 10 11 मृतान्पुत्रान् (by transp ) Ñ1 om समीक्ष्याथ —b) Ś1 Ñ V2 D1–4 6 10 11 ता मरिष्यति (for न भवि°) —d) D11 न च (by transp ) —For 26–27, V1 B subst

343* भरतो मातरश्चैषा शत्रुघ्नश्च मरिष्यति ।

[B1 [ए]व (for [ए]षा) B2 भरतोप्यत्र तरसा (for the prior half) ]

—V1 B cont , whereas Ñ2 D6 ins after 27

344* यदि गच्छाम्यहं सीतामदृष्ट्वा जनकात्मजाम् ।
कृच्छ्रस्येक्ष्वाकुवंशस्य नाश एव भवेद्ध्रुवम् ।

[(l 1) D6 [अ]हो (for [अ]हं). V1 सीदन (for सीताम्) —(l 2) B3 कृत्स्न (for कृच्छ्र) B1 एव (for एव) B2 नाश एव भविष्यति (for the post half) ]

28 a) Ś1 Ñ1 V2 D2 10 11 हितश्च (for कृतज्ञ) G2 सत्यवधरा —b) Ñ1 च कपीश्वर , Ñ2 V1 B D6 11 प्लवगेश्वर , D10 प्लवगर्षभ —c) Ś1 Ñ V B D1–4 6 10 11 कृच्छ्रगत (for तथा°) V2 सदा —d) Ś1 Ñ V B D1 2 4 6 11 राजा, D3 यदि, D10 त्वक्त (for न स) Ś1 Ñ D10 त्यजति (for °क्ष्यति) —After 28, Ñ2 V1 B 2 4 D6 ins

5 15 47 दुर्मना व्यथिता दीना निरानन्दा तपस्विनी ।
5 13 27 पीडिता भर्तृशोकेन रुमा त्यक्ष्यति जीवितम् ॥ २९
5 8 36
वालिजेन तु दुःखेन पीडिता शोककर्शिता ।
पञ्चत्वगमने राज्ञस्तारापि न भविष्यति ॥ ३०

मातापित्रोर्विनाशेन सुग्रीवव्यसनेन च ।
कुमारोऽप्यङ्गदः कस्माद्धारयिष्यति जीवितम् ॥ ३१

भर्तृजेन तु शोकेन अभिभूता वनौकसः ।
शिरांस्यभिहनिष्यन्ति तलैर्मुष्टिभिरेव च ॥ ३२

सान्त्वेनानुप्रदानेन मानेन च यशस्विना ।
लालिताः कपिराजेन प्राणांस्त्यक्ष्यन्ति वानराः ॥ ३३

न वनेषु न शैलेषु न निरोधेषु वा पुनः ।
क्रीडामनुभविष्यन्ति समेत्य कपिकुञ्जराः ॥ ३४

सपुत्रदाराः सामात्या भर्तृव्यसनपीडिताः ।
शैलाग्रेभ्यः पतिष्यन्ति समेत्य विषमेषु च ॥ ३५

विषमुद्बन्धनं वापि प्रवेशं ज्वलनस्य वा ।
उपवासमथो शस्त्रं प्रचरिष्यन्ति वानराः ॥ ३६

345* भीममारोदनं व्यक्तं भविष्यति गते मयि ।

[D6 आवेदन (for °मारो°)]

☞ V1 illeg from st 29 up to Sarga 19

29 Ś1 M2 om (hapl) 29 Ñ1 repeats (var) 29 after 347* D1 4 transp $^{ab}$ and $^{cd}$ —$^a$) Ñ1 (second time) illeg for दुर्मना D10 दुर्दुरुश्चथिता (sic) (for दुर्मना व्य°) —$^b$) Ñ1 (second time) निरालया (for °नन्दा) V2 यशस्विनी (for तप°) Ñ2 B1–3 D6 रामा (B2 D6 रुमा, B3 माता) तस्य मरिष्यति —For 29$^{ab}$, B4 subst, while B1 (marg) ins after 29$^{ab}$

346* सुग्रीवे तु मृते राज्ञि तस्य पत्नी मरिष्यति ।

[B1 च (for तु) and रुमा तस्य (for तस्य पत्नी)]

—$^c$) T2 व्रीडिता (for पी°) Ñ1 (first time) -दुःखेन (for -शोकेन) —$^d$) D10 तारा (sic) (for रुमा) Ñ1 (first time) शोकेन महता वृता, Ñ2 B D6 भार्या चैव (B4 तस्य) पतिव्रता —After 29, Ñ1 ins

347* न जीविष्यति वैदेही . . . परायणा (illeg) ।

30 $^a$) B4 चैवव्येन (for वालिजेन) Ñ1 B1 2 D1–4 6 10 G2 3 M1 च (for तु) Ñ1 B3 D3 शोकेन (for दुःखेन) D8 वालिनो मृतिदुःखेन —$^b$) V2 पतिता Ñ1 M1 दुःख-, D6 दोष- (for शोक-) Ñ2 B D5 7 9 10 कर्पिता (for -कर्शिता) Ś1 पीडित शोककर्शित —$^c$) B3 पञ्चत्वगमनेनाशु, D7 9 पञ्चत्वमागता राज्ञी, D8 T M3 पञ्चत्वं च (T2 तु) गते राज्ञि (D8 T2 °ता राज्ञी)

31 D8 transp 31 and 32 —$^a$) Ñ2 B D6 मातापितृवियोगेन —$^c$) D1 4 G1 हि, D3 न (for ऽपि) Ś1 [आ]गद (for [अ]ङ्गद) Ñ2 B D3 6 श्रीमान्, D7 9 तस्माद्, D8 बालस् (for कस्माद्) —$^d$) D7 9 विजहिष्यति (for धारयि°) Ñ2 B D6 8 सुव्यक्त (B3 स्मयुक्त, D8 तस्मात्न) न भविष्यति

32 Ñ2 B D6 om 32 D8 transp 31 and 32 Note hiatus between $^a$ and $^b$ —$^a$) V2 D1 3 4 M1 च, G3 हि (for तु) Ś1 Ñ1 V2 D1–4 7–10 T3 M1 3 दुःखेन (for शोकेन) —$^b$) Ś1 Ñ1 D2 3 10 परि (Ñ1 °रा) भूता, V2 M1 हति (M1 °धि) भूता (to avoid hiatus), D1 4 11 G1 2 M3 ह्य (D1 4 चा, G1 त्व) भिभूता (to avoid hiatus), D8 अभिजाता —$^c$) D3 शिरसि Ś1 D2 च, D10 शि- (for [अ]भि-) Ś1 D5 -हरिष्यति —$^d$) G2 वा (for च)

33 $^a$) D10 सत्त्वेन (for सान्त्वेन) Ś1 Ñ1 V2 D10 11 [अ]थ, B2 तु, D2 [अ]ने- (for [अ]नु-) B4 D3 प्रसादेन, G1 3 प्रदानेन (for प्रदानेन) B1 (m also as in text) सान्त्वेनाथ प्रसादेन, B3 श्रीरामस्य प्रसादेन —$^b$) D5 reads मानेन in marg B3 [प्]त्र, D3 11 तु (for च) —$^c$) B1 पालिता D7–9 G1 नाथेन (for -राजेन) —$^d$) Ñ2 B D6 देह (for प्राणान्)

34 V2 om 34 —$^a$) D2 8 च (for second न) Ñ1 D11 M1 वनेषु वनजे (Ñ1 न च पो) शैलेषु, Ñ2 B D6 गिरीणां वनपण्डे (Ñ2 D6 °दुर्गे) षु —$^b$) Ñ2 B D6 नदीतीरेषु, G नदीरोधस्सु, M1 निर्झरेषु न, Cm g t as in text (for न निरोधेषु) Ś1 Ñ1 D1–4 10 11 नापि रोध (Ś1 °द) स्सु वानरा, D8 निरोधेषु च वानरा —$^c$) Ñ2 B D6 नानु (for अनु) —$^d$) Ś1 D1–4 10 11 -कुञ्जरैः Ñ2 B D6 भर्तृव्य (B3 4 °र्तुर्व्य) सनकर्पिता .

35 B3 om 35$^{ab}$ —$^a$) D5 न (for स-) D4 सामात्य- (for °त्या) —$^b$) B4 रामस्य शर- (for भर्तृव्यसन) D8 -कर्पिता (for -पीडिता) Ñ2 B1 2 D6 राम (B1 °ज)-व्यसनमोहिता —$^c$) Ñ2 B शैलाग्रात्प्र-, D6 °आग्रा- (for °ग्रेभ्य) —$^d$) D7–9 समेषु Ś1 Ñ1 V2 D1–4 10 11 हरि (V2 कपि) यूथपा, Ñ2 B D6 हरिपुंगवा (for विषमेषु च)

36 Ñ2 B D6 om 36 —$^a$) D3 विषमाद्बन्धन V2 च (for वा) —$^b$) Ś1 D10 ज्वलनेपि, T2 अनलस्य (for °नस्य) Ś1 V2 D2 9 10 11 च (for वा) —$^c$) D3 उदवासम् (for उप°) D6 चास्त्र (for शस्त्र) —$^d$) Ś1 Ñ1 V2 D2 10 11 M2 प्र (Ñ1 om) करिष्यति (for प्रच°)

घोरमारोदनं मन्ये गते मयि भविष्यति ।
इक्ष्वाकुकुलनाशश्च नाशश्चैव वनौकसाम् ॥ ३७

सोऽहं नैव गमिष्यामि किष्किन्धां नगरीमितः ।
न हि शक्ष्याम्यहं द्रष्टुं सुग्रीवं मैथिलीं विना ॥ ३८

मय्यगच्छति चेहस्थे धर्मात्मानौ महारथौ ।
आशया तौ धरिष्येते वानराश्च मनस्विनः ॥ ३९

हस्तादानो मुखादानो नियतो वृक्षमूलिकः ।
वानप्रस्थो भविष्यामि अदृष्ट्वा जनकात्मजाम् ॥ ४०

सागरानूपजे देशे बहुमूलफलोदके ।
चितां कृत्वा प्रवेक्ष्यामि समिद्धमरणीसुतम् ॥ ४१

उपविष्टस्य वा सम्यग्लिङ्गिनं साधयिष्यतः ।
शरीरं भक्षयिष्यन्ति वायसाः श्वापदानि च ॥ ४२ G 5 15 56 B 5 13 40 L 5 8 0

---

37 $^{a}$) Ś1 आयोधन, Ñ2 B1 2 4 D6 तु वै( B1 वि )नस, V2 आवेदन, D2 °हण (sic?) (for आरोदन) B3 चा-(sup lin अ)पर वैशम्य मन्ये —$^{b}$) B3 om गते मयि —$^{c}$) Ś1 D10 नाशार्थं, D6 नाथस्य (for -नाशश्च) —$^{d}$) Ñ2 B D6 सर्वेषा च, D11 भृश नाशो (for नाशश्चैव) Ś1 D1–4 10 हरीणा च भृश( D1 3 4 निधन ) तथा, Ñ1 नाशश्च हरीणा भृश, V2 हरीणा भृशनाशन. —After 37, D6 ins 348*

38 $^{a}$) G1 सोह नैव, G3 नाह चैव —$^{b}$) Ś1 किष्किदा D3 अत (for इत) Ñ2 B D6 सुग्रीवस्य पुरीमित (B1 समीपत) —After 38$^{ab}$, Ñ2 B1 3 4 ins, B2 cont after 351*, while D6 ins after 37

348* एतावन्त विनाश हि न द्रष्टुमहमुत्सहे ।
[ B1 तु ( for हि ) ]

—Ñ2 B1 3 4 D6 om 38$^{c}$–40 —$^{c}$) Ñ1 नेव, D5 T1 3 M3 न च, D11 न* B2 D11 शक्यामि (sic), D3 शक्नोमि (for शक्ष्यामि) B2 वै (for [अ]ह)

39 Ś1 Ñ2 B1 3 4 D6 10 om 39 (for Ñ2 B1 3 4 D6, cf v l 38) —$^{a}$) B2 D5 11 मयि गच्छति —$^{b}$) D3 G1 M1 महाबला (for °रथौ) —After 39$^{ab}$, Ñ1 (partly illeg) ins

349* राघवाव* ष्टौ वैदेह्या हि विनाकृतौ ।
* * * * * * * * दुस्तरम् ।

—$^{c}$) D5 T2 न (for तौ) D1 अशयितौ (sic) (for आशया तौ) D2 धरिष्यते, D5 T2 M1 म( M1 च )रिष्येते, Cm t as in text (for धरिष्येते) B2 स्वर्गयातो भविष्येते —After 39$^{c}$, Ñ1 ins

350* जीवित ध्रुवमत्यजम् ।
वानराश्च ससुग्रीवा

—$^{d}$) Ñ1 विश्वासश्च (for वानराश्च) Ñ1 V2 B2 D1 2 4 7 9 11 T1 G1 तर( B2 D1 4 °प )स्विन, D3 यशस्विन

40 Ñ2 B1 3 4 D6 om 40 (cf v l 38) B2 om 40$^{ab}$ —$^{a}$) Ñ1 मुखादो वा (for °दानो) Ś1 V2 D1–4,10 11 हस्तादो वा मुखादो वा —$^{b}$) Ñ1 D2 4 5 10 11 G3 मूलक, Cv r m g t मूलिक (as in text) —Note hiatus between $^{c}$ and $^{d}$ —$^{d}$) D5 T1 3 G2 3 M3 ह्यदृष्ट्वा (to avoid hiatus) (for अ°) Ś1 D1–4 10 11 ह्य(D3 न)दृष्ट्वा कमलेक्षणा (to avoid hiatus) —After 40, Ś1 Ñ1 V2 B2 D1–4 10 11 ins

351* तस्य बुद्धिरिय जाता निपुणस्य विपश्चित ।
रामससर्गनिर्वृत्ता धर्मिष्ठा धर्मसश्रिता ।

[ (l 1) B2 om जाता —(l 2) D11 -सशय (for -ससर्ग-) Ś1 D10 -नि( Ś1 नि )वृत्तो, D2 3 -निवृत्ता (for निर्वृत्ता) Ñ1 V2 -वत्सला, B2 -मगता (for सश्रिता) Ś1 D10 धर्मिष्ठो धर्मसश्रय (for the post half) ]

—Then B2 cont 348*

41 $^{ab}$) Ś1 -[अ]नुजले, D3 10 -[अ]तर्जले, D9 -[अ]नुपजे, Cg as in text (for -[अ]नूपजे) Ñ2 B1 सागरानूपदेशेह( B1 °शे च ) (for $^{a}$) D3 माल (for -मूल-) Ñ2 B1–3 D6 -फलायुते( D6 °त ) (for फलोदके) B4 सागरस्यैकदेशे तु बहुरत्नसमायुते —$^{c}$) Ś1 चित्या, D7 9 चिति (for चिता) D3 प्रवेष्यामि, D6 प्रवक्ष्यामि —$^{d}$) Ś1 ससिद्धम् Ñ1 अरणीभव, Ñ2 V2 B D6 जातवेदस, D10 °णे सुत, D11 °णा सुता (sic), Cr m g k t as in text (for अरणीसुतम्) —After 41, Ñ1 ins

352* वह्निम्वशिखसमादीप्त हव्यप्लुत * * * (illeg) ।

42 $^{a}$) Ñ1 illeg from वा up to $^{b}$ Ś1 V2 D1–4 10 11 क्षिप्रम् (for सम्यग्) Ñ2 B D6 प्रविष्टस्य हि( B3 4 च ) मे नून —$^{b}$) Ñ2 B D6 स्वदेह( D6 °हे ), D3 तितिणी (sic), D5 लिगिन, D11 इगित, T1 G1 2 M2 Cv p g k लिगि( G1 °ग )नीं, Cv r m t as in text (for लिङ्गिन) M1 तापयिष्यत (for साध°) Ś1 V2 D1 2 4 10 इन्द्रियाण्यु( D1 4 °ण्य )परुन्धत ( V2 °न्ध्य च ) ✽ Cv लिङ्गिन साधयिष्यत, आत्मान मोचयिष्यत । लिङ्ग शरीरम् । लिङ्गिनीमिति च पाठ । तत्रेद व्याख्यानम् । लिङ्ग सन्यास, अनशनम्, तद्वती लिङ्गिनी ता साधयिष्यत इति ।, Cr m लिङ्गिन लिङ्ग( Cr °ङ्ग ) शरीरमस्यास्तीति लिङ्गी तमात्मानमित्यर्थ ( Cr °त्मानम् ) । साधयिष्यत शरीरान्मो( Cr °र मो )चयिष्यत ।, Cg लिङ्गिनीम्, लिङ्ग सन्यासोऽनशन तद्वती लिङ्गिनी ता साधयिष्यत । लिङ्गिनमिति क्वचित्पाठ । तत्र लिङ्ग शरीर तद्वोहिनी, आत्मा त साधयिष्यत, शरीरादात्मान मोचयिष्यत इत्यर्थ ।, Ck : लिङ्गिनीं प्राणलिङ्गिनीम् ।, Ct लिङ्गिन प्राणलिङ्गिन लिङ्गशरीरवन्त वात्मान साधयिष्यत शरीरेण वियोजयिष्यत । "लिङ्गिनीम्" इति पाठे प्राणलिङ्गिनीं चितिम् । चेत्यन्यमित्यर्थ ✽

G 5 15 57
B 5 13 41
L 5 8 0

इदमप्यृषिभिर्दृष्टं निर्याणमिति मे मतिः ।
सम्यगापः प्रवेक्ष्यामि न चेत्पश्यामि जानकीम् ॥ ४३
सुजातमूला सुभगा कीर्तिमाला यशस्विनी ।
प्रभग्ना चिररात्रीयं मम सीतामपश्यतः ॥ ४४
तापसो वा भविष्यामि नियतो वृक्षमूलिकः ।
नेतः प्रतिगमिष्यामि तामदृष्ट्वासितेक्षणाम् ॥ ४५

—$^{c}$) D6 भक्षयिष्यामि (sic) —$^{d}$) M2 वानरा (for वायसा) Ś1 V2 D1 2 4 10 11 श्वापदा वायसैः सह, Ñ1 श्वापदा सह वायसैः, Ñ2 B D6 श्वापदानि वयांसि च, D3 श्वापदा वायसादय ❀ Cv श्वापदानि व्याघ्रादीन्युग्रसत्त्वानि ।, Cr श्वापदानीति लिङ्गव्यत्यय आर्ष । श्वापदा व्याघ्रादयो दुष्ट जन्तव । व्याघ्राद्यो वनचरा पशव्या श्वापदा स्मृता इति हलायुध ।, Cm g श्वापदानि श्वापदा व्याघ्रादय ❀

43 $^{a}$) Ñ1 illeg प्यृषि up to $^{b}$ D3 च ऋषिभिर्, D6 मे ऋ°, T M3 महर्षि° (for अप्यृषिभिर्) Ś1 D2 3 10 G2 3 जुष्ट, V2 दिष्टा (for दृष्ट) D8 इद समनुनिर्दिष्ट, D11 इदमपृथमिर्दिष्ट (sic) —$^{b}$) D1 4 G1 निर्वाणम् (for निर्या°) D3 om मे —D3 reads $43^{cd}$ (including 354*) after 44 —$^{c}$) T2 M2 वाप·, Cr m g k t as in text (for आप) Ś1 Ñ1 V2 D1–4 10 11 अप सम्यक ❀ Cr आप, अप इत्यर्थ ।, So also Cm g k t ❀ —$^{d}$) D8 च (sic) (for चेत्) D7 M3 पश्याम Ñ1 V2 D11 मैथिली (for जानकीम्) Ś1 D1–4 10 तामदृष्ट्वासितेक्षणा —For 43, Ñ2 B1–3 D6 subst, B4 subst l 2 only for $43^{cd}$

353* इदमत्यसुग्र प्राप्य निश्चित मनसो हि मे ।
अपो वापि प्रवेक्ष्येऽहमदृष्ट्वा जनकात्मजाम् ।

[(l 1) Ñ2 D6 अथ सुग्र (sic) (for अत्य°) B3 निश्चित्य मनसा (for °त मनसो) —(l 2) B3 वाह प्रवेक्ष्यामि ह्यदृष्ट्वा ]

—After 43, Ś1 D1–4 10 ins

354* तावत्पश्यामि वैदेही मैथिली जनकात्मजाम् ।

[Ś1 नो चेत (for तावत्) D3 ना वैदेहा न पश्यामि (for the prior half) ]

44 Ñ2 B D6 om 44 —$^{a}$) D5 शुभगा —$^{b}$) T2 कीर्तिवल्ली —For $44^{ab}$, Ś1 Ñ1 V2 D1–4 10 11 subst

355* अज्ञातरूपा सुभगा कीर्त्यमाना यशस्विनीम् ।
[Ś1 अज्ञानरूप-, Ñ1 अज्ञानमूला ]

—Ś1 D2 om (hapl) from $44^{c}$ up to l 2 of 356*. —$^{c}$) Ñ1 V2 D1 4 10 11 प्रनष्टा —Ñ1 illeg after चिररा up to $^{d}$ V2 चिरकालाच्च, D1 4 7 9–11 T2 G1 Ck t °रात्राय, Cv r m g as in text (for °रात्रीय) D3 ततस्ततो निराशस्य —$^{d}$) V2 D1 4 10 सीतामहमदृष्टवान् ❀ Cg चिररात्री जागरणेन दीर्घभूता रात्रि । प्रभग्ना समाप्ता । एव कल्याणीय रात्रि सीतामपश्यतो मे व्यर्थैव जातेत्यर्थ । "कृदिकारादक्तिन" इति दीर्घ ।, Ck चिररात्राय, अव्ययम् । चिरायेति यावत ।, Ct चिररात्रायेत्यव्ययम् । चिरायेत्यर्थ । चिराय भग्नाऽऽयन्तिम्लय गतेत्यर्थ । तीर्थस्तु—"चिररात्रीय मम" इति पाठ प्रकल्प्य सीतान्वेषणोपयुक्तत्वेन शोभनमूला सीतान्वेषणसौकर्यापादकचन्द्रिकया सुभगा सीतान्वेषणसहकारिणीति मयैव क्रियमाणा कीर्तिरेव माला यस्या सैय चिररात्री चिरकालविशिष्टा दीर्घा रात्रि स्वस्य लङ्काप्रवेशरात्रि प्रभग्ना निष्फला जातेत्यर्थ । अनेन रामकार्यसहकारिणी स्वेच्छया रात्रिरप्यात्मान वर्धितवतीति सूच्यत इत्याह ❀ —After 44, D3 reads $43^{cd}$ (including 354*)

45 Ś1 D2 om up to l 2 of 356* (cf v.l 44) —$^{a}$) G2 तापसोह (for तापसो वा) —D10 om (hapl) $45^{bc}$ —$^{b}$) V2 T2 नियत Ñ1 V2 D4 (before corr as in text) 11 -मूलक· (for मूलिक) Ñ2 B D6 वृक्षमूलफलाशन ❀ Cv तापसो वा तापस एव । अनेकार्थत्वादव्ययानामवधारणेऽत्र वाशब्द । अन्यथा पौनरुक्त्यम् । "विनाशे बहवो दोषा" इति परेण विरोधश्च ।, Cr g वाशब्दोऽवधारणे ।, Ck t तापसो जटाकाषायादिचिह्नो यति ❀ —$^{c}$) Ñ1 V2 D1 3 4 11 नाह, Ñ2 B D6 M1 न तु, D5 नियत (hypm) (for नेत). B3 -पतिष्यामि (for -गमि°) —Ñ1 illeg for $^{d}$ —$^{d}$) Ñ2 B1–3 D6 शुभानना, B4 तु जानकी; D8 [आ]यतेक्षणा, D10 यशस्विनीं (for [अ]सितेक्षणाम्) —After 45, Ś1 Ñ1 (l 1–2 only) V2 B2 D1–4 10 11 ins

356* पर्णादो वा फलादो वा यदि वा वृक्षमूलिक ।
वने वसं चरिष्यामि तामदृष्ट्वा यशस्विनीम् ।
ततस्तस्य निराशस्य सीताया दर्शन प्रति ।
लङ्घनाच्चाभवच्चिन्ता वृथेति शतयोजनम् ।
पुनश्चेत्प्रतिगच्छामि निवसामि वनेष्विह ।
कायमादीपयिष्यामि प्रविशामि स्विदर्णवम् ।

[Ś1 D2 3 10 om l 1–2 —(l 1) Ñ1 B2 D4 (before corr as above) 11 मूलक (for -मूलिक) V2 वायुभक्षो भवामि वा (for the post half) —(l 2) Ñ1 V2 तपश्च (for धर्मं) Ñ1 illeg for the post half V2 (orig, marg also as above) [अ]सितेक्षणां, D11 मनस्विनीं (for यशस्विनीम्) —(l 3) Ś1 D10 ततो (for तस्य) Ś1 सीतया (sic) (for सीताया). —(l 4) D1 लङ्घिता (sic), D3 लङ्घन, D4 अधिक (for लङ्घनाच्च) Ś1 D10 लङ्घन मे भवेद्व्यर्थम् (for the prior half) Ś1 D10 उदधे (for वृथेति) —(l 5) D1 4 पुन स्विद; D2 °श्चित्, D3 °र्न, D11 न पुन (for पुनश्चेत्) B2 पुनस्तत्र गमिष्यामि (for the prior half) —D1 om (hapl) from the post half up to $46^{a}$ Ś1 वनेष्वपि, B2 वनेथवा —(l 6) V2 काय वा दीपयिष्यामि, D11 कायमादीपयामि स्म (for the prior half) B2 [इ]व चार्णव, D11 तद° (for स्विद°) D3 काममादीपये देह प्रवेक्ष्ये वा महार्णव.]

यदीतः प्रतिगच्छामि सीतामनधिगम्य ताम् ।
अङ्गदः सहितैः सर्वैर्वानरैर्न भविष्यति ॥ ४६
विनाशे बहवो दोषा जीवन्प्राप्नोति भद्रकम् ।
तस्मात्प्राणान्धरिष्यामि ध्रुवो जीवति संगमः ॥ ४७
एवं बहुविधं दुःखं मनसा धारयन्मुहुः ।
नाध्यगच्छत्तदा पारं शोकस्य कपिकुञ्जरः ॥ ४८
रावणं वा वधिष्यामि दशग्रीवं महाबलम् ।
काममस्तु हृता सीता प्रत्याचीर्णं भविष्यति ॥ ४९

अथवैनं समुत्क्षिप्य उपर्युपरि सागरम् ।
रामायोपहरिष्यामि पशुं पशुपतेरिव ॥ ५०
इति चिन्तासमापन्नः सीतामनधिगम्य ताम् ।
ध्यानशोकपरीतात्मा चिन्तयामास वानरः ॥ ५१
यावत्सीतां न पश्यामि रामपत्नीं यशस्विनीम् ।
तावदेतां पुरीं लङ्कां विचिनोमि पुनः पुनः ॥ ५२
संपातिवचनाच्चापि रामं यद्यानयाम्यहम् ।
अपश्यन्राघवो भार्यां निर्दहेत्सर्ववानरान् ॥ ५३ G 5 15 0 B 5 13 51 L 5 8 61

46 D1 om 46[a] (cf v l 45) B1 3 4 om 46–50, D6 om 46–50[ab], Ñ2 om 46–48 Ñ1 illeg for 46 —[a]) Ś1 B2 D2–4 10 11 वा, V2 D5 7–9 T2 G M2 तु (for [इ]त ).—[b]) M1 अनभिगम्य —After 46[ab], Ś1 ins

357* ध्यानशोकपरीतात्मा चिन्तयामास वानर ।,

—whereas B2 ins

358* मनोहरा दृष्टिहरा सौगन्ध्यात्प्राणहारिणीम् ।

—[c]) Ś1 V2 D7.9 10 T1.3 G सहित , B2 D3 4 11 M सह ते , T2 सचिवै (for सहितै ) —[d]) B2 दर्शन (for वानरर्)

47 Ñ2 B1 3 4 D6 om 47 (cf v l 46) B2 om 47–50 Ś1 D10 om 47 —[a]) Ñ1 D1–4 11 सु(D11 तु)-महान्(Ñ1 D2 °हा)न्दोषो(Ñ1 °षा) —[b]) D4 जीवन प्रति (for °न्प्राप्नोति) Ñ1 D1–4 11 यच्छुभ, V2 यच्छतं (for भद्रकम्) D8 T1 3 M1 3 जीवन्भद्राणि पश्यति —[c]) D8 हि रक्षिष्ये, T2 G2 M1 हि रक्ष्यामि(M1 °मो), G1 भरिष्यामि, Ck t as in text (for धरिष्यामि ) Ñ1 V2 D1–6 11 M2 तस्मात्प्राणा हि(Ñ1 °णाति, D2 °णामि ) रक्ष्या व(D6 M2 मे) —Ñ1 illeg for 47[d]–48[b] —[d]) V2 ध्रुव, D5 8 श्रेयो (for ध्रुवो ) D2 5 8 11 M3 Cm जीवितसगम ❀ Ct तीर्थस्तु अत्र "जीवितसगम " इति पाठ कल्पयामास ❀

48 Ñ2 B D6 om 48 (for B2, cf v l 47 and for the rest, cf v l 46) Ñ1 illeg for 48[ab] (cf v l 47) V2 reads 48[ab] twice (var ) —[a]) V2 (second time) स तेनैवविध दु:ख —[b]) D11 बहुशो (for मनसा) Ś1 D10 चिंतयन् V2 (first time , second time as in D5 ) महान , D5 7 9 11 T2 G M2 बहु (for मुहु ) —[c]) D11 T2 नाभ्यगच्छत् —After 48, D7–9 G1 ins

359* ततो विक्रममागाय धैर्यवान्कपिकुञ्जर ।

49 B D6 om 49 (for B2, cf v l 47 and for the rest, cf v l 46) Before 49, Ñ2 reads 51 D5 transp [ab] and [cd] —[a]) Ś1 Ñ V2 D1 2 4 10 11 तु (for वा ) V2 दशग्रीव, D1 4 हनिष्यामि (for वधिष्यामि ) —[b]) V2 महाकाय, D3 दुरात्मान (for दशग्रीव ) —[c]) Ś1 कामतस्तु (for °मस्तु ) D8 G1 रामपत्नी हृता येन ❀ Cv रामपत्नी हृता येनेति सम्यक्पाठ ❀ —[d]) Ś1 V2 D2 10 11 प्रेत्य कीर्तिर्, Ñ पुण्या कीर्तिर्, T2 G1 M2 प्रत्याचीर्णा, Cv r m k t प्रत्याचीर्णं (as in text)

50 B om 50 (for B2, cf v l 47 and for the rest, cf v l 46), D6 om 50[ab] (cf v l 46) Note hiatus between [a] and [b]. M2 reads erroneously 49[c] as in D8 in place of 50[a] —[a]) V2 D1 3–6 11 T G1 अथ चैन Ś1 D1–4 10 11 समाक्षिप्य, Ñ V2 समादाय (Ñ1 °क्षिप्य) (for समुत्क्षिप्य) —[b]) Ś1 Ñ2 D1 2 4 10 ह्युपरि (to avoid hiatus) (for first उपरि) —D6 reads 50[cd] after 51[ab] —[c]) D6 रामस्य D5 [अ]थ (for [उ]प-). —[d]) Ś1 पशुपतिर्, D9 ❀ पतेर् (om hapl )

51 Ñ2 reads 51 before 49 —[a]) Ñ2 B2 D1 2 6 8 10 T2 3 G चिता Ñ2 D6 समामाद्य, B2 G1 समागम्य (for -समापन्न ) —[b]) B1 2 4 स (for ताम् ) Ñ1 D1–4 11 अनधि(Ñ1 मनसि )जगमिवान , Ñ2 D6 °वगम्य स , V2 मनसि चितयन् , B3 °भिगम्य च (for अनधिगम्य ताम् ) —After 51[ab], D6 reads 50[cd] D6 om 51[c]–52 Ś1 om 51[cd] —[c])D5 -योग (for -शोक-) Ñ2 समापन्न , B -परी(B3-°ती [sic])तागस —[d]) Ñ2 B तस्था च(B3 4 स) विमना कपि

52 Ñ2 D6 om 52 (for D6, cf v l 51) B om 52–67 —[a]) D8 G3 M1 तु, T1 3 G2 M1 हि, G1 नु(sic) (for न ) —[c]) V2 D3 8 T2 G3 M1 पुना, G1 पुव (for एता) ❀ Cr यावदिति । यावत्पुरानिपातयोर्लडिति भविष्यदर्थे लट् । , So also Cm g t ❀

53 B om 53 (cf v l 52) —[a]) Ś1 D1 2 4 10 11 चेह, V2 च (subm ), D5 T2 G3 M1 2 वापि (for चापि ). —[b]) D1 4 प्रत्यानयामि, D5 यद्वान°, D6 11 यथान° (for यद्यान° ) Ś1 D2 10 राम यास्यामि ना(D10 वा)प्यह् —[d]) D2 निर्दहन् (sic), D9 निरन्त्ये (for निर्द° )

G 5 15. 0
B. 5 13 52
L 5 8 62

इहैव नियताहारो वत्स्यामि नियतेन्द्रियः ।
न मत्कृते विनश्येयुः सर्वे ते नरवानराः ॥ ५४

अशोकवनिका चापि महतीयं महाद्रुमा ।
इमामभिगमिष्यामि न हीयं विचिता मया ॥ ५५

वसून्रुद्रांस्तथादित्यानश्विनौ मरुतोऽपि च ।
नमस्कृत्वा गमिष्यामि रक्षसां शोकवर्धनः ॥ ५६

जित्वा तु राक्षसान्देवीमिक्ष्वाकुकुलनन्दिनीम् ।
संप्रदास्यामि रामाय यथा सिद्धिं तपस्विने ॥ ५७

स मुहूर्तमिव ध्यात्वा चिन्ताविग्रथितेन्द्रियः ।
उदतिष्ठन्महाबाहुर्हनूमान्मारुतात्मजः ॥ ५८

नमोऽस्तु रामाय सलक्ष्मणाय
देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो
नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः ॥ ५९

स तेभ्यस्तु नमस्कृत्वा सुग्रीवाय च मारुतिः ।
दिशः सर्वाः समालोक्य अशोकवनिकां प्रति ॥ ६०

स गत्वा मनसा पूर्वमशोकवनिकां शुभाम् ।
उत्तरं चिन्तयामास वानरो मारुतात्मजः ॥ ६१

54 B om 54 (cf v l 52) Ñ2 D6 om 54–56 —$^a$) Ñ1 प्रायमाशिष्ये (for नियताहारो) —$^c$) Ñ1 V2 मत्कृते ते (V2 हि), D1 11 नमस्कृते (sic), D3 तन्म°, D4 मम कृते (for न मत्कृते) —$^d$) T1 3 G3 ते सर्वे (by transp) D1 4 वर- (for नर-) D5 वानरा वरा (for नरवानरा) Ś1 D10 वानराश्च तथा नरा

55 Ñ2 B D6 om 55 (for Ñ2 D6, cf v l 54 and for B, cf v l 52). —$^a$) Ś1 D10 [अ]ग्रे च, D4 5 वापि, M3 चेय (for चापि) —$^b$) T1 3 G2 M3 दृश्यतेय (for महतीय) D2 महद्रुमा —$^c$) D1 4 7–9 11 G2 M3 अधि- (for अभि) Ś1 Ñ1 V2 D1–4 10 11 पतिष्यामि —M3 om (hapl) 55$^d$–56$^c$ —$^d$) D2 महीय (for न हीय)

56 Ñ2 B D6 om 56 (for Ñ2 D6, cf v l 54 and for B, cf v l 52) M3 om 56$^{abc}$ (cf v l 55) —$^a$) Ñ1 transp वसून and रुद्रास् D5 तथा देत्यान (sic), D11 च * दित्याश्, T3 तदादित्यान् —$^b$) D11 चाश्विनो (for अ°) D4 मारुतौ (sic) Ś1 D10 तथा, V2 D1 4 5 T1 3 [ऽ]पि वा (for ऽपि च) Ñ1 मरुतश्चाश्विनौ तथा —Ś1 wrongly repeats 54$^c$ in place of 56$^c$ —$^c$) Ñ1 V2 D1–4 10 11 G3 नमस्कृत्य G2 प्रवेक्ष्यामि (for गमिष्या°) —$^d$) Ś1 राक्षसा D4 शोकवर्धन (sic)

57 B om 57 (cf v l 52). V2 om 57–58$^b$ —$^a$) D1–4 10 हि, D11 [अ]द्य (for तु) T1 3 G3 M3 सर्वान् (for देवीम्) —$^b$) D4 11 T2 3 -कुलनन्दनीं —$^c$) Ś1 D10 रामाय संप्रदास्यामि (by transp) —$^d$) Ñ1 D6 साध्वीमिह, Ñ2 D1–5 7–9 11 M2 Cm k सिद्धीमिव, Cr g as in text (for यथा सिद्धिं) Ñ D1 10 तप(Ñ1 यश)स्विनीं, D2 6 11 मनस्विने (D6 °नी)

58 B om. 58 (cf v l 52) V2 om 58$^{ab}$ (cf v l 57) —$^a$) T2 इति (for इव) D11 सुमुहूर्तमपि ध्यात्वा —Ñ2 D6 transp $^b$ and $^d$ —$^b$) Ñ1 -व्याकुलित-, T2 -प्रव्यथित, G1 -[अ]भिग्रथित-, M3 -[अ]वग्र°, Cm k t as in text (for विग्रथित) Ś1 Ñ2 D1–6 10 11 M1 चिंतया व्य(M1 ग्र)थितेंद्रिय —$^c$) Ñ1 D10 तदतिष्ठन्, Ñ2 D6 उपातिष्ठन् T1 3 G2 3 M3 महातेजा (for °बाहुर्)

59 B om 59 (cf v l 52) —$^a$) D2 च (for स) —$^b$) Ñ2 D6 नमोस्तु (for देव्यै च) —$^c$) D2 [अ]-नलेभ्यो —$^d$) D5, T3 G M1 नमश्च Ś1 Ñ V2 D1–7 9–11 -[अ]ग्नि- (for -[अ]र्क-)

60 B om 60 (cf v l 52) Ñ2 D6 om 60–64 —$^a$) Ś1 D4 सभ्ये(D4 °त्ये)भ्यश्च, Ñ1 स तेभ्य (subm), V2 D1–3 10 11 T2 स तेभ्यश्च, D8 T1 3 स तु तेभ्यो (by transp), M2 इति तेभ्यो Ś1 Ñ1 V2 D1 2 4 10 11 G2 नमस्कृत्य (for °त्वा) M1 इति तेभ्योंजलीन्कृत्वा —$^b$) V2 स मारुति, G1 महाकपि —Note hiatus between $^c$ and $^d$ —$^c$) D1 दिशा (for दिश) D11 तदालोक्य (for समा°) M2 दिश समवलोक्याथ —$^d$) Ś1 M3 ह्यशोक- (to avoid hiatus), D5 7–9 11 T G M2 सो(D11 त्व)शोक- (to avoid hiatus). Ś1 D10 ययौ, D8 गत (for प्रति) ❀ Cv स तु तेभ्यो नमस्कृत्ये(?)त्यत्रेतिशब्दो द्रष्टव्य । इति तेभ्यो नमस्कृत्वे(?)ति। सुग्रीवाय च मारुतिरित्यत्र नमश्चक्र इति विभक्तेर्विपरिणाम कार्य । सोऽशोकवनिका प्रतीत्य(°त्यत्र) समालोकयदित्यालोकयतेश्च । अन्यथा सशब्दोऽतिरिच्यते। अय कोशेषु दृश्यमानस्य पाठस्य निर्वाह । समीचीनस्तु पाठो न दृष्ट ।, Cr m सुग्रीवाय चेत्यत्र नमश्चक्र (Cr °वाय नमश्चक्र) इति करोतेर्विपरिणाम । अशोकवनिका गत । मनसेति शेष । अशोकवनिका प्रतीति पाठे समालोकयदित्यालोकयतेर्विपरिणाम । अन्यथा तच्छब्दोऽतिरिच्यते।, Cg स तेभ्यस्त्वित्यादिश्लोकद्वय मेकान्वयम्। नमस्कृत्यालोकनरूपक्रियाभेदात्तच्छब्दद्वयम्। नमस्कृत्य अशोकवनिका प्रत्युद्दिश्य सर्वा दिश समालोक्याशोकवनिका परिच्छेत्तु तस्या सर्वा दिशो दृष्ट्वा ता स मनसा गत्वोत्तरञ्चिन्तयामासेति योजना। अशोकशब्द सक्षेपे व्याख्यात ।, Ct अशोकवनिका गत । मनसेति शेष । 'अशोकवनिका प्रति' इति पाठे गत इत्यध्याहार ❀

61 Ñ2 B D6 om 61 (for Ñ2 D6, cf v l 60 and for B, cf v l 52) G2 om 61$^{ab}$ —$^a$) D5 तूर्णम् (for पूर्वम्) —$^b$) D3 कपि (for शुभाम्)

ध्रुवं तु रक्षोबहुला भविष्यति वनाकुला ।
अशोकवनिका चिन्त्या सर्वसंस्कारसंस्कृता ॥ ६२

रक्षिणश्चात्र विहिता नूनं रक्षन्ति पादपान् ।
भगवानपि सर्वात्मा नातिक्षोभं प्रवायति ॥ ६३

संक्षिप्तोऽयं मयात्मा च रामार्थे रावणस्य च ।
सिद्धिं मे संविधास्यन्ति देवाः सर्षिगणास्त्विह ॥ ६४

ब्रह्मा स्वयंभूर्भगवान्देवाश्चैव दिशन्तु मे ।
सिद्धिमग्निश्च वायुश्च पुरुहूतश्च वज्रधृत् ॥ ६५

वरुणः पाशहस्तश्च सोमादित्यौ तथैव च ।
अश्विनौ च महात्मानौ मरुतः सर्व एव च ॥ ६६

सिद्धिं सर्वाणि भूतानि भूतानां चैव यः प्रभुः ।
दास्यन्ति मम ये चान्ये अदृष्टाः पथि गोचराः ॥ ६७

तदुन्नसं पाण्डुरदन्तमव्रणं
शुचिस्मितं पद्मपलाशलोचनम् ।
द्रक्ष्ये तदार्यावदनं कदा न्वहं
प्रसन्नताराधिपतुल्यदर्शनम् ॥ ६८ G 5 15 0 B 5 13 66 L 5 8 76

62 Ñ2 B D6 om 62 (for Ñ2 D6, cf v l 60 and for B, cf v l 52) —a) Ś1 इय, D2 10 एव, Cr g k t as in text (for ध्रुव) Ñ1 D1 त्वारक्षो (D1 °क्ष-), V2 D2 3 10 त्वा (D3 क्षा, D10 तु) रक्षि-, D4 (after corr sup lin pr m) 11 सा रक्ष-, Cv g k t as in text (for तु रक्षो-) —b) Ś1 D2 10 11 जनाकुला, D4 (after corr pr m) समा° (for वना°) —c) Ś1 D10 सर्वा, Ñ1 V2 D1 2 4 11 दिव्या, D7–9 पुण्या, Cr g as in text (for चिन्त्या) —d) D10 दिव्य-, Cg k as in text (for सर्व) Ñ1 V2 D1 2 4 10 11 -शोभिता, Cg t as in text (for -संस्कृता) Ś1 कथं सीताधिगम्यते

63 Ñ2 B D6 om 63 (for Ñ2 D6, cf v l 60 and for B, cf v l 52) —a) D11 [अ]पि (for [अ]त्र) Ś1 G2 निहिता, D8 सहिता —b) Ś1 D10 घोरा (for नूनं) —c) V2 धर्मात्मा, D7 9 विश्वात्मा (for सर्वा°) —d) D2 [अ]भि- (for [अ]ति-) Ś1 D1 2 4 10 11 क्षोभ Ś1 Ñ1 V2 D1–4 9–11 G1 3 प्रवा(V2 °या)त्यसौ, D6 8 G2 M3 Cr प्रवाति च (D8 M3 वै) (for °यति) M1 नेरभयाद्वि वै (corrupt)

64 Ñ2 B D6 om 64 (for Ñ2 D6, cf v l 60 and for B, cf v l 52) —a) Ñ1 V2 तु (for च) Ś1 D2 10 T2 महात्मा च, D1 4 8 ममात्मा च, D3 महानात्मा, D11 ममाप्राह (sic), G2 मया चात्मा (by transp), Cm k t as in text (for मयात्मा च) —b) G1 2 कार्यार्थे Ś1 D10 G1 2 राघवस्य, Ñ1 V2 वानरस्य, Cv r m g t as in text (for रावणस्य) —c) D4 ते, T2 चै (for मे) Ś1 G2 सिद्धिं मे संविधास्यन्तु, Ñ1 वृद्धिं मे तु प्रदास्यन्तु, V2 G3 Cv सिद्धिं मे संप्रदास्यन्ति, D8 सिद्धिमेव विधास्यति, D7 9 सिद्धिं दिशन्तु मे सर्वे —d) G1 (before corr, after corr pr m as in text) तथा (for त्विह) D11 देवा ऋषिगणैः सह ‖ Cv संप्रदास्यन्तीति लोडर्थे लृट्। संप्रददत्वित्यर्थः। एवं वा सिद्धिरशोकवनिकाप्रवेशे सम्यग्भविष्यन्ति।, Cg संविधास्यन्ति दास्यन्ति ‖

65 B om 65 (cf v l 52) —b) Ś1 D1–4 6 10 11 M2 वेदाश्च, T2 वेधाश्च, Cv g k t as in text (for देवाश्च) D7 9 तपस्विन (for दिशन्तु मे) —c) D1 11 सिद्धम् (for °द्धिम्) —d) Ś1 Ñ2 D1–10 G3 M3 वज्रभृत्, Ñ1 V2 D11 T1 G1 2 M1 2 वज्रधृक्

66 B om 66 (cf v l 52) —After 66a, Ś1 Ñ V2 D1–4 6 10 11 ins

360* वासुदेवश्च चक्रभृत् ।
शंकरः शूलहस्तश्च

[D3 om l 1 —(l 1) Ñ1 V2 D11 चक्रधृक्]

D3 erroneously reads 66b twice —c) D6 om (hapl) च महात्मानौ —d) M3 शर्वे (for सर्वे)

67 B om 67 (cf v l 52) —a) D6 मा हि (for सिद्धिं) —b) V2 अपि (for चैव) D2 यत्, D6 हि (for यः) —Note hiatus between c and d —c) Ś1 T2 G2 दास्यन्तु, V2 शास्यति D6 मम मे, D8 M1 सिद्धिं ये (for मम ये) D2 वा (for च) —d) Ñ1 D1 4 5 7 9 [ऽ]प्यदृष्टा (to avoid hiatus), V2 T G M2 3 ह्यदृष्टा (to avoid hiatus), D6 ये च स्युः, D8 M1 भूताश्च (for अदृष्टा) D1 4 अथ (for पथि) D11 [ऽ]दृष्टा पथि सगोचरा (sic)

68 Ñ2 transp 68 and 69 D6 repeats 68ab after 69 —a) Ś1 D10 उच्च (D10 °च्चै) रुन्नत-, Ñ2 V2 B1–3 D2 6 (second time) 11 तदुन्नत (V2 °न्नम) त-, D1 4 तदुत्तम, D3 तनुप्रभ, D5 8 T2 G3 Cr m समुन्नस (T2 °त), Cg k as in text (for तदुन्नसं) B1–3 T1 G M -पाण्डर V2 -दन्तमण्डल, D11 -दन्तसुप्रभ —b) B1 सविस्मित, B3 सुनिर्मित, D3 शशिप्रभ (for शुचिस्मित) —c) Ś1 Ñ1 V2 D1–4 6 10 11 द्रक्ष्यामि सीता-, D7 9 T2 द्रक्ष्ये कदाया, G1 द्रक्ष्येयमार्यां, D2 4 6 कदा त्वहं D3 1 कदाहं, D5 कदाहं, T2 कथं न्वहं (for कदा न्वहं) —d) G2 damaged for प्रस Ñ1 D7 9 -वर्चसम् (for दर्शनम्) ‖ Cr समुन्नसम्। समुन्नता नासिका यस्य तत्समुन्नसम्। उपसर्गाच्चेति समासान्तोऽच्प्रत्ययो न सादेशश्च। अत्रागमनस्य तदभिज्ञानेन रामेण निवेदितम्। तदुन्नसमिति पाठे तच्छब्दः पुनरनुपरिग्रहणार्थम्।

G 5 15 0
B 5 13 67
L 5 8 77

क्षुद्रेण पापेन नृशंसकर्मणा
सुदारुणालंकृतवेषधारिणा ।
बलाभिभूता अबला तपस्विनी
कथं नु मे दृष्टिपथेऽद्य मा भवेत् ॥ ६९

इति श्रीरामायणे सुन्दरकाण्डे एकादशः सर्गः ॥ ११ ॥

तदार्यावदनमित्यत्र 'तदा' इति पद छेत्तव्यम्। तदानीमनौचित्य न घटते। समुन्नसत्वादीना सार्वकालिकत्वात् ॐ—For $68^{cd}$, Ñ2 B subst, whereas D6 ins after the second occurrence of $68^{ab}$

361* द्विजाधिराजप्रतिपूर्णदर्शन
सुसूक्ष्मकेशान्तमुदग्रमानसम् ।

[ (l 1) Ñ2 D6 प्रसन्नताराधिपतुल्यदर्शन, B3 द्विजराजपरिपूर्णित-दर्शन (unmetrical) —(l 2) Ñ2 स (for सु-) B2 -कोणाग्रम् (for केशान्तम्) Ñ2 D6 उदग्रमुन्नम, B1 उदग्र मानन, B2 उदग्रदर्शन ]

—Thereafter Ñ2 D6 cont 362*

69 Ñ2 transp 68 and 69 —$^{a}$) Ñ1 क्षेण (illeg) D7-9 T1 2 हीनेन (for पापेन) D3 -कारिणा, D7-9 -मूर्तिना (for -कर्मणा) —$^{b}$) D6 10 G -वेश (for -वेष) D3 -[अ]लकृतिरूप- D11 सु चाल्कृतवेषधारिणा —$^{c}$) Note hiatus between °भूता and अबला D3 T3 बाला (for बल-) Ś1 Ñ1 V2 D2 5-9 11 S ह्यबला (to avoid hiatus), Ñ2 ह्यचला (to avoid hiatus), D1 4 [अ]प्य-बला, D3 खलु सा, D10 हृदला (sic) (for अबला) Ś1 D1 2 4 10 यशस्विनी —$^{d}$) D1 2 4 6 8 11 तु (for नु) D10 सा (for मे) Ś1 D10 मे (for मा) —For 69, B subst, while Ñ2 D6 cont after 361*

362* कथ त्वनार्येण नृशसकारिणा
मनोज्ञरूपा सुजघन्यकीर्तिना ।
बलाभिभूतेन बलाद्धृता सती
सुकेशपाशा वदन हि धारयेत् ।

[ (l 2) B2 3 मनोनुरूपा —(l. 3) B3 -[अ]नुरूपेण (for -[अ]भिभूतेन) —(l 4) B2 सुकेशनामा Ñ2 D6 च, B4 om (for हि) D6 कारयेत् B3 कथ तु मा दृष्टिपथे समेत च (sic) ]

—After 69, D6 repeats $68^{ab}$

Colophon —*Sarga name* Ś1 D2 10 11 एकपुरुषचिंतन (D2 °चितन, D11 °चिता), Ñ1 हनूम+-देवन (illeg), Ñ2 V2 B4 D6 हनुमच्चिता, B1-3 प्राकारस्थ (B2 °स्थे)-हनूमच्चिता, D1 4 पुरुषचितन, D3 हनुमच्चिताप्रपत्ति —*Sarga no* (figures, words or both) Ñ1 D1 2 4 6 10 11 om, Ś1 10, Ñ2 B1 2 4 D3 16, V2 7, B3 14, D5 7-9 S 13. —After colophon, D2 concludes with राम, G M1 with श्रीरामाय नम

# १२

स मुहूर्तमिव ध्यात्वा मनसा चाधिगम्य ताम् ।
अवप्लुतो महातेजाः प्राकारं तस्य वेश्मनः ॥ १
स तु संहृष्टसर्वाङ्गः प्राकारस्थो महाकपिः ।
पुष्पिताग्रान्वसन्तादौ ददर्श विविधान्द्रुमान् ॥ २
सालानशोकान्भव्यांश्च चम्पकांश्च सुपुष्पितान् ।
उद्दालकान्नागवृक्षांश्चूतान्कपिमुखानपि ॥ ३
अथाम्रवणसंच्छन्नां लतागतसमावृताम् ।
ज्यामुक्त इव नाराचः पुप्लुवे वृक्षवाटिकाम् ॥ ४

G 5 16 5
B 5 14 4
L 5 9 4

## 12

V1 illeg for Sarga 12 (cf v l 5 11 29) M2 begins with श्रीरामाय नम

1 Ñ2 V2 B D6 om 1 G3 damaged from ध्यात्वा in $^a$ up to चा in $^b$ —$^a$) T2 मुहूर्तेद्वय, G1 °मिति, Cg as in text (for °मिव) —$^b$) D11 [अ]पि (for च). T2 G1 Ck [अ]भि-, Cm t as in text (for [अ]धि) —$^c$) D10 अवप्लुत्य, D11 आप्लुतो हि (for अवप्लुतो) M2 महावेग (for °तेजा) —Ś1 om (hapl) $1^d$–$2^a$ —$^d$) D1 3 4 10 M1 प्राकारात्(D10 °रे), D11 सकाशात्, Cr m g k t as in text (for प्राकार) T2 प्राकारांतरवेश्मन

2 Ś1 om $2^a$ (cf v l 1) —$^a$) Ñ2 V2 B1 2 4 D6 शोकसमाविष्ट, B3 शोकपरीतांग, D11 सर्वांगसहृष्ट (by transp), T2 सवृत्तसर्वांग (for संहृष्टसर्वाङ्ग). —$^c$) Ś1 D1–4 10 11 वसते च(D1 4 वा), Ñ1 वसते तु, Ñ2 V2 B D6 अ(D6 य)थापश्यद्, Cg k t as in text (for वसन्तादौ) —$^d$) Ñ2 V2 B1 3 4 D6 एकतो, B2 एकत्र (for ददर्श)

3 D8 om 3 Ñ1 illeg from श्च in $^a$ up to $^b$ —$^a$) Ñ2 V2 B1 D1 2 4–6 8 11 शालान् (for सालान्) Ñ2 V2 B1–3 D6 अन्यांश्, D1 4 दिव्यांश् (for भव्यांश्) Ñ1 शाला+कोविदारा+ —$^b$) D11 ये चकान् (sic) (for चम्पकांश्) Ś1 D10 11 मत्तकोकिलान्, Ñ2 V2 B2 3 D1 2 4 6 अतिमुक्तकान्, B1 अतिपुष्पितान् (for च सुपुष्पितान्) ❀ Cg भव्यान्शुभानित्यशोकविशेषणम्। यद्वा भव रुद्र-मर्हन्तीति भव्याःरुद्रप्रियपुष्पान्वृक्षविशेषान्।, Ck t भव्या-फलान्युच्चान् ❀ —After $3^{ab}$, Ñ1 (mostly illeg) ins

363* कदम्बानशोको . . . . . . ।
केशवान . . . . . . सेवितान्।

—D11 om $3^{cd}$ —$^{cd}$) D10 तद्दालकान्, G1 उद्दालगान (for °कान्) Ñ1 किंशुकांश्च (for नागवृक्षांश्) Ñ2 V2 B1–3 D6 दर्दुरान् (Ñ2 वदनान्, B1 दुर्दुरान् [also in marg ददर्श and दर्दरान्]), B3 रसालान्, D6 वदरान्) नागपुष्पांश्च (for $^c$) —G3 damaged from ता in $^d$ up to अ in $4^a$. D4 (also sup lin) सर्वान् (for चूतान्) Ś1 D10 -मुखाननान् (for मुखानपि) Ñ1 सरलाजनकेतकान्, Ñ2 V2 B1 2 D6 चूतान्कपित्थ(V2 °न्कुरव)कानपि, D1 4 G1 चूतान्नभि(G1 °नाग)मुखानपि (for $^d$) —For 3, B4 subst

364* अशोकनागपुन्नागपुष्पांश्चाथ कपित्थकान्।

—B4 cont, Ñ2 V2 B1–3 D6 ins after 3

365* ता तु दृष्ट्वा महाबाहुरशोकवनिकां शुभाम्।
चिन्तयामास बहुधा हनूमान्मारुतात्मजः।
अशोकवनिका हीयं महती सुमहाद्रुमा।
इमामपि विचेष्यामि न ह्येषा विचिता मया।

[(l 1) B4 सीता (hypm) (for ता) —(l 2) B2 मेधावी, B3 om (for बहुधा) —(l 3) Ñ2 B4 चे(Ñ2 ने)य (for हीय) Ñ2 मया सीता विचि नता (for the post half) —After l 3, Ñ2 ins

365(A)* दृष्टा राक्षसराजेन जानकी व्यपिनात्र वा।

—Ñ2 om l 4 —(l 4) B3 च (for हि)]

—Thereafter, V2 B D6 cont 367*

—After 3, Ñ1 (l 1 partly illeg) ins

366* नानाविधान्बहुविधान्वृक्ष . . . ।
तेषु वृक्षेषु मतिमान्वानरो मारुतात्मजः।

—Thereafter, Ñ1 cont, while Ś1 D1 2 4 10 ins after 3, whereas V2 B D6 cont after 365*

367* अथ धैर्यमवस्थाप्य प्रमृज्याश्रूणि वीर्यवान्।

[Ñ1 illeg from थ up to णि V2 B D6 समास्थाय (for अवस्थाप्य) B3 प्रसृज्य (for प्रमृज्य) V2 B D6 वानर, D1 2 4 वेगवान् (for वीर्यवान्)]

—Thereafter, Ś1 D10 cont l 2 of 369*, while Ñ1 cont one line, which is illeg (except वेगवान)

4 Ñ1 V2 B D1 2 4 6 11 transp $^{ab}$ and $^{cd}$ —$^a$) D7–9 T1 M1 तत्रा (for अथ) Ś1 D10 प्राकार- (for [आ]म्रवण-) T मपत्रा (for संच्छन्ना) Ñ2 V2 B D6 तत (B3 महा) पादपमद्(B1 °की)र्णां —$^b$) Ś1 -[अ]शोक, D5 8 -गृह-, D10 -वृक्ष- (for -गत) B2 D3 -समाकुला (D3 °कुला), D7 9 -समन्विता (for समावृताम्) Ñ1 लताभि परिमण्डिता —After $4^{ab}$, Ñ1 V2 B D1 2 4 6 11 ins, while Ś1 Ñ2 D8 10 subst for $4^{cd}$

368* अशोकवनिका स्फीता प्रविवेश महाकपि ।

G. 5 16 7
B. 5 14 5
L. 5 9 7

स प्रविश्य विचित्रां तां विहगैरभिनादिताम् ।
राजतैः काञ्चनैश्चैव पादपैः सर्वतो वृताम् ॥ ५
विहगैर्मृगसंघैश्च विचित्रां चित्रकाननाम् ।
उदितादित्यसंकाशां ददर्श हनुमान्कपिः ॥ ६
वृतां नानाविधैर्वृक्षैः पुष्पोपगफलोपगैः ।
कोकिलैर्भृङ्गराजैश्च मत्तैर्नित्यनिषेविताम् ॥ ७
प्रहृष्टमनुजे काले मृगपक्षिसमाकुले ।
मत्तबर्हिणसंघुष्टां नानाद्विजगणायुताम् ॥ ८
मार्गमाणो वरारोहां राजपुत्रीमनिन्दिताम् ।
सुखप्रसुप्तान्विहगान्बोधयामास वानरः ॥ ९

—$^{c}$) V2 D9 विमुक्त (for ज्यामुक्त) —$^{d}$) B1 पुप्लुवे, B2 प्रद्रु (also °प्लु *sup. lin*) चे (for पुप्लुवे) V1 B1 3 4 D6 G1 पुप्प, B2 [S]शोक- (for वृक्ष-) —After 4, Ñ1 V2 B D1 2 4 6 11 ins, while Ś1 D10 cont l 2 only after 367*

369* स गत्वा वेगवान्वेगाद्धनूमान्मारुतात्मज ।
ददर्शाशोकवनिका पुष्पिताशोकशोभिताम् ।

[(l 1) B1 बलवान् (for हनू°) —V2 B D6 om l 2]

5 $^{a}$) T3 M2 स- (for स) —$^{b}$) D1 4 8 विहगैर् (for विहगैर्) Ś1 Ñ1 अ(Ñ1 प्र)तिनादिता, Ñ2 V2 B1 2 4 D6 उपशोभिता, B3 D11 उप(D11 अनु)नादिता, D2 G3 अभिनदि(D2 °नर्दि)ता, D3 सप्रणादिता (for अभिनादिताम्) D10 विहगावलिनादिता —Ś1 D10 om 5$^{cd}$. —$^{c}$) M3 रजतैः (for राजत ) Ñ1 चित्रैः, B3 D1 2 4 11 चापि (for चैव) —$^{d}$) Ñ2 B3 D6 उपशोभिता, V2 B1.2 अनुसतता, B4 समलंकृता (for सर्वतो वृताम्) ❀ Ct राजतैः रजतादिसस्कृतैस्तद्वर्णैर्वा ❀ —After 5, Ñ1 D1–4 11 ins

370* श्रोत्रहारिरुतैः सर्वैर्विहगैः सप्रणादिताम् ।

[D1 2 4 विहगैः (for विहगैः) Ñ1 D1 सप्रणोदिता, D2 4 °नादितां (for °णादिताम्) ]

6 Ś1 Ñ1 D1–4 10 11 transp $^{ab}$ and $^{cd}$ —$^{a}$) Ś1 D6 9 T1 G1 विहगर्, D10 विहग (for विहगैर्) Ś1 Ñ B3 D1 6 10 11 -मिहैश्च (for संघैश्च) T2 वृता विहगसंघैश्च —Ñ1 illeg for 6$^{b}$ —G1 damaged from चित्रा in $^{b}$ up to त्य in $^{c}$ —$^{b}$) Ś1 D1 3 4 10 विचित्रे (for °त्रा) B3 -तोरणा (for- काननाम्) —$^{c}$) D6 उदय- (for उदित-) Ś1 Ñ1 V2 B D1 2 4 10 11 अचिरोदितसूर्याभा(D2 4 °र्या ता), D3 प्रतिरोहितसूर्याभा —$^{d}$) D7 9 वली (for कपि ) Ñ1 ददर्श स महाकपि , Ñ2 V2 B D6 अपश्यन्मारुतात्मज —After 6, Ś1 Ñ1 D1–4 10 11 ins , while Ñ2 B2 D6 ins l 1 only after 6

371* मनोहरा दृष्टिहरा सौगन्ध्यघ्राणहारिणीम् ।
महता प्राशुना चव सुचित्रविहितेन च ।
प्राकारेणाम्बुदेनेव सौधेन कृतमेखलाम् ।
गदापाणिभिरेकाग्रैरासीनैर्द्वारि राक्षसैः ।
गुप्तद्वारा महाद्वारामनादृष्या सुरैरपि । [5]
नीलवर्णैर्द्रुमशतैर्मेघवृन्दैरिवावृताम् ।
सवल तत्समाश्रित्य हनुमान्प्रविवेश ह ।

[(l 1) Ñ1 मनोरमां (for °हरा) B2 उत्तमाग्रा (for दृष्टिहरा) B2 सौगन्ध्याद्, D1 सौगधि (sic) (for सौगन्ध्य ). Ñ -[आ]घ्राण (for -घ्राण ) D4 सागधघ्रा(before corr °घ्रा)-णहारिणीं, D6 मेघ व्याघ्रेण हारिणीं (sic) (for the post half) —(l 2) D1 4 सुमत्र-, D3 सत्पत्र- (for सुचित्र ) Ñ1 -विविधेन (for विहितेन ) D11 प्रसुचित्र हितेन च (for the post half) —(l 3) Ś1 Ñ1 D2 4 11 [अ]म्बुदेनैव, D3 [इ]दुर्गारेण (for [अ]म्बुदेनेव ) —(l 4) D10 द्वार- (for द्वारि ) —(l 5) D3 10 अनाद्दक्षा(D10 °दृया ) (for °धृष्या ) —(l 6) Ś1 द्रुमसितैर्, D10 द्रुमगितैर् (for द्रुमशतैर्) D1 2 4 -वर्णैर् (for वृन्दैर्) —(l 7) Ñ1 D2 तत्समावृत्य, D3 समुपासृत्य (for तत्समाश्रित्य) D3 ता (for ह) ]

7 Ñ V2 B D6 transp $^{ab}$ and $^{cd}$ Ñ1 illeg for 7$^{a}$ —$^{a}$) V2 D7 वृतैर्, D1 4 युता (for वृता) —$^{b}$) Ś1 पुष्पपूग- (for पुष्पोपग-) Ñ2 D6 कर्णि(Ñ2 कार्णि)-कारादिभिस्तथा, D3 पुष्पोद्गमफलोद्गमैः —$^{c}$) Ñ1 राजहंसैश् (for भृङ्गराजैश्). D1 4 राजहंसैः कोकिलैश्च —$^{d}$) B3 मत्यैर् (sic), D4 सत्त्वैर् (for मत्तैर्) Ś1 Ñ2 B2–4 D1 2 4 10 नित्य (for नित्य-) B1 (after corr as in text) -निषेवितैः, D1 4 11 °तं (for °ताम्) Ñ1 प्रमत्तैश्च प्रपेविता

8 D2 3 transp $^{ab}$ and $^{cd}$ —$^{a}$) B2 प्रहृष्ट (for °ष्ट-) Ś1 Ñ V2 B1 2 4 D1–4 11 G1 -मुदिते, B3 -मुदितैः, D7 9 Ct -मनुजा, G3 -मनुज , Cv r m g as in text (for -मनुजे) —$^{b}$) D10 -पक्ष- (for -पक्षि-) Ś1 D2 3 -सु(D2 सु)खावहे, Ñ2 V2 B D6 -निषेविते(D6 °ता), D1 4 सुखावहे(D4 °ह ), D6 -महाकुले, D7 9 G1 -महाकुला (G1 °ले), D11 -महाहवे (for समाकुले). Ñ1 मृगपक्षिणा । १ । (illeg ) ❀ Ct 'प्रहृष्टमनुजे काले' इति पदद्वये सप्तम्यन्तपाठे तादृक्काले वसन्तप्रागभावे तत्सन्निहिते काल इत्यर्थः ❀ —G3 damaged from ण in $^{c}$ up to णो in 9$^{a}$ —$^{c}$) D1 3 4 -बर्हण- (for -बर्हिण-) Ñ2 V2 B1–3 D6 -चक्रांगैर्, B4 -चक्राङ्गैर् (for -संघुष्टां) —$^{d}$) G2 -द्रुम- (for -द्विज-) Ś1 D3 -गणावृता, Ñ1 °श्रिता, D1 4 -निषेविता (for -गणायुताम्) Ñ2 V2 B D6 वसते(D6 °त)कामदीपने (B3 °नैः)

9 G3 damaged up to णो in $^{a}$ (cf v l 8) —$^{c}$) B3 अथ, B4 सुरत (for सुख-) —$^{d}$) G2 मारुतिः (for वानर )

उत्पतद्भिर्द्विजगणैः पक्षैः सालाः समाहताः ।
अनेकवर्णा विविधा मुमुचुः पुष्पवृष्टयः ॥ १०
पुष्पावकीर्णः शुशुभे हनुमान्मारुतात्मजः ।
अशोकवनिकामध्ये यथा पुष्पमयो गिरिः ॥ ११
दिशः सर्वाभिधावन्तं वृक्षषण्डगतं कपिम् ।
दृष्ट्वा सर्वाणि भूतानि वसन्त इति मेनिरे ॥ १२
वृक्षेभ्यः पतितैः पुष्पैरवकीर्णा पृथग्विधैः ।
रराज वसुधा तत्र प्रमदेव विभूषिता ॥ १३
तरस्विना ते तरवस्तरसाभिप्रकम्पिताः ।
कुसुमानि विचित्राणि ससृजुः कपिना तदा ॥ १४
निर्धूतपत्रशिखराः शीर्णपुष्पफलद्रुमाः ।
निक्षिप्तवस्त्राभरणा धूर्ता इव पराजिताः ॥ १५
हनूमता वेगवता कम्पितास्ते नगोत्तमाः ।
पुष्पपर्णफलान्याशु मुमुचुः पुष्पशालिनः ॥ १६
विहंगसंघैर्हीनास्ते स्कन्धमात्राश्रया द्रुमाः ।
बभूवुरगमाः सर्वे मारुतेनेव निर्धुताः ॥ १७ G 5 16 20 B 5 14 17 L 5 9 22

10 a) Ś1 D10 उ(D10 त)त्पततो द्विजगणा —b) D7 पक्ष- (for पक्ष ) Ś1 Ñ1 D1 2 4 10 11 शाखा-(D1 2 4 °खा ), D3 वृक्षा , D5 शाला-, D7–9 वातैः (for साला ) Ś1 D5 10 11 समाहित (D5 11 °ता ), D9 समाहृता , G1 °कुला (for °हता ) Ñ2 V2 B D6 पक्षवातसमुद्धता (B1 °मन्विते , B3 4 °मुद्धते ) —cd) Ñ2 V2 B D6 तरुभिर् (for विविधा) Ñ2 V2 B1 2 4 D6 विमुक्ता , B3 नियुक्ता (for मुमुचु ) Ś1 Ñ1 D1–4 10 11 अनेकवर्णां मुमुचु (D11 मु° ) पुष्पवृष्टि(D4 °ष्टी ) समतत ❀ Cv r पुष्पवृष्टय । व्यत्ययेन (Cv °ष्टय इति ) द्वितीयार्थे प्रथमा ।, Cm g k t पुष्पवृष्टय पुष्पवृष्टी ❀

11 G3 damaged from र्ण in a up to म in c —a) Ś1 D10 तत्र की(D10 °त्राकी)र्ण स, Ñ2 V2 B D1–4 11 तत्रावकी( B3 D4 [also *inf lin* °नी ] )र्ण ( D2 °र्णे ) (for पुष्पावकीर्ण ) Ñ1 तत्रावकीर्ण सुखासीन (hypm ) —After 11a, Ñ1 ins

372* शुशुभे वानरोत्तम ।
विलोक्य च दिश सर्वा

12 a) D8 सर्वा दिशो ( by transp ), T1 3 तत सर्वा (for दिश सर्वा ) Ś1 D10 व्यधावत (sic), Ñ V2 B D1 3 6 11 T1 3 G1 M1 विधावत, G2 [अ]पि धावत, M3 प्रधावत (for [अ]भिधावन्त ) D5 दिश समाश्च धावत ❀ Ck सर्वाभिधावन्तमिति सविस्छान्दस ।, so also Ct ❀ —b) Ś1 Ñ V2 D1 2 6–9 खड-, D4 खड (for षण्ड ) Ñ1 D3 हरि, B1 D6 11 T2 कपि (sic) (for कपिम्) —c) B1 reads भूतानि in marg —d) Ñ V2 B D1–6 11 T2 वसतमिव (for °त इति ) Ś1 D10 वारिद (D10 °दा ) (for मेनिरे) —After 12, Ñ1 ins

373* प्रादुर्भूते मूर्तिमन्त राजमिह स्थिते ।

13 a) Ñ2 नगेभ्य , V2 B D6 द्रुमेभ्य (for वृक्षेभ्य ) —b) B4 D2 5 11 T2 M1 अवकीर्णे ( D5 M1 °र्णा [sic], D11 T2 °र्णे-) (for °र्णा) D6 -विधा (for -विधै ) —c) D11 बहुधा (for वसुधा) B3 यत्र (for तत्र) —G3 damaged from d up to प्र in 14b —d) B4 प्रमदेन (for °व )

14 G3 damaged up to प्र in 14b (cf v l 13). —a) Ñ1 तेन (hypm ) (for ते ) Ñ2 V2 B D6 तरुगणाम् (for ते तरवस्) —b) Ñ2 त° (for तरसा ) Ś1 D2 3 10 विप्रकम्पिता , Ñ1 D1 4 11 प्रति°, Ñ2 V2 B D6 सम°, D5 [अ]पि प्र°, D7 9 G1 Ck t बहु°, T2 नीव° (for [अ]भिप्र°) —c) Ś1 Ñ1 D1–4 10 11 पुष्पवृष्टि विचित्रा तु( D1 4 ते, D3 ता ), Ñ2 V2 B3 पुष्पवृष्टि ववृषु( V2 °वर्षु )स्ते, B1 2 4 पुष्पवृष्टिमव( B2 [before corr ]°मम)र्षंस्ते( B4 °त ), D6 पुष्पवृष्टीर्ववर्षुस्ते —d) Ñ2 V2 B1 2 4 D6 विचित्रा (Ñ2 V2 D6 °त्रा ), B3 विस्तृता, T2 G3 मुमुचु (for ससृजु ) Ñ1 हरिणा (for कपिना ) Ś1 Ñ1 V2 D1 2 4 10 11 [आ]हता , Ñ2 B1 4 धुता , B2 D6 8 [उ]द्धु( D6 8 °द्ध )ता , B3 धृता , D3 हि ता (for तदा)

15 a) D1 4 विधूत- (for निर्धूत-) Ś1 M1 -पत्रा, B D6 -पर्ण , T2 -पुष्प , Ck t as in text (for पत्र-) —b) Ñ2 V2 B1 2(before corr ) 3 4 D6 कीर्ण , B2 (after corr *sup lin* ) कीर्णा , D9 शीर्णा , T2 M1 जीर्ण (for शीर्ण ) Ś1 D10 पर्ण-, D1 3 4 T2 G1 -पत्र- (for पुष्प-) Ś1 D10 M3 -फला (for -फल ) —G2 om (hapl ) 15c–17b —c) Ś1 Ñ V2 B2–4 D1–4 6 11 विक्षिप्त- (for निक्षिप्त-)

16 G2 om 16 (cf v l 15) —b) Ś1 निर्धूताम्, Ñ1 लिताम्, D1 4 विधूताम्, D2 10 11 धूनिताम् (for कम्पिताम्) D10 महाद्रुमा (for नगोत्तमा ) —D5 reads 16cd in marg —c) Ś1 D1 5 7 9 10 पुष्पपत्र-, Ñ2 V2 B1–3 पर्णपुष्प- (by transp ), B4 पत्रपुष्प, D6 वन पुष्प-, D11 पुष्पवर्ण (for पुष्पपर्ण-) D4 om from फलान्याशु up to मात्रा in 17b B3 -फलानीस्ते, D1 °न्यन्ये (for °न्याशु) —d) Ñ2 V2 B D6–8 फल- (for पुष्प-) D11 -शाखिन (for -शालिन )

17 G2 om 17ab (cf v l 15) D4 om up to मात्रा in b (cf v l 16) —a) Ś1 -पूगर्, Ñ2 V2 B3 4 D2 -सत्र , B1 2 सग-, D2 5 7–9 सगर्, D10 -सिहैर् (for -सघैर्) Ñ2 B D6 च (for ते ) V2 नीलाश्च, M2 विमुक्ता (for हीनास्ते) Ñ1 हीना विहगसघन्ते. —b) Ś1 Ñ1 D1 2.

G 5 16 21
B 5 14 18
L 5 9 23

विधूतकेशी युवतिर्यथा मृदितवर्णका ।
निष्पीतशुभदन्तोष्ठी नखैर्दन्तैश्च विक्षता ॥ १८
तथा लाङ्गूलहस्तैश्च चरणाभ्यां च मर्दिता ।
बभूवाशोकवनिका प्रभग्नवरपादपा ॥ १९
महालतानां दामानि व्यधमत्तरसा कपिः ।
यथा प्रावृषि विन्ध्यस्य मेघजालानि मारुतः ॥ २०
स तत्र मणिभूमीश्च राजतीश्च मनोरमाः।
तथा काञ्चनभूमीश्च विचरन्ददृशे कपिः ॥ २१
वापीश्च विविधाकाराः पूर्णाः परमवारिणा ।
महार्हैर्मणिसोपानैरुपपन्नास्ततस्ततः ॥ २२
मुक्ताप्रवालसिकतास्फाटिकान्तरकुट्टिमाः ।
काञ्चनैस्तरुभिश्चित्रैस्तीरजैरुपशोभिताः ॥ २३

4 10 स्थिता , D3 तथा ( for द्रुमा ) Ñ2 V2 B D6 फलपुष्पविना( V2 B3 4 °विरा )कृता , D11 स्कन्धमात्रश्रिया स्थिता —After $17^{ab}$, Ñ2 V2 B D6 ins

374* नापुष्यन्त श्रिय वृक्षा निराशा इव निर्वना ।

[ B2 ( after corr *sup lin* as above ) नामुमुच, B3 नानापुष्प ( for नापुष्यन्त ) ]

—B1 reads $17^{c}$ – 18 in marg —$^{c}$ ) B2 D10 जग- ( B2 दुर्ग )मा , D5 उत्तमा , D9 अगता ( for अगमा· ) Ś1 बभुरजगमा सर्वे —$^{d}$ ) Ś1 [ अ ]पि निर्धुता , Ñ2 D6 विघतिता , V2 B D1 7–9 T1 G1 3 Cl t विनिर्धुता , D2 प्रकम्पिता , D3 [ इ ]व निर्दिता , D10 विनिव्रता , D11 T2 3 G2 [ ए ]व निर्धुता , Cr m g as in text ( for [ इ ]व नि° ) Ñ1 निहता इव मानुषी ❀ Ch विनिर्धुता इति छान्दसो ह्रस्व ।, Ct विनिर्धुता इति ह्रस्व आर्ष इति कतकस्तद्व्या। ह्रस्वस्यापि धुञ सत्त्वात् ❀

18 B1 reads 18 in marg ( cf v l 17 ) —$^{a}$ ) Ś1 Ñ1 D2 10 11 बभूव वेश्या, B1–3 D6 विधूतकेशा( B2 D6 °केशा , B3 °वेणी ) , B4 D5 T1 3 Cg निर्धूतकेशी( B4 °शा , D5 °शा ) , Cr as in text ( for विधूत° ) Ñ2 V2 B D6 प्रमदा, D2 जगति, D5 G3 M1 युवतीर् , D8 G2 M2 युवती ( for युवतिर् ) —$^{b}$ ) B2 4 मुदित- ( for मृदित ) Ñ2 D6 -लेपना( D6 °ना ) , V2 -वर्णिका, B1 3 4 कर्णिका, B2 D4 5 M1 वर्णका ( for -वर्णका ) D11 यथा द्वितीव वर्णिका —For $18^{ab}$, D3 subst

375* दृश्यन्ते शाखिन सर्वे विधूतयुवती तथा ।
मृदितवृणिका ( sic ) नित्य कामिना कामतत्परा ।

—$^{c}$ ) Ś1 Ñ1 D7 9 G1 निपीत-, D1 2 4 10 11 नितात- ( for निष्पीत ) Ś1 Ñ1 -शुक्र , D10 -शुभ्र- ( for -शुभ- ) Ñ1 D1 2 4 11 -क( D2 11 व)र्णोष्ठी, D5 -दन्तोष्ठा , D10 -दन्तोष्ठी ( for -दन्तोष्ठी ) D3 विवस्त्रा शुभ्रदन्तोष्ठी —$^{d}$ ) D11 स- ( for च ) D1–4 विक्षिता( D1 °ता ) , D5 वीक्षता ( for विक्षता ) —For $18^{cd}$, Ñ2 V2 B D6 subst

376* क्रीडनाद्वाति विरता नखदन्ताभिविक्षता ।

[ V2 क्रीडाम्यानाति, B3 प्रक्रीडनाति-, D6 क्रीडनाद्वाति B3 4 विनता ( for विरता ) Ñ2 B2 [ अ ]भिविक्षता, V2 -[ अ ]भिन्दिता, D6 -[ अ ]भिविक्षता ( for -[ अ ]भिविक्षता ) ]

19 $^{a}$ ) B3 यथा, T2 तदा ( for तथा ) Ś1 Ñ V2 B D1–4 6 10 11 हस्ताभ्या, D5 7–9 T2 G1 हस्तैस्तु —$^{b}$ ) Ś1 Ñ1 D1 2 4 10 समाहता, D11 समाहिता ( for च मर्दिता ) ❀ Ct लाङ्गलहस्तैरित्यत्रैकत्वाभाव आर्ष ❀ —D11 om $19^{c}$ – 20 —$^{c}$ ) D7 9 तथैव ( for बभूव ) —$^{d}$ ) Ś1 Ñ1 D1–4 7 10 M1 -वन- ( for वर- ) Ñ2 V2 B D6 भग्नप्रवरपादपा, D9 प्रभग्नामिव पादपा ( sic )

20 Ñ2 V2 B D6 11 om 20 ( for D11, cf v l 19 ) —$^{b}$ ) Ś1 D2 10 विहरस्तरसा, D1 3 4 विहरन्तरसा ( for व्यधमत्तरसा ) Ñ1 विनि . . . . . ( illeg ) —$^{c}$ ) Ś1 D10 प्रवृष्टेर् ( for प्रावृषि ). D7 9 वेगेन ( for विन्ध्यस्य ) D8 यथा प्रावृट्प्रवृद्धानि —$^{d}$ ) D9 मारुता· ( for मारुत )

21 $^{a}$ ) B3 त मणिश्च ( for तत्र मणि ) Ś1 D1–4 10 11 भूमि ( for -भूमीश् ). —D2 11 T om ( hapl ) $21^{bc}$. —$^{b}$ ) Ś1 D1 3 4 10 राजती च मनोरमा, Ñ2 V2 B D6 काचनीश्च महाकपि —After $21^{ab}$, B2 ins

377* नानारत्नमयी चैव बहुरूपा च शोभिता ।

—$^{c}$ ) Ñ2 V2 B D6 रा( B र )जत- ( for काञ्चन- ) Ś1 D1 3 4 10 भूमि, D9 -भूतीश् ( for भूमीश् ) —$^{d}$ ) Ś1 Ñ1 D1–4 10 11 ररचे ( for ददृशे ) Ñ2 V2 B D6 विचचार समाहित ( B3 महामति ) , D8 M3 ददर्श विचरन्कपि

22 $^{a}$ ) D8 G1 वाप्यश्च, D11 चार्या च ( sic ) ( for वापीश्च ) —D2 om $22^{b}$ – $24^{a}$ —$^{b}$ ) D11 पूर्णाश्च ( hypm ) ( for पूर्णा ) B1 विविध- ( for परम- )
—After $22^{ab}$, Ñ2 V2 B D6 11 ins

378* प्रसन्नसलिलाश्चान्या नलिनी फुल्लपङ्कजा ।

[ D11 [ अ ]पि ( for [ अ ]न्या ) Ñ2 D6 नलिन्य , V2 नलिनीश्च ( hypm ) ( for नलिनी ) D11 पुष्प- ( for फुल्ल ) ]
—$^{c}$ ) Ś1 V2 B D4( before corr as in text ) 6 10 महार्हं ( for °र्हैर् ) D11 हर- ( for मणि ) —$^{d}$ ) V2 समतत , T2 महस्वश ( for ततस्तत )

23 D2 om. 23 ( cf v l 22 ) —$^{a}$ ) Ñ2 V2 B D6 मणि- ( for मुक्ता- ) Ś1 D10 वैडूर्य- , Ñ1 D1 3 4 8 T2 M3 -सिकता , Ñ2 V2 B1 4 D6 विकृता , B2 -वितता , B3 विहिता , D11 -सिकण ( sic ), Ck t as in text ( for -सिकता ) —$^{b}$ ) D4 8 10 स्फटिक- ( for स्फा° ) Ś1 D3 10 11 भूषिता , Ñ1 D1 4 -शोभिता , V2 भूमिका ( for कुट्टिमा ).

फुल्लपद्मोत्पलवनाश्चक्रवाकोपकूजिताः ।
नत्यूहरुतसंघुष्टा हंससारसनादिताः ॥ २४
दीर्घाभिर्द्रुमयुक्ताभिः सरिद्भिश्च समन्ततः ।
अमृतोपमतोयाभिः शिवाभिरुपसंस्कृताः ॥ २५
लताशतैरवतताः सन्तानकसमावृताः ।
नानागुल्मावृतवनाः करवीरकृतान्तराः ॥ २६
ततोऽम्बुधरसंकाशं प्रवृद्धशिखरं गिरिम् ।
विचित्रकूटं कूटैश्च सर्वतः परिवारितम् ॥ २७
शिलागृहैरवततं नानावृक्षैः समावृतम् ।
ददर्श कपिशार्दूलो रम्यं जगति पर्वतम् ॥ २८

G 5 16 0
B 5 14 26
I 5 9 33

—Ñ1 D11 om $23^{cd}$ —$^{d}$) Ś1 नीरजर्, G1 तटेजर् (for नीरजर्) Ñ2 V2 B D6 राजरश्मो(V2 B2 °र)-पशोभिता (B1 °त)

24 D2 om $24^{a}$ (cf v l. 22) B3 om (hapl) $24^{ab}$ Ñ1 reads 24–$26^{b}$ after 27 D6 reads 24 in marg —$^{a}$) Ś1 Ñ2 D5 7 9-11 G1 M1 2 तु(D10 -त्र)द्र-, Cr as in text (for फुल्ल) Ñ1 वनाश्, Ñ2 V2 B1 2 4 D6 10 वनीश् (for -वनाश्) G2 कमलोत्पल-शोभिन्यश् —$^{b}$) Ś1 Ñ V2(marg also) B1 2 4 D6 9 11 T2 G1 3 शोभिता, D2 गहिता (for -कूजिता) V2 (orig) करवीरवनातरा —$^{c}$) Ś1 D10 विहग-, Ñ1 [illeg]ह-, D1 2 4 5 8 11 T2 G2 दात्यूह, Cr g k t as in text (for नत्यूह-) Ñ2 V2 B D6 मत्तसारडवाकीर्णा —$^{d}$) Ñ1 सेविता (for नादिता)

25 For sequence in Ñ1, cf v l 24 —$^{a}$) Ś1 नदीभिर् (for दीर्घाभिर्) Ś1 D3 10 भ्रममाणाभि, Ñ1 स्रवमाणाभि, Ñ2 V2 द्रुमसुक्ताभि, B1(marg also) 3 भ्रमयुक्ताभि (B3 °श्च), B2(marg also as in text) भृगयुष्टाभि, D11 शुभवानाभि, Ck t as in text (for द्रुमयुक्ताभि) D1 4 कीर्णा विद्रुमयुक्ताभि, G2 दीर्घिकाभिश्च दीर्घाभि —$^{b}$) Ś1 D10 श्रीताभिश् (for सरिद्भिश्) B1 2 4 तास्मत (for समन्तत) Ñ1 सरिद्भिरिव सतत —V2 B1–3 om $25^{cd}$ —$^{c}$) D11 ह्यमृता अपि तोयाभि (sic) —$^{d}$) D2 शिलाभिर् (for शिवाभिर्) Ś1 D1–4 10 11 G2 M2 अभि(D2 °ति, D3 10 °पि)संस्कृता, B4 D6 अपि(D6 °भि) संवृता (for उपसंस्कृता)

26 For sequence in Ñ1, cf v l 24 D2 om 26–27 —$^{a}$) Ś1 D10 -गृहर्, Cr m as in text (for शतर्) Ś1 D1 4 10 अवनता, Ñ V2 B D1 6 G2 अवतता(D1 6 °ता, B4 °त, G2 °त), D11 अनुगता (for अवतता) —$^{b}$) Ś1 Ñ1 D1 3 4 10 11 लता(D4 [sup l n] पुष्प)सन्तानसंवृता (Ś1 D1 10 11 °ता, Ñ1 °ता), Ñ2 V2 B D6 अवतान(V2 सरतान, B3 द्रुमतान, B4 घनतान)शतैस्तथा, D5–9 T2 M3 Cm सतानकुसुमावृता —$^{c}$) T M2 3 -घना (for -वना) Ś1 Ñ1 D1 3 4 10 11 लतावि(D1 3 °व)ता(Ñ1 [illeg])नगहना(Ñ1 °ना, D3 4 °ना), Ñ2 B1–3 लतागृहवनोपेता(B3 °वान-), V2 लतावनगृहोपेता, B4 D6 लतागृहवनोपेत(D6 °ता) —$^{d}$) Ś1 D1 10 11 -कृतान्तरा, Ñ V2 B1 2 4 D6 -वनान्तरा (B4 °र, D6 °रा), B3 -वनान्तरा, D8 कृतान्तरा (for -कृतान्तरा)

27 D2 om 27 (cf v l 26) Ñ1 illeg for $27^{a}$ —$^{a}$) Ś1 D10 11 तत्र, D1 3 4 दिव्य-, Ck t as in text (for ततो) B1 तत्र जीमूतसकाश —$^{b}$) Ñ1 प्रवृत्त (for °द्ध) D11 -शिखरे (for °र) Ś1 Ñ1 D1 3 4 10 11 महत, B4 शुभ (for गिरिम्) —$^{c}$) Ś1 D10 कूटश्च तथा, Ñ1 D1 4 -कूटं कुसु(Ñ1 [illeg])मे, B4 -कुसुमे कूट, D3 -कूट चित्रश्च, D11 कूट कुसुम (for -कूट कूटश्च) —$^{d}$) B4 पर्वत, D1 3 4 समतात (for सर्वत) —For 27, Ñ2 V2 B1–3 D6 subst, while B4 ins after 28

379* तामम्बुधरसकाशं प्रवृद्धशिखरं शुभं ।
विचित्रा चित्ररूपश्च पर्वतैरुपशोभिताम् ।

[ (l 1) B3 अभ्युन्न (sic) (for अम्बुधर-) B1 प्रवृत्त- (for °द्ध) —(l 2) B1 विचित्र- (for °त्रा) ]

—After 27, Ñ1 reads 24 – $26^{b}$

28 G2 om (hapl ?) $28^{ab}$ —$^{a}$) M1 शाखा (for शिला) Ś1 D10 -वृक्षैरवनतैर्, Ñ2 D6 -गृहसमायुक्ता, V2 B -गृहपरिक्षिप्ता (for -गृहैरवतत) —$^{b}$) Ś1 Ñ B2 D5–7 9–11 G1 वृक्ष, V2 B1 3 4 -गृह- (for -वृक्ष) Ñ1 च सयुत, Ñ2 V2 B3 -समाचिता, D1 4 समन्वित, D3 G1 समाकुल, D6 समायुता (for समावृतम्) Ñ2 V2 B1–3 D6 om (hapl ?) $28^{cd}$ —$^{c}$) B4 D8 T1 3 G3 M3 हरि- (for कपि) —$^{d}$) Cv जगतिपर्वतम्। मृदा प्राधान्येन कृत क्रीडापर्वत।, Cr जगति(°ती)शब्द। ह्रस्व आर्ष। जगती भूमिर्मृदिति यावत्। तत्प्रधाना(°त्प्रा धान्या?)ज्जगतिपर्वतमित्युक्तम्। यद्वा, जगतिपर्वत इति सज्ञा।, Cm गिरि क्रीडापर्वतम्। तस्य विशेषण जगतिपर्वतमिति। ह्रस्व आर्ष। जगती भूमिर्मृदिति यावत्। तत्प्राधान्याज्जगतिपर्वतमित्युक्ति।, Cg जगति लोके रम्यमेतत्सदृश रम्य किंचिन्नास्तीत्यर्थ। पर्वत ददर्शेत्यन्वय।, Ck जगति रम्य लोके सुन्दरवस्तुभ्य परमसुन्दरम्। परस्तु जगतिपर्वतम्। ह्रस्वश्छान्दस। मृत्पर्वत इ(°तमि)त्यर्थ। छन्दोभङ्गमपि गृहीत्वा कि(क)मर्थमेवं वर्णितवानिति न जानीम।, Ct जगति लोके रम्य सुन्दर वस्तुभ्योऽपि परमसुन्दरम्। तीर्थस्तु जगतीपर्वतमित्यर्थ। ह्रस्व आर्ष। मृत्पर्वतमिति यावदिति व्याचख्याव इत्येतद्व्याख्यान [illeg]
—After 28, B4 ins 379*

G 5 16 30 B 5 14 29 L 5 9 34 ददर्श च नगात्तस्मान्नदीं निपतितां कपिः ।
अङ्कादिव समुत्पत्य प्रियस्य पतितां प्रियाम् ॥ २९
जले निपतिताग्रैश्च पादपैरुपशोभिताम् ।
वार्यमाणामिव क्रुद्धां प्रमदां प्रियबन्धुभिः ॥ ३०
पुनरावृत्ततोयां च ददर्श स महाकपिः ।
प्रसन्नामिव कान्तस्य कान्तां पुनरुपस्थिताम् ॥ ३१
तस्यादूरात्स पद्मिन्यो नानाद्विजगणायुताः ।
ददर्श कपिशार्दूलो हनुमान्मारुतात्मजः ॥ ३२
कृत्रिमां दीर्घिकां चापि पूर्णां शीतेन वारिणा ।
मणिप्रवरसोपानां मुक्तासिकतशोभिताम् ॥ ३३
विविधैर्मृगसंघैश्च विचित्रां चित्रकाननाम् ।
प्रासादैः सुमहद्भिश्च निर्मितैर्विश्वकर्मणा ।
काननैः कृत्रिमैश्चापि सर्वतः समलंकृताम् ॥ ३४

---

29 [a]) Ñ2 D6 निर्ग(D6 °र्मि)ता तस्या, V2 वनगा रम्या, B1 वनमध्यस्था, B2 च नगा तस्या (sic), B3 वाटिका तस्या, D8 स नगात्तस्मात् (for च नगात्तस्मात्) —[b]) D2 नदीर् (for नदीं) Ś1 D10 प्रपतिता, Ñ2 V2 B D6 निर्ह्रादिनी, D2 निपतिताम्, D3 8 M1 निष्पतिता, Cm t as in text (for निपतिता) Ś1 D10 शुचि, Ñ1 पुन, D2 तत, D11 वर (for कपि) —[c]) B1 (after corr marg as in text) स्वर्गादिव, B3 साक्षादिव, D2 अगादिव (for अङ्कादिव) —[d]) Ś1 Ñ2 V2 B D1–4 6 10 11 कुपिता, T2 G3 प्रियता, Cm t as in text (for पतिता) —After 29, B2 reads 31[cd] for the first time, repeating it in its proper place

30 [a]) Ś1 D4 सालैर्, Ñ1 D1–3 11 शालैर् (for जले) D5 Ct जलेन पतिताग्रैश्च, D10 मालैर्निपतताग्रैश्च —Ñ1 illeg for 30[c]–36[b] —[c]) D13 धार्यमाणाम् (for वा°) —[d]) T2 इव, Cm k t as in text (for प्रिय-) —For 30, Ñ2 V2 B (B2 reads after 31[cd] [first time]) D6 subst

380* बालपल्लवशाखा च स ददर्श नगोत्तमे ।
क्रीडन्ती दोलया दृष्टा प्रमदामिव सुन्दरीम् ।

[(l 1) B4 -शाखाग्रा (for शाखा च) B3 वनोत्तमा (for नगोत्तमे) —(l 2) B3 (marg also as above) स्पृष्टा (for दृ°) D6 दोलयात्स्पृष्टा (sic) (for °या दृष्टा)]

31 Ñ1 illeg for 31 (cf v l 30) —[a]) Ñ2 V2 B D6 आवर्तमाना च, D3 आवृत्ततोयाश्च, G1 आवर्ततोया च, Cm g k t as in text (for आवृत्त°) —[b]) Ñ2 V2 B D6 सरित (V2 B1 4 °ता) कपि (for स महाकपि) —B2 repeats 31[cd] here (cf v l 29) —[d]) B3 कात (for कान्ता) Ñ2 V2 B1 3 4 D6 T1 3 G3 उपागता, Cm t as in text (for उपस्थिताम्) B2 (both times) काता च पुनरागता

32 Ñ1 illeg for 32 (cf v l 30) —[a]) Ś1 D10 पद्मिनी स, Cv m g k t as in text (for स पद्मिन्यो) Ñ2 V2 B D6 सपद्माश्च नदीरतत्र, D1–4 तत्र नद्य स (D3 सु)-पद्मिन्यो, G1 तस्माद्दूरात्पद्मिन्यो —[b]) D1–4 11 -पक्षि- (for -द्विज) Ś1 B3 D8 M1 गणावृता (for °युता) —[c]) Ñ2 V2 B D6 हनुमान्वीरो, G2 3 M3 हरि° (for कपिशार्दूलो) —[d]) Ś1 पवनात्मज (for मारुता°) Ñ2 V2 B D6 नदद्भिर्विहग (B2 °द्भि पतगै) शुभै, D1 2 4 विकूजद्विहगा शुभा ※ Cv m g k t पद्मिन्य पद्मिनी ।, Cr पद्मिन्य । व्यत्ययेन द्वितीयार्थे प्रथमा ※

33 Ñ1 illeg for 33 (cf v l 30) —[a]) Ś1 Ñ2 V2 B D1–4 6 10 11 च (Ś1 D10 स) नदी (B2 °दीस्), G3 दीर्घिकाश् (sic) (for दीर्घिका) Ś1 B1 4 D1–4 10 11 रम्या, Ñ2 B2 D6 अ (B2 चा) न्या, V2 दिव्या, B3 पुण्याम् (for चापि) —G3 om (hapl) 33[b]–34[e] —[b]) B3 अन्या (for पूर्णां) V2 D6 शीतल-, B2 3 शीतस्य (for शीतेन) B2 3 D4 वारिण (for °णा) —[c]) V2 मल- (sic) (for मणि) Ś1 B3 D3 10 11 -प्रवाल- (for -प्रवर-) —[d]) Ś1 D1–4 10 11 मुक्तासिकत (Ś1 D10 °सौवर्ण) सतता, Ñ2 V2 B D6 मुक्तामिश्रित (B4 °प्रतिम) वालुका (B3 °पद्मका) ※ Ct सिकतशोभितामित्यत्र ह्रस्व आर्ष ※

34 Ñ1 illeg for 34 (cf. v l 30) G3 om up to 34[e] (cf. v l 33) Ñ2 V2 B D6 om 34[ab] —[a]) D3 विचित्रैर् (for विविधैर्) Ś1 D6 10 मृगसिंहैश्, D11 द्रुमभृङ्गैश् (for मृगसंघैश्) —[b]) D6 सेविता (for विचित्रां) Ś1 D10 चित्रितानना (for चित्रकाननाम्) —After 34[ab], Ś1 D1–4 10 11 ins

381* पद्मिनीभिश्च चित्राभि काञ्चनैश्च महाद्रुमै ।
तरुणादित्यसंकाशै शोभिता सप्रपुष्पितै ।

[D3.10 om l 2 —(l 2) D1 om शोभिता D11 द्रुमपुष्पिता (for सप्रपुष्पित) Ś1 शोणिताभा च पुष्पित (for the post. half)]

—[c]) B3 प्राकारै (for प्रासादै) —[d]) Ś1 D10 T1 2 G1 निर्मिता, Ñ2 V2 B1–3 D6 सु (V2 स्व) कृतैर् (for निर्मितैर्) B1 (m also as in text) पुण्यकर्मणा —[e]) Ś1 Ñ2 B1 2 4 D1–4 6 10 11 काचनै, B3 पर्वतै, G1 कृत्रिमै (for कानने) Ñ2 V2 B1 2 4 D6 पर्वतैश्, B3 G1 काचनैश् (for कृत्रिमैश्) Ś1 Ñ2 V2 B D1–4 6 10 11 T2 G2 [ए]व (for [अ]पि) —[f]) D2 11 पर्वतै (for सर्वत) Ñ2 V2 B D6 कृत्रिमैरुपशोभिता

ये केचित्पादपास्तत्र पुष्पोपगफलोपगाः ।
सच्छत्राः सवितर्दीकाः सर्वे सौवर्णवेदिकाः ॥ ३५

लताप्रतानैर्बहुभिः पर्णैश्च बहुभिर्वृताम् ।
काञ्चनीं शिंशुपामेकां ददर्श स महाकपिः ।
वृतां हेममयीभिस्तु वेदिकाभिः समन्ततः ॥ ३६

G. 5 16 45
B 5 14 37
L 5 0 0

35 Ñ1 illeg for 35 (cf v l 30) —[a]) D11 चर्पश्च ( for ये केचित् ) —[b]) Ś1 -फलोपगं , Ñ2 V2 -फलोपमा (for °गा ) —D1 om $35^{cd}$ —[c]) D8 सच्छिन्ना (for सच्छत्रा ) D3 सतत दीप्ता , G3 सतता कांता (for सवितर्दीका ) Ñ2 V2 B D6 सच्छदा( V2 सगच्छद्, B1 सच्छत्रा, B2 स्वच्छद-, B3 सर्वत्र, D6 सुच्छदा) विविधाकारा , D11 सचित्रा सवितानाका —D4 om (hapl ) $35^{d}$ —[d]) Ś1 D8 10 11 सर्वं (for सर्वे ) ❀ Cv सौवर्णवेदिका सौवर्ण सोपानपर्वाणि । एवं सति वितर्दिवेदिकयोरैक्याशंकृत पुनरुक्तिदोषो न भवति ❀ —After 35, Ñ2 V2 B D1 3 4 6 11 ins , while Ś1 D2 10 ins l 6–7 and 10–11 only after 35

382* दिव्याभिर्बहुपुष्पाभिर्लताभिरनुवेष्टिता ।
वीक्ष्यमाणश्च तत्रासौ मार्गमाणश्च मैथिलीम् ।
अवेक्षमाणो भूमीश्च सर्वत सोऽन्ववेक्षत ।
सुसमृष्टेषु देशेषु ससृष्टमणितोरणम् ।
ददर्श विविधाकारं मणिकाञ्चनवेदिकम् ।
तथा विचरतस्तस्य तद्वनं पुष्पितद्रुमम् ।
मार्गमाणस्य वैदेहीं सा व्यतीयाय शर्वरी ।
षडङ्गवेदविदुषां क्रतुप्रवरयाजिनाम् ।
शुश्राव ब्रह्मघोषं च तूर्यघोषं च मारुतिः ।
मुक्त्वा विहगा स्थानानि ययुः पद्मसरांसि वै ।
बोधयित्वा शुभैर्वाक्यैः कामिनीमिव कामुकाः ।

[(l 1) D11 उप (for अनु-) —(l 2) B1 3 4 वीक्षमाणश्च ( for वीक्ष्यमाणश्च ) B3 शनैर् ( for तत्रासौ ) B4 जानकीं (for मैथिलीम् ) —(l. 3) Ñ2 B1 2 D1 7 6 अवेक्ष्यमाणो (for °क्षमाणो ) Ñ2 B1 3 4 D1 3 4 11 भूमिं च, V2 भूमिष्ठ (for भूमीश्च ) Ñ2 D1 3 सोऽभ्य( Ñ2 °नु )वेक्षत, V2 सोंवरेच्छुत ( sic), D6 सोन्वन्तुसुम (sic), D11 तु निवेध्यते (sic) ( for सोऽन्ववेक्षत ) B3 तिर्यगूर्ध्वमधस्तत ( for the post half) —(l 4) V2 B2 3 सु( V2 अ, B3 स )ससृष्टेषु, B4 D1 असमृ( D1 °ष्ट )ष्टेषु, D4 अदृष्टेषु च, D11 स समृष्टेषु (for सुसमृष्टेषु). D6 सृष्टेषु देशेषु शुभ (for the prior half) Ñ2 B3 समृष्ट-, B1 सुसृष्ट, B4 D6 सुसृष्ट , D11 समृष्ट- (for ससृष्ट-) V2 B4 D6 -मणितोरणा (for °णम्) —(l 5) B4 D6 विविधाकारा (for °र) Ñ2 B4 D6 11 -वेदिका (for °कम् ) —(l 6) B3 तदा (for तथा) Ś1 [अ]पि चरतस् (for वि° ) D6 तत्र (for तस्य ) Ś1 D1–4 10 11 वनं तत् (by transp ) (for तद्वनं ) D11 पुष्पित वनं (for °तद्रुमम्) —(l 7) D11 मार्गमाणश्च (for °णस्य ) D1 2 4 व्यतीता च ( for °याय ) Ñ2 V2 B D6 व्यतीयाय विभावरी (for the post half) —(l 8) D4 -देव- ( for -वेद ) D1 4 -प्रवरयाजिना( D1 °न ) —After l 8, D1 3 4 ins

382(A)* ददर्श विविधाकारां नदिकां मारुतिः ।

—D1 3 4 om l 9 —(l 9) B3 शुश्रुम, D11 शुश्रुवे ( for शुश्राव ). Ñ2 D6 11 ब्रह्मघोषाश्च( D11 °ष ) (for °ष ) D6 तूर्यघोषाश्च ( for °ष ) —(l 10) Ś1 Ñ2 V2 B3 4 D2 4 6 10 11 मुक्ता ( for मुक्त्वा ) D4 पानार्थं ( for स्थानानि ) B3 न (for व ) Ś1 D1–4 10 11 यान्ति पद्माकुलं नगं (for the post half) —(l 11) Ś1 D1–4 10 11 बोधयन (for बोधयित्वा ) D2 11 कामिनीर्, D3 कामिन्य (for °नीम् ) D3 कामुकान् ( for कामुका ) ]

36 Ñ1 illeg for $36^{ab}$ (cf v l 30) Ñ2 V2 B D1 4 6 11 om $36^{ab}$ Ś1 D10 read $36^{a-d}$ after 38 —D2 3 read 36 after 39 —[a]) D2 -प्रवालैर् (for प्रतानैर्) —[b]) D3 फलैश्च , D8 पण्यश्च ( sic), T2 वर्णैश्च (for पर्णैश्च) D5 7 T3 वृता (for वृताम्) Ñ2 V2 B D1 4 6 11 read $36^{c-f}$ after 385* —[c]) Ś1 शिशपीमेका, Ñ V2 B D6 10 11 G2 M Cv k t शिंश( D6 11 °शि )पामेका, D1 2 4 श( D2 सि )सिपामेका, T2 शुशुपामेका, Cm g as in text (for शिंशुपामेका) V2 om (hapl ) after ददर्श in $36^{d}$ up to ददर्श in l 3 of 384* —[d]) Ñ1 मानवात्मज , Ñ2 B D6 महतीं कपि , D1 4 कपिसत्तम , D2 3 5 10 11 G1 M हनुमान्कपि (for स महाकपि ) —After $36^{cd}$, Ñ1 ( partly illeg ) ins

383* हनूमानञ्जला ... मारुतवेगवान् ।

—Thereafter, Ñ1 cont , while Ś1 Ñ2 V2 B D1–4 6 10 11 ins after $36^{cd}$

384* तेषां काञ्चनवृक्षाणां मध्ये जातं वनस्पतिम् ।
प्रवृद्धं शिंशपावृक्षं पुप्लुवे पवनात्मज ।
आप्लुत्य हनुमान्वीरो ददर्श रुचिरप्रभाम् ।

[ V2 om up to ददर्श in l 3 Ñ1 illeg from वनं in l 1 up to पुप्लु in l 2 —(l 1) Ñ2 B D6 महाद्रुम( B4 °प्रभ ) (for वनस्पतिम् ) —(l 2) D1–4 6 11 शंशि( D2 6 शिशि, D3 शिशु )पावृक्ष (for शिंशपावृक्षं ) B1 D4 पुप्लुव, B2 D3 10 11 पुप्लुवे (for पुप्लुवे ) Ñ2 B2 4 तत्र मारुति , B1 3 स महाकपि , D10 जनकात्मज (sic) ( for पवनात्मज ) D6 पुप्लुवे स मारुति (for the post half) —Ñ1 illeg up to first ~ in l 3 —(l 3) Ś1 उत्प्लुत्य, B3 उत्पत्य, D10 तत्प्लुत्य (for आप्लुत्य) D11 रुचिरप्रभं ]

—Ś1 D10 om $36^{e}$ —[e]) D6 वृतो (for वृता). Ñ1 V2 B D1–4 6 8 11 G3 च (for तु) —[f]) Ñ1 च सर्वत (for समन्तत )

G 5 16. 43 B. 5 14 38 L 5 9 44 सोऽपश्यद्भूमिभागांश्च गर्तप्रस्रवणानि च ।
सुवर्णवृक्षानपरान्ददर्श शिखिसंनिभान् ॥ ३७
तेषां द्रुमाणां प्रभया मेरोरिव महाकपिः ।
अमन्यत तदा वीरः काञ्चनोऽस्मीति वानरः ॥ ३८
तां काञ्चनैस्तरुगणैर्मारुतेन च वीजिताम् ।
किङ्किणीशतनिर्घोषां दृष्ट्वा विस्मयमागमत् ॥ ३९
सुपुष्पिताग्रां रुचिरां तरुणाङ्कुरपल्लवाम् ।
तामारुह्य महावेगः शिंशपां पर्णसंवृताम् ॥ ४०
इतो द्रक्ष्यामि वैदेहीं रामदर्शनलालसाम् ।
इतश्चेतश्च दुःखार्तां संपतन्तीं यदृच्छया ॥ ४१
अशोकवनिका चेयं दृढं रम्या दुरात्मनः ।
चम्पकैश्चन्दनैश्चापि वकुलैश्च विभूषिता ॥ ४२

---

37 Ñ1 om 37–39 —$^{a}$) Ś1 D1–3 10 11 पश्यन् (for ऽपश्यद्) D6 भूमिभागंश्च (for °गांश्च). —$^{b}$) Ñ2 B1–3 D1–4 6 11 तत्र, V2 B4 T2 तत, D7 9 नग, M2 यत्र (for गर्त-) Ś1 D10 लतास्तत्र वनानि च —$^{cd}$) D3 सौवर्ण-, D4 सुपर्ण- (for सुवर्ण-) G3 पुष्पान् (for वृक्षान्) Ś1 अग्नि-सनिभान्, D6 marg (for शिखि°) Ñ2 V2 B D6 तथा- (B4 °त) सुवर्णवृक्षांश्च सौवर्ण(V2 °र्णं)कुसुमच्छदान् (B3 °द्रुमान्)

38 Ñ1 om 38 (cf v l 37) —$^{b}$) Ś1 D10 मेरुर्, D3 मेराव (for मेरोर्) Ñ2 D6 समतत, V2 B समप्रभ, D8 T1 3 G1 2 M3 दिवाकर (for महाकपि) —$^{c}$) Ś1 Ñ2 V2 B D1–4 6 10 11 महातेजा, T1 तदा पीत, T2 ततो वीर (for तदा वीर) —$^{d}$) Ñ2 V2 B D6 M2 मारुति, D7 9 सर्वत (for वानर) —After 38, Ś1 D10 read 36$^{a-d}$.

39 Ñ1 om 39 (cf v l 37) Ś1 D10 om 39–40$^{b}$ —$^{a}$) D2 5 8 11 T3 M2 तत, Cm g as in text (for ता) Ñ2 V2 B D6 G1 Ck t तान्काञ्चनांस्तरुगणान्, D7 9 तान्का(D9 तत्का)चनान्वृक्षगणान्, M1 तत्काचनस्तु तरुभिर् —$^{b}$) B3 श्वसनेन (for मारुतेन) —After मारुतेन, D4 repeats erroneously from महातेजा (see var) in 38$^{c}$ up to मारुतेन in 39$^{b}$ Ñ2 V2 B D1–4 6 11 समीरितान् (D1 3 4 °ता, D2 11 °त), D5 7 9 प्रकंपितान् (D5 °त), D8 G1 च वीजित (G1 °तान्), T2 च कपित, M1 च शोभिता, M2 प्रविराजित (hypm) (for च वीजिताम्) —$^{c}$) D1 3 4 -जाल (for शत-) Ñ2 V2 B D6 7 9 G1 -निर्घोषान्, D2 8 M1 2 -निर्घोष, Cg as in text (for -निर्घोषां) —$^{d}$) D8 T2 G1 Ck आगत, Ct as in text (for आगमत्) Ñ2 V2 B D6 ददर्श पवनात्मज, D1–4 11 ददर्श स महाकपि —After 39, Ñ2 V2 B D1 4 6 11 ins

385* लताप्रवालैस्तरुणैः पत्रैश्च बहुभिर्वृताम् ।

[Ñ2 D6 तत्र, B1 त ता (sic) (for लता) D11 प्रतानैर् (for -प्रवालैस्) D1 4 11 बहुभि (for तरुणै) B2 लताबाल-स्तरुण, B3 लता पुराणस्तरुणै (for the prior half) V2 B2 पत्रैश् (for पत्रैश्) ]

—Thereafter they read 36$^{cdef}$ —After 39, D2 3 read 36

40 Ś1 D10 om. 40$^{ab}$ (cf v l 39) —$^{a}$) B1 4 M1 2 Ck t सुपुष्पिताग्रान्, D2 3 9 T1 3 Cm g स पुष्पिताग्रा (D9 °ग्रान्), D4 सुपुष्पिताग्या (for सुपुष्पिताग्रां) Ñ1 V2 B1 D7 9 G M2 रुचिरास्, D8 हनुमास्, M1 तरुणास् (for रुचिरां) Ñ2 B2 3 D5 6 11 पुष्पिताग्रा (D11 °ग्र्या) सुरुचिरा —$^{b}$) Ñ2 V2 B D6 -कोमला, D3 -कोरका (sic), D7 9 -पल्लवान् (for -पल्लवाम्) —$^{c}$) Ś1 Ñ2 V2 B D2 6 10 स(Ś1 D10 त)मारुह्य (for ता°) Ś1 Ñ V2 B D1–4 6 10 11 -तेजा, T1 3 G2 M3 बाहु (for -वेग) —$^{d}$) D1 4 अशिपा, D2 6 11 शिंशिपा, D3 5 7–9 T2 3 M3 Cm शिंशुपा, G3 शिंशुमा (for शिंशपां). Ñ2 V2 B D6 तामचितयत्, T2 पर्णसंयुता (for °वृताम्)

41 $^{a}$) Ś1 ततो, Ñ2 V2 B D6 इह (for इतो) ॐ Cg इतो द्रक्ष्यामि, इमामारुह्य द्रक्ष्यामि । ल्यब्लोपे पञ्चमी ॐ —After 41$^{a}$, Ñ1 ins

386* 　　　　रामपत्नीं यशस्विनीम् ।
स ता जनकराजस्य

—$^{d}$) T2 सचरन्तीं, B (ed) सतपती (for संपतन्तीं) —After 41, Ñ1 ins.

387* सतपन्ती भृश बाला राक्षसीगणवेष्टिताम् ।

—Thereafter Ñ1 cont, while Ś1 Ñ2 V2 B D6 10 11 ins after 41

388* निरुद्धा परमोद्विग्ना बाष्पापिहितलोचनाम् ।
मृगेण हरिणीं हीना मृगराजवशामिव ।

[Ñ1 illeg from द्वि in l 1 up to l 2 —(l 1) Ś1 V2 D10 11 बाष्पोपहत, B3 बाष्पपीडित- (for बाष्पापिहित) D11 चेतना —(l 2) Ś1 D10 11 विहीना मृगराजेन (for the prior half) Ś1 D10 -वधूम्, D11 -वधूर (for -वशाम्) ]

42 $^{a}$) Ñ2 V2 B D6 हीय, D11 चेव (for चेयं) —$^{b}$) Ś1 D6 8 10 G1 दृढा, D5 ता तु, D11 दृष्ट्वा (for दृढं) B2 D7 रम्या (for रम्या) D8 महात्मन (for दुरा°). —After 42$^{ab}$, Ñ2 V2 B D6 11 ins

389* काञ्चनैरावृता वृक्षैर्बहुभिः सुमनोहरैः ।
[D11 आवृतर् (for आवृता) ]

—$^{c}$) Ś1 Ñ1 D10 चम्पक (for चम्पकैश्) Ś1 Ñ V2 B D1 2 4 6 10 11 सर(B3 °व)लैश्, D3 तिलकैश् (for चन्दनैश्) D7–9 G1 2 M1 2 चन्दनैश्चम्पकैश् (by transp).

इयं च नलिनी रम्या द्विजसंघनिषेविता ।
इमां सा राममहिषी नूनमेष्यति जानकी ॥ ४३

सा रामा राममहिषी राघवस्य प्रिया सदा ।
वनसंचारकुशला नूनमेष्यति जानकी ॥ ४४

अथवा मृगशावाक्षी वनस्यास्य विचक्षणा ।
वनमेष्यति सा चेह रामचिन्तानुकर्शिता ॥ ४५

रामशोकाभिसंतप्ता सा देवी वामलोचना ।
वनवासरता नित्यमेष्यते वनचारिणी ॥ ४६

वनेचराणां सततं नूनं स्पृहयते पुरा ।
रामस्य दयिता भार्या जनकस्य सुता सती ॥ ४७

संध्याकालमनाः श्यामा ध्रुवमेष्यति जानकी ।
नदीं चेमां शिवजलां संध्यार्थे वरवर्णिनी ॥ ४८

G 5 16 0
B 5 14 19
L 5 9 58

Ñ2 V2 B D6 चेत्र, G3 वापि (for चापि) —$^d$) D8 वापि भूषिता, T2 उपशोभिता, Cr as in text (for च विभूषिता) Ś1 Ñ2 V2 B D1–4 6 10 11 शोभिता चटनैस्तथा (D2 °न पृथक्), Ñ1 चदनैश्च सुशोभिता —After 42, Ñ2 V2 B D6 11 ins

390* लताभिश्च सुपुष्पाभिर्माल्यैश्च जलजैस्तथा ।

[B3 चलपुष्पाभि, D6 च सपुष्पाभिर्, D11 च सुगंधीभिर् (for च सुपुष्पाभिर्) V2 B4 तमालैर्, B3 शालैश्च (for माल्यैश्च) ]

43 D8 om 43 —$^b$) Ś1 -सिंह, V2 -हस- (for सघ) —Ñ1 illeg from महिषी in $^c$ up to $^d$ —$^c$) Ñ2 V2 B D6 इह (for इमां) Ñ1 D3 5 7 9 G1 M1 2 Ct राज, Cr m as in text (for राम) —$^d$) D6 om (hapl) from एष्यति up to 46$^c$ Ś1 D10 न समेष्यति (for नूनमेष्यति) —After 43, Ñ1 ins 5 lines, which are illeg —After 43, D1 (first time) ins 391*, while D4 reads 47$^{ab}$ (preceded by 391*)

44 D6 om 44 (cf v l 43) V2 B1–3 om 44–50 Ñ2 om 44–46$^b$ Ś1 Ñ1 D4 11 om (hapl) 44 —$^a$) D1 वने चे सारासा (corrupt) (for सा रामा) D5 7–9 T3 राज- (for राम-) D3 सा राममहिषी देवी —$^b$) M1 रावणस्य (for राघवस्य) D8 T1 3 G3 M3 सती (for सदा) B4 D1–3 10 रामस्य च सती (D1 3 10 °ती) प्रिया ❀ Ck t अरामा रामवियुक्ता ❀ —$^c$) M1 -चारेषु (for -सचार-) —$^d$) D5 7–9 T2 G1 3 M1 2 ध्रुवम्, D10 वनम् (for नूनम्) —After 44, D1 reads 47$^{ab}$ (preceded by 391* [second time])

45 Ñ2 V2 B1–3 D6 om 45 (cf v l 43 and 44) D1 4 read 45$^{ab}$ after 46 —$^b$) Ñ1 दिदृक्षया (for विचक्षणा) —$^c$) D3 ध्रुवम् (for वनम्) Ś1 B4 D3 10 सा चेन, Ñ1 सा चेह D1 4 सार्थेय, D2 सार्थेद, D5 सार्था हि, D7 9 सार्धेह, D8 G2 M3 Cv p g सार्थेह, D11 सान्धीह, T2 सा देवी, G1 सा नूनं, G3 सार्धेन, M1 साप्येह (for सा चेह) —$^d$) Ñ1 D7–9 सुकर्शिता (for -[स]नु°) ❀ Cv सार्थेहेति पाठे सा भार्या इह वन ह न (?) वनप्रदेशमेष्य-तीत्यत्रसर्वान्तिरपरिग्रह । Cg सा आयेति पदच्छेद ❀

46 D6 om 46$^{abc}$ (cf v l 43) V2 B1–3 om 46, Ñ2 om 46$^{ab}$ (for both, cf v l 44) —$^b$) Ñ1 जानकी (for सा देवी) Ś1 D10 देवी कमललोचना —$^c$) B4 -वासवती, D5 10 G3 M2 3 वासे रता (for वासरता) —$^d$) D11 वनचारिणा, T2 वरवर्णिनी (for वनचारिणी) ❀ Cg एष्यते एष्यति ❀ —After 46, D1 4 read 45$^{ab}$

47 V2 B1–3 om 47 (cf v l 44) Ñ2 D6 om 47$^{ab}$ D1 4 (after 43 owing to om.) read 47$^{ab}$ after 44 (both preceded by 391* [D1 391* second time]) —$^a$) D1 4 सुभग (for सतत) —$^b$) D10 स्पृहयती, D11 स प्रियते (sic) (for स्पृहयते) Ś1 सृति, Ñ1 शुभा, B4 वन, D2 5 11 G2 M2 वरा, D3 च सा, D10 रति, M1 -तरा (for पुरा) D1 4 राम नुश्यपते त (D4 स) दा —$^c$) D2 च प्रिया (for दयिता) D7 9 चाया (for भार्या) —$^d$) Ś1 Ñ2 B4 D1–4 6 10 11 नूनमेष्यति जानकी, Ñ1 नून सयति जानकी (sic) —After 47, Ś1 Ñ B4 D3 6 11 ins, D1 (repeats after 44) 4 ins after 43

391* रामशोकाभिसतप्ता प्रिया राममनोरमा ।

[D4 -शोभित- (sic) (for -शोकाभि-) D1 (both times) 11 -मनोरमा (for °रमा) Ñ1 निरत रामसगना (for the post half) ]

—Thereafter Ñ1 reads दशरथेपि and then illeg up to 5 13 6

48 V2 B1–3 om 48 (cf v l 44) Ñ1 illeg for 48 (cf v l 47) Ñ2 D6 om 48–49 Ś1 D2 10 om (D2 10 hapl) 48$^{ab}$ —$^a$) D1 3 4 T2 -कालज्ञ, D11 -रागवत, Cv r m g as in text (for -कालमना) D3 -श्याम (for श्यामा) B4 सध्येव वामरम्यात —$^b$) D3 वरम (for ध्रुवम्) D5 T2 मैथिली (for जानकी) D1 4 स्फुटानुदर्शिना —$^c$) Ś1 B4 D1–4 10 11 इमा नदीं T1 3 नदीं चेमा, Cv as in text (for नदीं चेमां) Ś1 B4 D1–4 10 11 T2 G3 M2 शीत, D7–9 शुभ (for शिव) —$^d$) B4 सध्या च (sic) (for सध्यार्थे)

G 5 16 0 / B 5 14 50 / L 5 9 59

तस्याश्चाप्यनुरूपेयमशोकवनिका शुभा ।
शुभा या पार्थिवेन्द्रस्य पत्नी रामस्य संमता ॥ ४९
यदि जीवति सा देवी ताराधिपनिभानना ।
आगमिष्यति सावश्यमिमां शिवजलां नदीम् ॥ ५०

एवं तु मत्वा हनुमान्महात्मा
प्रतीक्षमाणो मनुजेन्द्रपत्नीम् ।
अवेक्षमाणश्च ददर्श सर्वं
सुपुष्पिते पर्णघने निलीनः ॥ ५१

इति श्रीरामायणे सुन्दरकाण्डे द्वादशः सर्गः ॥ १२ ॥

---

49 Ñ2 V2 B1–3 D6 om 49 (cf v l 44 and 48) Ñ1 illeg for 49 (cf v l 47) —a) D1 तस्या (for तस्याश्) —b) B4 गुहा (for शुभा) —c) Ś1 D8 10 सुभार्या, B4 अत्र या, D4 5 7–9 G3 M1 2 शुभाया (for शुभा या) —d) D1 3–5 8 T2 G3 M1 2 पत्न्या (for पत्नी) Ś1 D10 साम्प्रत, D3 सगता, D5 M1 2 सपदा (for समता)

50 V2 B1–3 om 50 (cf v l 44) Ñ1 illeg for 50 (cf v l 47) —b) Ś1 Ñ2 B4 D2 3 6 10 तारापति- (for °धिप-) —c) Ś1 Ñ2 D3 6 10 सुव्यक्तम्( Ś1 D10 °क्ता) (for सावश्यम्) —d) D5 7–9 T2 G2 3 M1 2 शीत-, Cg as in text (for शिव-) Ś1 Ñ2 B4 D1–4 6,10 11 पुण्या महानदीं

51 Ñ1 illeg for 51 (cf. v l 47) —a) D1 om, D3 स (for तु) D2 5 7 9 गत्वा Ñ2 V2 B D6 इत्येवमुक्त्वा (for एवं तु मत्वा) B3 भगवान् (for हनुमान्) —D9 reads from माणो in b up to अवेक्ष in c in marg —b) Ñ2 V2 B1 3 4 D6 निरीक्ष( V2 D6 °क्ष्य )माणो, B2 परीक्षमाणो, D3 5 8 प्रतीक्ष्यमाणो, Cg t as in text (for °क्षमाणो) M1 पुत्र (sic) (for पत्नीम्) —c) V2 D1 3–5 8 अवेक्ष्यमाणश्, Cg t as in text (for अवेक्ष°) Ś1 D10 स, D6 तु (for च) —d) B1 3 4 D6 सुपुष्पित, D2 5 सपुष्पिते (for सुपुष्पिते) Ś1 Ñ2 V2 B D1–4 6 10 11 पत्रघ( B3 °व )ने, Cv m g k t as in text (for पर्णघने) B3 प्रलीन, D1 4 5 8 विलीन, G1 निलीन, Cm g as in text (for निलीन )

Colophon Ñ1 illeg (cf v l 47) —*Sarga name* Ś1 D10 अशोकवनिकादर्शन, Ñ2 V2 B D6 अशोकवनिका (B3 °वन )प्रवेश, D1 4 हनुमद्वितर्क, D2 11 अशोकवनिका प्रवेशे हनुमद्वितर्कं, D3 अशोकवनिकाप्रवेशे हनुमच्चिंता —*Sarga no* (figures, words or both) D1 2 4 10 11 om, Ś1 11, Ñ2 B1 2 4 D3 6 17, V2 8; B3 15, D5 7–9 S 14 —After colophon, G M1 conclude with श्रीरामाय नम

# २७

5 28 12<br>5 29 1<br>5 23 1

तथागतां तां व्यथितामनिन्दितां
व्यपेतहर्षां परिदीनमानसाम् ।
शुभां निमित्तानि शुभानि भेजिरे
नरं श्रिया जुष्टमिवोपजीविनः ॥ १

तस्याः शुभं वाममरालपक्ष्म-
राजीवृतं कृष्णविशालशुक्लम् ।
प्रास्पन्दतैकं नयनं सुकेश्या
मीनाहतं पद्ममिवाभिताम्रम् ॥ २

भुजश्च चार्वञ्चितपीनवृत्तः
परार्ध्यकालागुरुचन्दनार्हः ।
अनुत्तमेनाध्युषितः प्रियेण
चिरेण वामः समवेपताशु ॥ ३

गजेन्द्रहस्तप्रतिमश्च पीन-
स्तयोर्द्वयोः संहतयोः सुजातः ।
प्रस्पन्दमानः पुनरूरुरस्या
रामं पुरस्तात्स्थितमाचचक्षे ॥ ४

शुभं पुनर्हेमसमानवर्ण-
मीषद्रजोध्वस्तमिवामलाक्ष्याः ।
वासः स्थितायाः शिखराग्रदन्त्याः
किंचित्परिस्रंसत चारुगात्र्याः ॥ ५

---

तथा (for तदा) —[b]) Ś1 Ñ1 B4 D1 2 4 10 11 सत्यो (D1 °त्यो) चितानि, D3 सत्यानि यानि, Cv as in text (for धैर्यार्जितानि) D8 काले (for लोके) —[c]) D10 T2 3 तथा (for तदा) —[d]) D6 reads [d], except पुरा प्र-, in marg Ś1 D1 10 पुरा वि-, Ñ1 D11 पुरा सु-, Ñ2 V2 B D6 सुरर्षि-, D2 5 पुरा प्र-, G3 पुराभि-, Cr m g k t as in text (for पुराधि) Ś1 B3 D1 10 -शुद्धानि, Cr as in text (for सिद्धानि) Ś1 D10 11 सु(D10 स)लक्षणानि, Ñ1 D2 4 सुलक्षि°, B4 [उ]पलक्षणानि Ñ2 B1.2 सिद्धाभ्यु(Ñ2 °द्यु)पलक्षितानि

Colophon Ñ2 V2 B1–3 D6 om —*Sarga name* Ś1 Ñ1 B4 D1 2 4 10 11 सीतावि(Ñ1 D1 °प्र)लाप, D3 सीताशुभदर्शन —*Sarga no* (figures, words or both) Ñ1 D1 2 4 5 10 11 om, Ś1 24, B4 D3 29, D7 8 T G M1 3 28, D9 18, M2 27 —After colophon, G concludes with श्रीरामाय नम

## 27

Ñ2 V2 B1–3 D6 cont the previous Sarga M2 begins with श्रीरामाय नम .

1 [a]) D4 अथागता T2 परिहीनमानसा (for व्यथिता मनिन्दिता) Ś1 D1 10 तथा च ता(D1 °थागता) सुव्यथिता सुदीना, B1 तथा तपर्ती बहुधाप्यनिंदिता —[b]) Ñ1 B4 D4 व्यपेतदर्पा, D2 °शोका, D7 9 T1 व्यतीतहर्षा, Cg as in text (for व्यपेतहर्षां) B2 प्रविहीनमानसा, D10 अतिदीन°, T2 व्यथितामनिंदिता, Cg as in text ※ Cg व्यपेतहर्षाम् । हर्षं पूर्वमस्यामुषित्वा गत इति न ज्ञातामित्यर्थः । व्यपाभ्यामुपसर्गाभ्या तथा प्रतीयते ※ —[c]) Ś1 D10 G1 तथा, Ñ1 D1–4 11 तदा, Ñ2 V B D6 श्रामन्, Cg k as in text (for शुभा) Ñ2 V B1 2.4 D6 स र्गतो, B3 तानि, D1 7 जज्ञिरे (for भेजिरे) —[d]) Ś1 D10 जय , Ñ1 नृप (for नर)

Ñ2 V B1–3 D6 [अ]नुजीविन , D1 [अ]पि जी°, D5 7 9 G Ct [उ]पसे°, Cm g as in text (for [उ]पजी°)

2 [b]) Ś1 D1 3 10 राजीववत्(D1 °मत्), Ñ2 V B2–4 D6 -राजीकृत, D4 7.9 Ck.t राज्यावृत, D5 -विराजित, G3 -राजीयुत, Cm as in text (for राजीवृत) Ś1 D10 11 -युक्त, B4 -सूक्ष्म (for -शुक्लम्) T1 3 M3 शुक्लविशालकृष्ण (by transp) —D4 om from 2[c] up to शु in 3[b] —[c]) B3 पस्पद चैक, D11 प्रस्पन्ददेव (sic) (for प्रास्पन्दतैक) Ñ2 V B D6 वरारया, M1 शुभाग्या (for सुकेश्या) —[d]) Ś1 D10 T2 वाताहत (for मीना°) Ś1 [अ]तिधूम्र, V2 [अ]तिपद्म, B D6 G2 [अ]तिताम्र, Cv m g k t as in text (for [अ]भिताम्रम्) D11 पद्मपियाभिताम्र

3 D4 om up to शु in [b] (cf v l 2) —[a]) Ñ2 V2 B बाहुश्च प(V2 वी)र्यायत-, V1 illeg , D6 बाहुश्च पयायन- (sic) (for भुजश्च चार्वञ्चित ) Ñ1 D1–3 5 7–9 G3 M2 -वृत्तपीन (by transp) —[b]) D1 3 8 T1 3 G M1 3 -[अ]गरु Ñ2 V B D6 G2 -चन्दनाक्त —[c]) D4 ननूत्तमेन, D6 अनुक्रमेण (for अनुत्तमेन) —[d]) B1–3 D6 वीरेण (for चिरेण) Ñ2 V B D6 परिवेपते स्म (for समवेपताशु) Ś1 Ñ1 D1–4 10 11 प्रा(Ñ1 D1 प्र[sic])वेपतास्या सु(D10 स्म)चिरेण(Ñ1 °रस्य) वाम

4 [b]) D8 सगतयो Ś1 D10 च जात , D1 सुजात, M1 द्विजात , B (ed) तु जात (for सुजात) Ñ V B1–3 D2–4 6 स्तीनो(Ñ1 D2–4 तयो)रेक सुशुभ (Ñ2 B3 D6 शुशुभे, V2 च शुभ ) सुजात , B4 पीतोरेकश्च तत. प्रयात (sic) —[c]) M2 प्रस्पदमान (sic) D8 अन्यो (for अस्या) Ñ V B D2–4 6 कनकावदातो

5 Ñ2 V B1–3 D6 om 5 —[a]) Ś1 Ñ1 D10 सुस, D1 शुभ्र, T2 शुद्ध, C1 g as in text (for शुभ) —[b]) D1–4 अथ (for इव) D7 9 [अ]तुलाक्ष्या —[c]) Ñ1 रामास्त्रिरस्या (sic) (for वास स्थिताया ) Cv k t as in

एतैर्निमित्तैरपरैश्च सुभ्रूः
संबोधिता प्रागपि साधुसिद्धैः ।
वातातपक्लान्तमिव प्रनष्टं
वर्षेण बीजं प्रतिसंजहर्ष ॥ ६
तस्याः पुनर्बिम्बफलोपमोष्ठं
स्वक्षिभ्रुकेशान्तमरालपक्ष्म ।
वक्त्रं बभासे सितशुक्लदंष्ट्रं
राहोर्मुखाच्चन्द्र इव प्रमुक्तः ॥ ७
सा वीतशोका व्यपनीततन्द्री
शान्तज्वरा हर्षविबुद्धसत्त्वा ।
अशोभतार्या वदनेन शुक्ले
शीतांशुना रात्रिरिवोदितेन ॥ ८ G 5 28 B 5 29 L 5 23

इति श्रीरामायणे सुन्दरकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

text, Cr m g -दस्या (for -दन्त्या) —ᵈ) D6 reads ᵈ except किंचित् in marg D1 2 4 नदा (for परि-) Ś1 D10 11 स्तनोत्पदत, D11 स्तन स्पदत (for परिसमत) Ñ1 कथचिदाकप च (sic) D8 चारुदत्या (for °गात्र्या) B4 किंचित्तदाशसत चारुनेत्र्या, D3 किंचित्प्रशशास सुचारु गात्र्या ❀ Cr m g t परिस्मयत पर्यस्मयत (Cr g अडभाव आर्ष) ❀

6 ᵃ) B4 एकैर् (sic) (for एतैर्) D6 च शुभेश् (for अपरैश्) Ś1 D10 सीता (for सुभ्रू) —ᵇ) B2 D7–9 11 T2 3 सचोदिता B1 4 साध्यसिद्धे, B2 सिद्धसाध्यै, B3 D1 4 साधुबुद्धि (D1 °बुद्धे, D4 °बोधे), Cm g k t as in text (for साधुसिद्धैः) ❀ Cm t 'सत्यादिभि' इति पाठान्तरम् ❀ —ᶜ) B4 D1 T2 क्लातम् (for क्लान्तम्) Ś1 Ñ1 B1 4 D10 [अ]प्र(Ś1 B4 D10 °प)कृष्ट, V1 [अ]प्रणष्ट, V3 D4 [अ]प्रहष्ट, B2 [अ]प्रघृष्य, B3 प्रहर्षाद्, D1 [अ]पक्लिष्ट, D2 11 [अ]पहष्ट, D9 प्रकृष्ट, T1 3 प्रदृष्ट, Cg as in text (for प्रनष्ट) —ᵈ) Ś1 वर्षं च (for वर्षेण) D11 जीव (for बीज) Ñ2 V B1 3 D6 प्रतिसंजिजीवे B3 हर्षेण जीव हि यथा जिजीवे

7 B1 om 7 —ᵃ) D5 पुन, G1 तस्य (for तस्याः) D2 4 तदा (for पुनर्) Ś1 D1 2 4 5 10 11 T2 3 M3 -फलाधरौ(D1 4 T2 3 M3 °रो)ष्ठ, Ñ2 V B2–4 D6 -फलाधरौ-(V2 B4 D6 °रो)ष्ठा (for -फलोपमोष्ठ) —ᵇ) Ś1 D2 4 सुभ्रवक्षि-, Ñ1 शुभाक्षि, Ñ2 V B2–4 D6 सुजात-, D1 शुक्लाक्षि-, D5 स्वदिभ्रू- (sic), D10 स्वल्वक्षि (sic), D11 शुभानि (for स्वक्षिभ्रु-) —ᶜ) D1 तदाभात् (for बभासे) Ñ2 V B2(also)D6–9 स्मित (for सित-) D5 T2 -दत (for -दष्ट्र) Ś1 D2 4 10 11 चारुदष्ट्र, Ñ V B2–4 D1 3 6 -चारुदत (for -शुक्लदष्ट्र) —ᵈ) D1 यथा (for मुखाच्) V2 B2–4 D6 इवार्धमुक्त ❀ Cv सितशुक्लदष्ट्र सबद्धविमलदन्तम्। विस्पष्टार्थमेकार्थे शब्दद्वयप्रयोगो वा।, Cr सितशुक्लदष्ट्र नीरन्ध्रत्वेन ससक्तशुक्लदष्ट्रम्।, Cm सितशुक्लदष्ट्र पङ्क्तिबद्धधवलदन्तमित्यर्थ।, Cg सितशुक्लदष्ट्रमत्यन्तशुक्लदन्तम्। एकार्थे शब्दद्वयप्रयोगोऽतिशयज्ञापनाय। यथा मुग्धमनोज्ञ इति। नीरन्ध्रत्वेन ससक्तशुक्लदष्ट्रमिति वार्थ।, Ck t सितशुक्लदष्ट्र स्फटिकादिसितपदार्थैरप्युक्ता दष्टा यत्र तत् ❀

8 ᵃ) Ś1 Ñ1 B4 D7–10 Cr तद्रा, B3 -गात्रा, Cm g as in text (for तन्द्री) —ᵇ) Ś1 V B1–3 D1 3 4 6 10 -विशुद्धसत्त्वा, B4 D8 G1 2 M3 Cm g विबुद्ध°, Cv r k t as in text —ᶜ) Ś1 D2 4 10 11 सुभ्रू, Ñ1 शुभ्र, D1 सीता, D3 तेन, T2 M1 शुक्ला, Cm g k t as in text (for शुक्ले) Ñ2 V B D6 व्यराजतात्यर्थ(B3 °त्यत)मुदार(V2 °दग्र, B4 मतीव शुक्ला(B3 4 °द्धा), G1 अशोभता तावदनेन शुक्ले —ᵈ) D11 शीताशुताराभिरिवोदितेन

Colophon —*Sarga name* Ś1 शुभनिमित्तदर्शन, Ñ1 B1 D3 सीताशुभनिमित्तदर्शन (B1 °सूचन, D3 °सूचक) Ñ2 V B2 4 D1 6 सीतानिमित्तसूचन(D1 °न), B3 शुभसूचन, D2 4 निमित्तदर्शन, D10 लकापर्वणि सीताया शुभनिमित्तदर्शन, D11 निकृतदर्शन —*Sarga no* (figures, words or both) Ñ1 D1 2 4 10 11 om, Ś1 25, Ñ2 V1 D5–9 T G M1 3 29, V2 19, B1 2 M2 28, B3 27 (as in text), B4 D3 30 —After colophon, D2 concludes with राम, G श्रीरामाय नम

## २८

5 29 1 5 30 1 5 24 1 हनुमानपि विक्रान्तः सर्वं शुश्राव तत्त्वतः ।
सीतायास्त्रिजटायाश्च राक्षसीनां च तर्जनम् ॥ १
अवेक्षमाणस्तां देवीं देवतामिव नन्दने ।
ततो बहुविधां चिन्तां चिन्तयामास वानरः ॥ २
यां कपीनां सहस्राणि सुबहून्ययुतानि च ।
दिक्षु सर्वासु मार्गन्ते सेयमासादिता मया ॥ ३
चारेण तु सुयुक्तेन शत्रोः शक्तिमवेक्षता ।
गूढेन चरता तावदवेक्षितमिदं मया ॥ ४
राक्षसानां विशेषश्च पुरी चेयमवेक्षिता ।
राक्षसाधिपतेरस्य प्रभावो रावणस्य च ॥ ५
युक्तं तस्याप्रमेयस्य सर्वसत्त्वदयावतः ।
समाश्वासयितुं भार्यां पतिदर्शनकाङ्क्षिणीम् ॥ ६
अहमाश्वासयाम्येनां पूर्णचन्द्रनिभाननाम् ।
अदृष्टदुःखां दुःखस्य न ह्यन्तमधिगच्छतीम् ॥ ७
यदि ह्यहमिमां देवीं शोकोपहतचेतनाम् ।
अनाश्वास्य गमिष्यामि दोषवद्गमनं भवेत् ॥ ८

## 28

M2 begins with श्रीरामाय नम

1 $^{a}$) D3 सलीन , D8 M2 Cr m विश्रात , Cg k t as in text (for विक्रान्त ) —$^{b}$) D8 तद्दत· (for तत्त्वत ). —After 1$^{ab}$, Ñ1 ins

627* रावणस्य च पापस्य राक्षसीना च गर्जितम् ।

—$^{c}$) B4 त्रिदशायाश्, D2 त्रिजडायाश् (for त्रिजटा°) —Ñ1 illeg for $^{d}$ —$^{d}$) B3 राक्षसीं चैव (sic) (for राक्षसीना च) Ś1 D3 5 8 10 M2 तर्जित, Ñ2 V B2–4 D6 भाषित, D2 4 7 9 11 गर्जित, Cg as in text (for तर्जनम्) B1 सर्वं शुश्राव वेदित —After 1, Ñ1 (partly illeg ) ins

628* शिश . स्थितो वीर श्रुतवान्दृष्टवानपि ।
अचिन्तयन्महातेजा त * न ^ ^ ^ ।

2 V1 illeg for 2–13 —$^{a}$) V2 B1 D1–4 6 10 T3 अवेक्ष्यमाणम्, B4 अवेक्ष्य सीता, D5 सोवेक्ष्यमाणस्, Cr g as in text (for अवेक्षमाणस्) D2 4 11 एव (for देवीं) —$^{c}$) T1 3 हनूमान्बहुधा (for बहुविधा चिन्ता) —$^{d}$) Ñ2 V2 B D3 6 मारुति (for वानर ) —After 2, M2 ins

629* अवेक्षमाणो वैदेहीमब्रवीन्मारुतात्मज ।

3 V1 illeg for 3 (cf v l 2) —$^{a}$) Ś1 Ñ1 D1–4 10 11 जनी( D1 °ने )नानि (for सहस्राणि ) —$^{b}$) Ś1 Ñ2 V2 B D6 10 प्र( B3 4 अ[ with hiatus ])युतान्यर्बुदानि च, Ñ1 D1 2 4 11 सहस्राण्यर्बुदानि च, D3 सहस्राण्युद्यतानि च, D5 शतानि नियुतानि च, D7 9 बहूनि अयुतानि व (with hiatus) —$^{c}$) D1 सर्वाणि (for °सु ) D7 10 मार्गति (for मार्गन्ते ) Ñ2 V2 B D6 मार्गंति जानकी सीता

4 V1 illeg for 4 (cf v l 2) Ś1 D10 om (hapl ) 4 —$^{a}$) B1 4 D1 2 4 G1 चारेण च, M1 चारेणव, M2 वानरेण (sic) (for चारेण तु) B2 3 D6 चारेण सुप्रयुक्तेन, D7 चारेण प्रसुयुक्तेन —$^{b}$) D2 शत्रा (for शत्रो ) Ñ2 V2 B D6 शत्रिन्यपे( B2 3 °व )क्षया, D1 3 °मभीप्सता, D5 °रवेक्षिता (for शक्तिमवेक्षता) —$^{c}$) Ñ2 V2 B तत्तम्, D6 त च, D8 यावद् (for तावद् ) —$^{d}$) Ñ2 B1 2 4 उपेक्षितम् (sic), V2 D6 उत्प्रेक्षितम्, B3 आलक्षितम् (for अवेक्षितम्) D4 त्वया (sic) (for मया)

5 V1 illeg for 5 (cf v l 2) —$^{a}$) D4 राक्षसीना Ś1 Ñ2 B4 D1 4 6 10 11 निवेश( Ś1 D1 4 10 °शा, D11 शा )श्च, Ñ1 D2 निवासाश्च, V2 विनाशश्च, B3 G2 विशेषेण, D3 विनाशाय, D8 विशेष च, Cm k t as in text (for विशेषश्च ) —$^{b}$) Ñ1 सुदुर्गम, Ñ2 V2 B2 D2 6 7 9 निरीक्षिता, B1 3 4 परीक्षिता (for अवेक्षिता ) D11 पुरीं चेमा निरीक्षणा (corrupt ) —$^{c}$) Ñ2 V2 B D1 6 तस्य, D2 अद्य (for अस्य ) —$^{d}$) D4 प्रकारो (for प्रभावो ) D11 तु (for च )

6 V1 illeg for 6 (cf v l 7) —$^{a}$) D7 9 यथा (for युक्त ) —$^{b}$) Ś1 Ñ1 D2–4 10 सैय( D3 वीर्यं ) सत्त्ववतो ( D2 4 °ता ) मया, V2 B सत्य सत्यवतो( B2 °त्यमतवतो, B4 °त्य सत्य वचो ) मया, D1 सत्यमुत्तमतो मया, D11 सर्वसत्त्वमतो मया —Ñ1 illeg for 6$^{c}$–16 —$^{c}$) Ś1 D10 सीता, D1 2 4 11 भार्या (for भार्यां ) —$^{d}$) Ś1 पत्युर्, D1 3 10 भर्तुर् (for पति ) Ś1 D1 2 4 10 11 -काक्षिणी, Ñ2 V2 B D6 -लालसा ( for -काङ्क्षिणीम् )

7 Ñ1 V1 illeg for 7 (cf v l 6 and 2 respy ) V2 B1 2 4 om 7$^{ab}$ —$^{a}$) Ñ2 D2 6 अयम् , D1 सोहम् (for अहम्) —$^{c}$) Ś1 -पूर्वां, V2 B1 2 4 D3 T2 -दु खा (for -दु खां) G1 M3 दु खार्ता (for दु खस्य ) —$^{d}$) D11 महातम् (for न ह्यन्तम् ) V2 B1 2 4 D1 4 11 T2 अधिगच्छति, D2 3 अनु( D3 उप )गच्छति (for अधिगच्छतीम् ) G1 M3 दु खस्यान्तमगच्छतीं

8 Ñ1 V1 illeg for 8 (cf v l 6 and 2 respy ) —$^{a}$) Ñ2 V2 B D6 तु, D3 च, T1 3 M3 [अ]पि (for हि ) D7 9 सतीम् (for इमा ) Ś1 D4 5 8 10 T2 G M2 एव, Ñ2 V2 B D6 एता, D1 2 7 9 एना, D3 दीना (for देवीं ) D11 यद्यह विपमासेव —$^{b}$) D3 शोकाभिहत- Ñ2 B1 D1–4 T1 3 G2 -चेतस (for -चेतनाम् ) —D5 reads

गते हि मयि तत्रेयं राजपुत्री यशस्विनी ।
परित्राणमविन्दन्ती जानकी जीवितं त्यजेत् ॥ ९
मया च स महाबाहुः पूर्णचन्द्रनिभाननः ।
समाश्वासयितुं न्याय्यः सीतादर्शनलालसः ॥ १०
निशाचरीणां प्रत्यक्षमक्षमं चाभिभाषणम् ।
कथ नु खलु कर्तव्यमिदं कृच्छ्रगतो ह्यहम् ॥ ११
अनेन रात्रिशेषेण यदि नाश्वास्यते मया ।
सर्वथा नास्ति संदेहः परित्यक्ष्यति जीवितम् ॥ १२
रामश्च यदि पृच्छेन्मां किं मा सीताब्रवीद्वचः ।
किमहं तं प्रतिब्रूयामसंभाष्य सुमध्यमाम् ॥ १३
सीतासंदेशरहितं मामितस्त्वरया गतम् ।
निर्दहेदपि काकुत्स्थः क्रुद्धस्तीव्रेण चक्षुषा ॥ १४
यदि चेद्योजयिष्यामि भर्तारं रामकारणात् ।
व्यर्थमागमनं तस्य ससैन्यस्य भविष्यति ॥ १५
अन्तरं त्वहमासाद्य राक्षसीनामिह स्थितः ।
शनैराश्वासयिष्यामि संतापबहुलामिमाम् ॥ १६ G 5 29 15 B 5 30 16 L 5 24 17

[d] in marg —[d]) V2 B1 D2 3 शेष बहुमतं (sic), B2 4 D6 11 शेषो बहुमतो (for दोषवद्गमन)

9 Ñ1 V1 illeg for 9 (cf v l 6 and 2 respy) B1–3 om 9 —[a]) B4 मयि च, G1 तु मयि, Cg k t as in text (for हि मयि) Ñ2 V. B4 D6 भद्रेय (for तत्रेय) —[b]) V2 D4 6 11 तपस्विनी, B4 मनस्विनी (for यश°) —[c]) B1 अविन्दती, D7–9 G1 2 अपश्यती, M1 अजानती (for अविन्दन्ती) —[d]) B4 जीवनं, G1 दिव्यजीवित (hypm) (for जीवित)

10 Ñ1 V1 illeg for 10 (cf v l 6 and 2 respy) —[a]) Ś1 D7 9 यथा (for मया) Ś1 D10 transp च and स B4 महायशा महाबाहु —[c]) Ś1 D10 योग्य, V2 D8 M1 युक्त, B D6 शक्य, D4 T3 Cr न्याय्य, D11 G2 नार्य (sic), Cv m g k t as in text (for न्याय्य) —[d]) Ñ2 V2 B1 2 4 D6 काङ्क्षित (for लालस)

11 Ñ1 V1 illeg for 11 (cf v l 6 and 2 respy) —[b]) D4 न क्षम (for अक्षम) D7 9 चाभिभाषितु(D9 °त), T2 चैव भाषण, Cm k t as in text (for चाभिभाषणम्) Ś1 D10 न वक्तु प्रतिभाति मे, Ñ2 D6 न युक्त चाभिभाषित(D6 °तिभाषण), V2 समुक्त चापि भाषण, B3 कथमस्याभिभाषण, D1 3 न क्षम प्र( D3 चा)तिभाषण, D2 न क्षम चाभिमर्षण, D11 मया चास्याभिभाषण, T1 3 M3 अनर्ह चापि भाषण —[c]) V2 B3 D3 4 6–9 तु (for नु) —[d]) Ś1 D3 10 G2 इति, Cm k t as in text (for इद) Ñ2 V2 B D6 इति चिंतापरोभवत्

12 Ñ1 V1 illeg for 12 (cf v l 6 and 2 respy) —[a]) V2 B1 2 [अ]ह्नावशेषेण (for रात्रिशे°) Ñ2 B3 D6 अस्मिन्काले तु कल्याणी —[b]) T2 यदि नाश्वासयाम्यह —[c]) D3 [अ]त्र (for [अ]स्ति) —[d]) B4 परित्यजति.

13 Ñ1 V1 illeg for 13 (cf v l 6 and 2 respy) —[a]) V2 D7 9 T1 2 Ct तु, Cr k is in text (for च) Ñ2 V2 B D6 मा पृच्छेत् (by transp) —[b]) D3 त्वा, D8 M1 वा, Ct as in text (for मा) D2 इति (for वच) Ñ2 V2 B D6 किं मे कांता( B3 भार्या )ब्रवीदिति —[c]) D11 om त (subm) Ś1 D10 प्रिय (for प्रति) —[d]) Ñ2 B D6 अपृष्ट्वेमा, V2 असपृष्ट्वेमा (hypm) (for असभाष्य)

14 Ñ1 illeg for 14 (cf v l 6) Ñ2 V B D6 transp 14 and 15 —[b]) V2 B D6 तरसा, D4 त्वरित (for त्वरया) —[d]) Ś1 क्रूरस्, D7 9 क्रोध- (for क्रुद्धस्) Ś1 Ñ2 V B D6 10 M1 तीक्ष्णेन, D11 तिग्मेन, (for तीव्रेण) D1 क्रुद्धस्तिमितचक्षुषा, D2 4 क्रुद्धस्तिग्मेन चक्षुषा, D3 क्रोधदीप्तेन चक्षुषा, D8 कुपितस्तीक्ष्णचक्षुषा —After 14, Ś1 Ñ2 V B D1–4 6 10 11 ins

630* यद्यनाश्वास्य यास्यामि सतापबहुलामिमाम् ।
प्राप्तदोषो भविष्यामि दोषश्चाभाषणे महान् ।

[(l 1) D1 यदा (for यदि) Ś1 D1 नाश्वास्य (for [अ]नाश्वास्य) Ś1 D1–4 10 11 गच्छामि (for यास्यामि) Ś1 D1 2 4 10 11 शोकेनाभिप्र( D1 2 11 °नि )पीडिता (for the post half) —(l 2) Ś1 D10 प्रायो दोषी (for प्राप्तदोषो) Ś1 D1–4 10 11 [अ]कथने (for [अ]भाषणे) B2 मम (for महान्) B3 रामसुग्रीवयो पुर (for the post half) ]

15 Ñ1 illeg for 15 (cf v l 6) Ñ2 V B D6 transp 14 and 15 —[a]) Ś1 D1 10 नाम गमिष्यामि, Ñ2 V B D6 चो( V2 B1 2 चो )द्वेजयि°, D3 11 वा योजयि°, D4 7–9 M2 Ck t चोद्योजयि°, T1 3 चेद्योधयि°, G2 3 M1 3 Cr m चोद्योजयि° (for चेद्योजयिष्यामि) —[b]) D3 T1 3 हर्तार, D11 कपींद्र, M1 सुग्रीव, Cm g k t as in text (for भर्तार) D1 राममंतिकात (for रामकारणात्) Ñ2 V B D6 राम पद्मनिभे( B4 °दले )क्षण —[cd]) Ś1 D10 वृथागमनमित्येव तस्य राज्ञो भविष्यति

16 Ñ1 illeg for 16 (cf v l 6) —[a]) Ś1 अनत (for अन्तर) B4 [इ]दम् (for [अ]हम्) Ś1 D1 10 च समासाद्य (for त्वहमा°) —[b]) Ś1 D10 T2 अह स्थित, B4 इतश्चिर, D2 इहास्थित, D7 G3 समवस्थित (for इह स्थित) —[c]) V B1 2 अनेन, B3 कथम्, B4 पुनाम् (for शनैर्) D7 9 शनराश्वासयाम्यद्य —[d]) D5 निश्वास- (for सताप) Ñ2 V1 B3 4 D6 शोकेना( B3 °नो )प( B4 °भि, D6 °थ )हतेन्द्रिया, V2 शोकेन पिहितेक्षणा, B1 2 शोकेनापिहितेन्द्रिया

G 5 29 16
B 5 30 17
L 5 24 18

अहं ह्यतितनुश्चैव वानरश्च विशेषतः ।
वाचं चोदाहरिष्यामि मानुषीमिह संस्कृताम् ॥ १७
यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् ।
रावणं मन्यमाना मां सीता भीता भविष्यति ॥ १८
अवश्यमेव वक्तव्यं मानुषं वाक्यमर्थवत् ।
मया सान्त्वयितुं शक्या नान्यथेयमनिन्दिता ॥ १९
सेयमालोक्य मे रूपं जानकी भाषितं तथा ।
रक्षोभिस्त्रासिता पूर्वं भूयस्त्रासं गमिष्यति ॥ २०
ततो जातपरित्रासा शब्दं कुर्यान्मनस्विनी ।
जानमाना विशालाक्षी रावणं कामरूपिणम् ॥ २१
सीतया च कृते शब्दे सहसा राक्षसीगणः ।
नानाप्रहरणो घोरः समेयादन्तकोपमः ॥ २२
ततो मां संपरिक्षिप्य सर्वतो विकृताननाः ।
वधे च ग्रहणे चैव कुर्युर्यत्नं यथाबलम् ॥ २३
तं मां शाखाः प्रशाखाश्च स्कन्धांश्चोत्तमशाखिनाम् ।
दृष्ट्वा विपरिधावन्तं भवेयुर्भयशङ्किताः ॥ २४

17 $^{a}$) D5 9 M3 तु (for हि) Ñ2 विद्वितस, V B D2 6 11 [अ]विद्वितश्च, D3 [अ]वितनुश्च (sic), T2 [अ]टपतमश्च (for [अ]तितनुश्च) Ñ2 D6 तत्र (for चैव) —Ñ2 V B D6 om $17^{cd}$ —$^{c}$) D4 वाचा (for वाच) D1 4 न (for च) Ś1 Ñ1 D1–4 10 11 [उ]दीरयिष्यामि (for [उ]दाहरि°) —D4 om (hapl ?) $17^{d}$–$18^{a}$ —$^{d}$) Ś1 Ñ1 D1 2 10 11 पुन, D3 5 T2 इव (for इह) Ś1 D2 10 संस्कृता Cm g k t as in text (for संस्कृताम्)

18 D4 om $18^{a}$ (cf v l 17) D2 5 G2 om (hapl) $18^{ab}$ —$^{a}$) Ś1 Ñ1 वा नाभिवास्यामि, Ñ2 V B D6 वाच वदिष्यामि, D1 10 वाचाभिवास्यामि, D3 11 चेन्नाभिभास्यामि (for वाच प्रदास्यामि) —Ñ1 illeg for $18^{b}$–$19^{b}$ —$^{b}$) B3 D11 द्विजातिसे(D11 °मि)व (for द्विजातिरिव) D3 संस्कृत, D4 संस्कृता (for संस्कृताम्) Ś1 D1 10 संतापवद्दलामि(D1 °ला इति)मा —After $18^{ab}$, Ñ2 V B1–3 D6 read $20^{ab}$ —$^{c}$) V2 B3 D8 10 G2 3 मन्यमाना मा(B3 हि), D4 बहुमन्याना —$^{d}$) Ñ2 V B D6 पुनस्त्रासं गमिष्यति —After 18, D5 8 T1 3 G2 3 M3 ins

631* वानरस्य विशेषेण कथं स्यादभिभाषणम् ।

19 Ñ1 illeg for $19^{ab}$ (cf v l 18) Ñ2 V B1–3 D6 om 19 —$^{a}$) D3 अदृश्यम् (for अवश्यम्) D2 M2 पुन (for एव) Ś1 D3 4 10 11 वदता, D5 T2 कर्तव्य (for वक्तव्य) —$^{b}$) Ś1 D10 मानुष्य (for °ष) —$^{d}$) B4 [अ]न्यथैवम्, D4 [अ]न्येनैवम् (for [अ]न्यथेयम्)

20 Ñ2 V B1–3 D6 read $20^{ab}$ after $18^{ab}$ —$^{a}$) D1 11 अन्यथा (for सेयम्) Ñ2 V B1–3 D6 आलक्ष्य रूपं च —$^{b}$) Ñ2 V B1–3 D6 च मे, B4 D5 यथा, D4 मया, T2 G2 तदा, M1 तत (for तथा) —Ñ2 V B1–3 D6 om $20^{cd}$ —$^{c}$) D1 नूनं (for पूर्वं) —Ñ1 illeg for $20^{d}$–21 —$^{d}$) B4 D5 पुनस्, D1 भयात् (for भूयस्) D7 9 उपैष्यति (for गमिष्यति)

21 Ñ1 illeg for 21 (cf v l 20) Ś1 D10 om $21^{ab}$ —$^{b}$) D2 श्रुत्वा (for कुर्यान्) D1 2 4 11 तपस्विनी (for मन°). —$^{c}$) Ś1 D2–4 10 11 जानीते हि, Ñ2 V B D6 विजानती, D1 जानकी हि, D7–9 जानाना मा, G1 ज्ञानमाना, Cr m g k t as in text (for जानमाना) —$^{d}$) B4 वानर, T1 राक्षस (for रावण) ※ Cm जानमाना मन्वाना।, Cg k जानमाना जानाना (Ck °नानेति यावत्) (Cg मुमानाम आर्षं) ※

22 $^{a}$) Ś1 Ñ1 सीताया (for सीतया) Ś1 Ñ1 D3 10 हि (for च) D11 सर्वं (sic) (for शब्दे) —$^{b}$) D11 रक्षणीगण (for राक्षसीगण॰) —$^{c}$) D1 -प्रहरणैर् (for -प्रहरणो) Ś1 D10 -प्रहरणा घोरा, V B1 2 4 -प्रहरणैर्घोरैर्, D2 4 11 G3 M1 -प्रहरणोपेतो (for -प्रहरणो घोर) —Ñ1 illeg for $22^{d}$–$26^{b}$ —$^{d}$) Ś1 D10 समग्रा अन्तकोपम (Ś1 °मा) (sic), Ñ2 V B D2–4.6 11 मामुपेयात्(B2 °पति न) संशय

23 Ñ1 illeg for 23 (cf v l 22) —$^{a}$) D1 4 ताश्च (for ततो) B1 4 मे (for मां) Ś1 D10 ताश्च मां संपरिज्ञाय, V1 B2 ततो मे परिसंक्षिप्य, D2 तास्तु मां वीक्ष्य तिष्ठत, D11 ताश्च मां स्वेषु पृच्छति. —$^{b}$) Ś1 D10 सर्वाश्च, B1 सर्वास्ता D4 विवृतानना, M2 °न (for विकृतानना) —After $23^{ab}$, D2 4 11 ins

632* अनेनोद्वेजितेत्येव तत कुर्युः पराक्रमम् ।

[D4 [अ]पि (for [इ]ति)]

—$^{c}$) B D2 4 6 11 वा (for first च) D5 प्रहरणे (for च ग्रहणे) Ñ2 V B D2 4 6 वापि (for चैव) —$^{d}$) Ñ2 V B2 4 D6 यत्नं कुर्युर् (by transp), B1 यत्नं कुर्याद्, M2 कुर्यात्यत्नं (for कुर्युर्यत्नं) Ś1 D1 5 7 9 11 महाबल(D7 9 °ला) D3 तथा बलं (for यथाबलम्) B3 यत्नं कुर्यान्न संशय

24 Ñ1 illeg for 24 (cf v l 22) —$^{a}$) Ś1 Ñ2 V B D2 6 10 तत, D1 3.4 ता मां, D8 G2 M1 3 गृह्य, D11 तासा (sic), Ct as in text (for तं मां) B3 D1 3 5–7 11 T3 G1 शाखा- (G1 °खा), Ck.t as in text (for शाखाः) D3 -प्रशाखासु (for °खाश्च) —D4 om $24^{bcd}$ —$^{b}$) B4 स्कंध च, D3 स्कन्धेषु (for स्कन्धांश्च) D11 [उ]त्तर- (for [उ]त्तम-) D8 -शाखिन D10 स्कंधाश्चोत्तमशाखिना —$^{c}$) Ñ2 V B D1 2 6 शीघ्रं (for दृष्ट्वा) Ś1 मामभिधावत, B2 D1 परिविधावत(D1 °ति), D7–9 Ck.t च परिधावत, Cr g as in text (for विपरिधावन्तं) —$^{d}$) D7 9 Ck परि-,

मम रूपं च संप्रेक्ष्य वनं विचरतो महत् ।
राक्षस्यो भयवित्रस्ता भवेयुर्विकृताननाः ॥ २५
ततः कुर्युः समाह्वानं राक्षस्यो रक्षसामपि ।
राक्षसेन्द्रनियुक्तानां राक्षसेन्द्रनिवेशने ॥ २६
ते शूलशरनिस्त्रिंशविविधायुधपाणयः ।
आपतेयुर्विमर्देऽस्मिन्वेगेनोद्विग्नकारिणः ॥ २७
संक्रुद्धैस्तैस्तु परितो विधमन्रक्षसां बलम् ।
शक्नुयां न तु संप्राप्तुं परं पारं महोदधेः ॥ २८
मां वा गृह्णीयुराप्लुत्य बहवः शीघ्रकारिणः ।
स्यादियं चागृहीतार्था मम च ग्रहणं भवेत् ॥ २९
हिंसाभिरुचयो हिंस्युरिमां वा जनकात्मजाम् ।
विपन्नं स्यात्ततः कार्यं रामसुग्रीवयोरिदम् ॥ ३०
उद्देशे नष्टमार्गेऽस्मिन्राक्षसैः परिवारिते ।
सागरेण परिक्षिप्ते गुप्ते वसति जानकी ॥ ३१ G 5 29 B 5 30.3 L 5 24 3

---

T1 3 बहु- (for भय-) Ñ2 V B D1 2 6 यदा (D1 2 °दि) प्राप्तु न (B1 °प्तुम) शक्नुयु

25 Ñ1 illeg for 25 (cf v l 22) Ñ2 V B D6 om 25 —$^a$) Ś1 D10 त्वसदृश, D2 च त दृष्ट्वा, D3 च सचिन्त्य, D11 च सदृश्य (for च संप्रेक्ष्य) —$^b$) Ś1 D1–5 7–11 G2 M3 वने (for वन) D1 2 4 11 च चरित, D3 विचरित (for °रतो) D5 हरे (for महत्) M1 वचन वदतो महत् —$^c$) Ś1 D1 3 10 सत्रस्ता, Ct as in text (for वित्रस्ता) —D5 reads $^d$ in marg —$^d$) D7–9 विकृतस्वरा

26 Ñ1 illeg for 26$^{ab}$ (cf v l 22) —$^a$) Ñ2 V1 B1 2 4 D6 तदा (for तत ) B3 समाह्वान तदा कुर्यू —$^b$) D1 राक्षसान् (for रक्षसाम्) Ñ2 V B D2 4 6 रक्षसा भीमकर्मणा —$^c$) Ñ2 V B D6 राक्षसाना (for राक्षसेन्द्र-) B1 निवेशन, B3 महाबला (for -निवेशने) D2 11 मम सप्रति धावता (D11 शासने), D4 मम प्रतिमशासने

27 Ñ1 illeg for 27–28$^b$ —$^a$) Ñ2 V B2–4 D6 शक्ति (for शूल-) B3 शूल , D1 2 T2 वर , D2 4 G3 M3 -शक्ति- (for शर-) B1 राक्षसा मा (for शूलशर-) B4 D4 निस्त्रिंशा (for -निस्त्रिंश-) —Ś1 D10 transp $^b$ and $^d$ —After 27$^{ab}$, B1 ins

633* ग्रहणे वा वधे वापि यत्न कुर्युर्महाबला ।

—D1 om 27$^{cd}$ —$^c$) V2 प्रापतेयुर् (for आ°) —$^d$) D5 7 9 T Ct [उ]द्वेग , Cr m g as in text (for [उ]द्विग्न ) Cr m g as in text, Ct कारणात् (for कारिण ) Ś1 D10 प्रापतोमरधारिण , Ñ2 V B1–3 D6 वेगिता विघ्नकारिण , B4 भविता विघ्नकारक , D2–4 वेगेना (D3 °न ) विघ्नकारिण , D11 विगणाग्रहकारिण

28 Ñ1 illeg for 28$^{ab}$ (cf v l 27) V1 om (hapl ) 28–29$^b$ Ñ2 V2 B1 2 3 (om 28$^{ca}$) D6 read 28 (including star passage) before 34 —$^a$) D7–9 G3 M2 3 Cg सन्दृस, I2 सवृतस , G2 सन्दृस (for सक्रुद्धस) Ś1 D10 तेषु रक्ष सु, M1 ते परिवृतो (for तैस्तु परितो) B4 D11 सरब्धैस्तैस्तु रक्षोभि , D1 4 सक्रुद्धस्तैस्तु रक्षोभिर्, D2 सनद्धैस्तै सुरक्षोभिर्, D3 सप्रमत्तैश्च रक्षोभिर्, G1 सक्रुद्धस्तै परिवृतो —$^b$) Ś1 विदलन्, D7–9 विधमे, D10 विदमन , Cg as in text (for विधमन) Ś1 D1–5 7–9 11 G1 M2 राक्षस, D10 राक्षसी , Cg as in text (for रक्षसा) —For 28$^{ab}$, Ñ2 V2 B1–3 D6 subst , while B4 ins after 33

634* समुद्धस्त्वतिवेगेन विधमेय निशाचरान् ।

[ B1 सरब्धस्त्वति-, B2 मबुद्धस्तिवह, B3 सवध्य चाति-, B4 समृद्धमपि (for समुद्धस्त्वति-) B1 विध्वमेय (for विधमेय) B4 निशाचर ]

—P3 om 28$^c$–29$^b$ D8 om 28$^{cd}$ —$^c$) D1 शक्नुया (sic) (for शक्नुया) Ñ1 illeg , D4 तु न (by transp ) (for न तु) B1 त प्राप्तु, B2 तत्प्राप्तु, T2 सप्राप्य (for सप्राप्तु) Ś1 नियत प्राप्तु B4 शक्नुयाम कथ प्राप्तु —$^d$) D6 परे पारे (for पर पार)

29 Ñ2 V B1–3 om 29$^{ab}$ (for V1 B3 cf v l 28) D6 om 29–30$^b$ —$^a$) B4 जगृहुर् (for गृह्णीयुर्) Ś1 राक्षस्य (sic), Ñ1 D5 7 9 आवृत्य, D2 10 आगम्य (for आप्लुत्य) D1 मा गृह्णीयुर्मयाप्लुत्य (sic). —$^b$) D1 3 4 11 -चारिण (for -कारिण ) —$^c$) Ñ1 B4 D1 4 10 निगृहीतार्था (B4 °ता वा), Ñ2 V1 B3 चा (B3 वा) गृहीतात्मा, V2 B1 2 D2 3 11 वा गृहीतार्था, T2 G2 च गृही°, G1 चाकृतार्था हि, Cr m g k t as in text (for चागृहीतार्था) —$^d$) B D2 वा, D3 [अ]पि (for च) V B1 2 कृत (for भवेत्)

30 D6 om 30$^{ab}$ (cf v l 29) Ñ1 illeg for 30$^a$ —$^a$) Ś1 अतिक्रुद्धाश्च मा, V B1 2 D1–4 11 हिसारुचिस्त्वान्मा, B3 हिसारुचिरमा, B4 हिसाशीलाश्च मा, D10 अभिक्रुद्धाश्च मा (for हिंसाभिरुचयो) —$^b$) V2 अथ (for इमा) Ś1 B1 D10 च (for वा) —$^c$) B3 तदा, D1 कृत्य, D2 अत , D10 तु तत् (for तत ) D10 कर्म (for कार्यं).

31 V1 om 31 Ñ1 illeg for 31$^{ab}$ G2 transp 31$^{ab}$ and 31$^{cd}$ —$^a$) Ś1 D10 प्रदेशे, B4 विदेशे, Cv as in text (for उद्देशे) B4 न तु (for नष्ट ) Ś1 D10 च (for ऽस्मिन) —D4 om (hapl ) from राक्षसै in $^b$ up to ऽस्मिन in 635* —$^b$) D11 परिवारिते (for °वारिते) —For 31$^{ab}$, D2 subst , while D4 11 ins after 31$^{ab}$

635* देशे सुदूरे दुर्गेऽस्मिन्राक्षसेन्द्राभिरक्षिते ।

G 5 29 26 B 5 30 32 L 5 24 32 विशस्ते वा गृहीते वा रक्षोभिर्मयि संयुगे ।
नान्यं पश्यामि रामस्य सहायं कार्यसाधने ॥ ३२
विमृशंश्च न पश्यामि यो हते मयि वानरः ।
शतयोजनविस्तीर्णं लङ्घयेत महोदधिम् ॥ ३३
कामं हन्तुं समर्थोऽस्मि सहस्राण्यपि रक्षसाम् ।
न तु शक्ष्यामि संप्राप्तुं परं पारं महोदधेः ॥ ३४
असत्यानि च युद्धानि संशयो मे न रोचते ।
कश्च निःसंशयं कार्यं कुर्यात्प्राज्ञः ससंशयम् ॥ ३५
एष दोषो महान्हि स्यान्मम सीताभिभाषणे ।
प्राणत्यागश्च वैदेह्या भवेदनभिभाषणे ॥ ३६
भूताश्चार्था विनश्यन्ति देशकालविरोधिताः ।
विक्लवं दूतमासाद्य तमः सूर्योदये यथा ॥ ३७
अर्थानर्थान्तरे बुद्धिर्निश्चितापि न शोभते ।
घातयन्ति हि कार्याणि दूताः पण्डितमानिनः ॥ ३८

—$^{d}$) Ś1 D10 दुर्गे (for गुप्ते) —For 31, Ñ2 V2 B1–3 D6 subst and read after 33

636* देशे दुर्गे सुदूरे च सागरेणाभिसंवृते ।
गुप्ते वसति वैदेही राक्षसेन्द्राभिरक्षिते ।

[ (l 1) Cf 635* B2 च दूरे (for सुदूरे) B1 3 दूरे च दुग (for दुर्गे सुदूरे) B3 D6 [अ]भिसवृत (sic) (for °ते) —(l 2) B2 राक्षसेण (for °सेन्द्र) V2 [अ]भिसेविते, B3 °ता, D6 °त (for [अ]भिरक्षिते) ]

32 $^{a}$) Ś1 D10 विध्वस्ते, B4 D2 विनष्टे, D1 विहते, Cr g k t as in text (for विशस्ते) —$^{b}$) Ś1 D10 क्षोभिते (for रक्षोभिर्) —T2 om $32^{cd}$ —$^{c}$) B (ed) नाश (for नान्य) —$^{d}$) D4 11 सखाय, G2 M3 साहाय्य (for सहाय) D8 कर्म (for कार्य-) —For 32, V B1–3 subst, while Ñ2 D6 subst l 1 only for $32^{ab}$

637* हते वापि गृहीते वा मयि क्रुद्धैर्निशाचरैः ।
नान्य वीक्षेत वैदेही रामस्य चरमीदृशम् ।

[ (l 1) B3 निगृहिते (for [अ]पि गृहिते) —(l 2) B3 नान्यो वीक्षेत वदेही रामस्य महिषीमिह ]

33 $^{a}$) Ñ1 illeg for विमृशश्च न Ñ2 V1 B1 3 4 D6 10 विमृश्य, B2 विमृशान् (sic), Cr g as in text (for विमृशश्च) Ś1 D1–4 10 11 नैव, V2 B2 न च (by transp) (for च न) —$^{b}$) B4 त हते, D2 स्वाहते (for यो हते) B4 वानर, D2 °रे (for °र) —$^{d}$) V2 B2 D1 11 लवयेच्च, B1 4 लवयेद्यो, B3 विलङ्घयेद्यो, D2 लवयित्वा, D5 लवयेत्त (for लङ्घयेत) —After 33, Ñ2 V2 B1–3 D6 read 636*, while B4 ins 634*

34 Before 34, Ñ2 V2 B1 2 3 (om $28^{cd}$) D6 read 28 (including star passage) V1 B2–4 transp $34^{ab}$ and $34^{cd}$ —$^{a}$) B3 तदा (for काम) D10 हत्तुं (for हन्तु) G2 [ऽ]ह (for ऽस्मि) D5 विमृशन्निति न पश्यामि (sic) —$^{b}$) Ś1 D10 11 सहस्राण्येव, D8 सहस्रमपि (for सहस्राण्यपि) —Ñ1 illeg for $31^{c}$ – $40^{b}$ —$^{c}$) V1 illeg up to स D3 ननु, M1 न हि, Ct as in text (for न तु) D2 3 शक्यामि (sic), D5 पश्यामि (for शक्ष्यामि) D7–9 [अ]ह प्राप्तु (for सप्राप्तु) B2 शक्नुया न तु तत्प्राप्तु, B3 शक्नुयामुत्तम प्राप्तु, B4 शक्नुया च तत प्राप्तु —$^{d}$) Ś1 पार (for पर) —For $34^{cd}$, Ñ2 V2 B1 D6 subst, while V1 B2–4 ins after $34^{ab}$

638* एव तु सुमहत्कार्यं विनश्येन्नात्र सशय ।

[ B1 च, B3 तत (for तु) ]

35 Ñ1 illeg for 35 (cf. v l 34) —$^{a}$) Ñ2 V B D6 M1 अनित्यानि, D11 अन्समानि (for असत्यानि) V हि (for च) Ś1 D10 ससशयोपि हि युद्धेषु —$^{c}$) V2 D3 11 कश्चिन्न, B3 D1 कथ (for कश्च) T2 3 G1 M2 Cm k नि-सशय, Cr g t as in text (for °य) D11 G2 कुर्यात् (for कार्यं) Ñ2 V B1–3 D6 नि ससशये कार्ये —$^{d}$) B3 कुर्या, G2 कार्यं (for कुर्यात्) Ñ2 V B2 D6 कार्यं (for प्राज्ञ) D10 transp कुर्यात and प्राज्ञ V2 न सशय, T2 G1 3 M2 °य, Cm g t as in text (for ससशयम्) B1 3 कार्यमसशय D11 प्राज्ञ कार्यं न सशय

36 Ñ1 illeg for 36 (cf v l 34) G1 3 M3 transp. $36^{ab}$ and $36^{cd}$ —$^{a}$) B1 D3 एव (for एष) Ñ2 V B D6 मे (for हि) —$^{b}$) D1 -[अ]वि- (for -[अ]भि-) Ñ2 V B D6 सीतामसभिभाषणे —Ñ2 V B1–3 D6 om $36^{c}$ – 39, M1 2 om (hapl) $36^{cd}$ —$^{c}$) Ś1 B4 D2 4 5 10 11 तु, D1 [अ]थ (for च) —$^{d}$) T3 एवाभिभाषणे (for अनभि°)

37 Ñ1 illeg for 37 (cf v l 34) Ñ2 V B1–3 D6 om 37 (cf v l 36) = 5 2 37 —$^{a}$) Ś1 B4 D1–4 10 11 सतोप्यर्था, G1 भूतार्थाश्च, Cr m g as in text (for भूताश्चार्था) D7–9 T1 विरुध्यति (T1 °ते), T3 M1 विपद्यते, Cr m g as in text (for विनश्यन्ति) —$^{b}$) Ś1 D10 -विरोधत, D3 4 °न, Cr m g as in text (for -विरोधिता·) —$^{c}$) G3 नूनम्, Cr m g as in text (for दूतम्)

38 Ñ1 illeg for 38 (cf v l 34) Ñ2 V B1–3 D6 om 38 (cf v l 36) = 5 2 38 —$^{a}$) Ś1 (marg also) अर्थात्तत्वातरे, D10 अर्थात्त्वर्थांतरे, D11 अर्थदिव्यातरे (sic) (for अर्थानर्थान्तरे) D1 वापि (for बुद्धिर्) —$^{b}$) G3 हि (for [अ]पि) Ś1 B4 D1 2.4 10 11 नीता चा(Ś1 °तात्र, D1 2 4 °ता वा)पि, Cm g as in text (for निश्चितापि) —$^{c}$) B4 D4 शातयति, D2 11 पातयति (for घातयन्ति) D3 11 om हि (subm)

न विनश्येत्कथं कार्यं वैक्लव्यं न कथं भवेत् ।
लङ्घनं च समुद्रस्य कथं नु न वृथा भवेत् ॥ ३९
कथं नु खलु वाक्यं मे शृणुयान्नोद्विजेत च ।
इति संचिन्त्य हनुमांश्चकार मतिमान्मतिम् ॥ ४०
राममक्लिष्टकर्माणं स्वबन्धुमनुकीर्तयन् ।
नैनामुद्वेजयिष्यामि तद्बन्धुगतमानसाम् ॥ ४१
इक्ष्वाकूणां वरिष्ठस्य रामस्य विदितात्मनः ।
शुभानि धर्मयुक्तानि वचनानि समर्पयन् ॥ ४२
श्रावयिष्यामि सर्वाणि मधुरां प्रब्रुवन्गिरम् ।
श्रद्धास्यति यथा हीयं तथा सर्वं समादधे ॥ ४३

G 5 29
B 5 30 4
L 5 21 4

39 Ñ1 illeg for 39 (cf v l 34) Ñ2 V B1-3 D6 om 39 (cf v l 36) —$^{a}$) B4 D1-3 8 11 T G1 इद, Cg as in text (for कथ) —$^{b}$) D1 न वैक्लव्य (by transp ), D3 4 वेक्लव्येन B4 D1 2 4 5 7-9 11 G1 M2 मम, Cm g as in text (for भवेत्) D3 कथचन —$^{c}$) D1 4 तु, D5 in marg (for च) —$^{d}$) B4 मे, D2-4 8 11 तु (for नु) D1 न तु (for नु न) G3 M2 transp वृथा and भवेत् Ś1 D10 वृथा तु न कथ भवेत्

40 Ñ1 illeg for 40$^{ab}$ (cf v l 34) T1 damaged for 40$^{ab}$ —$^{a}$) D1 न, D3 वा, D4 6 तु, T2 च, Cr as in text (for नु) Ś1 Ñ2 V B D1-4 6 10 11 transp वाक्य and मे —B3 om (hapl ) from 40$^{b}$ up to the prior half of 640* —$^{b}$) V B2 D3 T3 G2 M3 वा, B1 G1 सा (for च) Ś1 D10 [उ]द्विजेन्न वा, B4 [उ]द्विजेतऽपि, D1 2 11 [उ]द्विजेति च, D4 [उ]द्विजोत्तम (sic) (for [उ]द्विजेत च) —B4 repeats 40$^{c}$-41$^{b}$ (including star passage) after 42$^{ab}$ —$^{c}$) D5 10 मतिमान् (for हनुमान्) Ñ2 V B1 2 D6 इति चितापरो भूत्वा —$^{d}$) M2 मन (for मतिम्) D5 मतिमात्मन , D10 हनुमान्मति, T2 G2 मतिमुत्तमा, Cr m g as in text (for मतिमान्मतिम्)

41 B3 om up to the prior half of 640*, B4 repeats 41$^{ab}$ (including star passage) (for both cf v l 40) —$^{b}$) Ś1 Ñ1 D10 सबद्धम्, Ñ2 V B1 2 4 (both times) D6 निमित्तैर्, D1 2 4 11 Ck सबधम्, D3 स बधुम्, D7 9 G3 Ct सुबधुम्, Cr m g as in text (for स्वबन्धुम्) Ñ1 अनुकीर्तितु, B4 (first time) °चितयन्, D11 °वर्तयन् (for अनुकीर्तयन्) —After 41$^{ab}$, Ñ1 (mostly illeg ) ins

639* ... राम सकीर्तयाम्यहम् ।
... ।

—After 41$^{ab}$, Ñ2 V B1 3(after 40$^{a}$ due to om ) 4 D6 ins , while B2 cont after 641*

640* तस्माद्वक्ष्याम्यह वाक्य मनुष्य इव सस्कृतम् ।

[ B3 om the prior half B4 (second time) वदामि (for वक्ष्यामि) ]

—Ñ1 illeg for 41$^{cd}$ —$^{c}$) Ś1 D10 नेनाम्, Cr g as in text (for नैनाम्) —$^{d}$) Ś1 D1-3 4 10 11 त सर्व-(D1 11 °र्वं), Ñ2 D6 स्वबधु-, V B G3 तद्बुद्धि (V2 °द्धिं), Cv r g t as in text (for तद्बन्धु-) Ś1 D10 11 G3 मानस (sic), D5 7 9 Ct चेतना, Cv r g as in text (for -मानसाम्) T3 तद्बधुमनुशोचतीं

42 For 42-43, Ñ2 V B1-3 D6 subst 641* —After 42$^{ab}$, B4 repeats 40$^{c}$-41$^{b}$ (including star passage) —B4 om 42$^{cd}$ —$^{c}$) D9 सूक्तानि (for -युक्तानि) —$^{d}$) Ś1 D3 4 10 समर्थयन्, T2 प्रकर्षयन्, Ck t as in text (for समर्पयन्)

43 $^{a}$) T1 3 G2 मधुर (for सर्वाणि) —$^{b}$) G2 सर्वाणि (for मधुरां) M2 गिरा (for गिरम्) Ś1 Ñ1 B4 D1-4 10 11 मधुर मधुराक्षर, D5 मधुर प्राब्रुवन्चिर, G1 3 मधुराज्ञा (G3 °ज्ञां) ब्रुवन्गिरम् —Ñ1 illeg from 43$^{c}$ up to 5 30 7 —$^{c}$) B4 चैय, D7 9 सीता, D10 चैव (for हीय) —$^{d}$) M1 सर्वान्, Ck t as in text (for सर्वं) B4 वदाम्यह, D1 यथा वदे (for समादधे) D3 सन्निधास्याम्यह तथा —For 42-43, Ñ2 V B1-3 D6 subst , while Ś1 B4 D1-4 10 11 ins after 43

641* पति हि परिशृण्वन्ती राममक्लिष्टकारिणम् ।
पश्यन्ती चाग्रत साध्वी नोद्वेग मे गमिष्यति ।

[ (l 1) D1 एव (for पतिं) Ś1 V2 D10 च (for हि) B1 3 परिगृह्णती (for °शृण्वन्ती) Ś1 D1-4 10 11 विरस्य पुरुषर्षभ (for the post half) —After l 1, Ś1 B4 D1-4 10 11 ins

641 (A)* व्यक्त पश्यन्त्याशा ती प्रहृष्टहृदया भवेत् ।

[ Ś1 व्यर्थं (for व्यक्त) D1 -विशाला ती ]

—D3 cont

641 (B)* एव कीर्तयतो मह्य रघुवशविवर्धनम् ।

—D10 om l 2 —(l 2) Ś1 चायता (for चाग्रत) Ś1 D2 11 व्यक्ति, D1 3 व्यक्त D4 नित्य (for साध्वी) Ñ2 D6 च (for मे) B3 करिष्यति, B4 भवि° (for गमि°) Ś1 D1-4 11 नोद्विग्ना मे(D1 तु) भवि(D11 नवि)ष्यति (for the post half) ]
—Thereafter, B2 cont 640*

G 5 29 0
B 5 30 44
L 5 24 46

इति स बहुविधं महानुभावो
जगतिपतेः प्रमदामवेक्षमाणः ।
मधुरमवितथं जगाद वाक्यं
द्रुमविटपान्तरमास्थितो हनूमान् ॥ ४४

इति श्रीरामायणे सुन्दरकाण्डे अष्टाविंशः सर्गः ॥ २८ ॥

# २९

एवं बहुविधां चिन्तां चिन्तयित्वा महाकपिः ।
संश्रवे मधुरं वाक्यं वैदेह्या व्याजहार ह ॥ १

राजा दशरथो नाम रथकुञ्जरवाजिमान् ।
पुण्यशीलो महाकीर्तिऋजुरासीन्महायशाः ।
चक्रवर्तिकुले जातः पुरंदरसमो बले ॥ २

---

44 Ñ1 illeg for 44 (cf v l 43) —a) V2 D9 om स B1 बहुविविध, B4 पवनसुतो, D1 स बहुविमृश्य (for स बहुविध) T2 महाप्रभावो (for °नुभावो) —b) Ś1 D1–4 10 11 मनुजपते, Ñ2 V B D6 प्लवगवर, Cr m g k t as in text (for जगतिपते) D4 प्रसादम् (for प्रमदाम्) Ś1 B4 D1 3–6 8 T3 अवेक्ष्यमाण —c) T3 Cr जगाम, Cv m g as in text (for जगाद) —d) D3 G3 आश्रितो (for आस्थितो) Ś1 Ñ2 V B D6 -विटपात(B4 °पोद, D6 °पोत्त)रसस्थितो Ś1 D1 2 4 10 11 महात्मा (for हनूमान्) ❀ Cm जगतिपतेरिति दीर्घाभाव आर्षः ।, So also Cr g k t ❀

Colophon —*Sarga name* Ś1 D2 4 11 हनुमद्विकल्प, Ñ2 V1 B D6 हनुमद्विचारण, V2 हनूमद्विचार, D1 3 सीतासंभाषणं प्रति हनुमच्चिंता(D3 °द्वितर्कौ), D10 लंकापर्वणि हनुमद्विकल्पो —*Sarga no* (figures, words or both) D1 2 4 10 11 om, Ś1 26, Ñ2 B1 2 D6 M2 29, V1 D5 7–9 T G M1 3 30, V2 20, B3 28 (as in text), B4 D3 31 —After colophon, D2 concludes with राम, G with श्रीरामाय नमः

## 29

Ñ1 illeg for Sarga 29 (cf v l 5 28 43) M2 begins with श्रीरामाय नमः

1 a) Ś1 V2 B4 D1 11 एतद्, B1 3 स तद् (for एवं) Ś1 D1 3 10 11 बहुविध चित्र, Ñ2 V B D2 4 6 बहुविचित्रार्थं (for °विधां चिन्तां) —b) T2 चिंतयानो, Ct as in text D2 3 11 स(D2 [अ]थ) वानर, D7 9 °मति (for महाकपि) Ś1 D1 4 10 चिंतयामास वानर —After 1ab, D1 3 4 ins

642* सुप्तासु तासु घोरासु राक्षसीषु महामति ।
[D1 प्रसुप्तासु च (for सुप्तासु तासु)]

—D4 cont

643* एवं बहुविध चित्र यावच्चिन्तयतीह स ।
तावदूर्ध्वं स्थिता सीता कण्ठ स्व बन्धयेद्दृढम् ।
स्ववेणीमेव चादाय भीता धैर्यविनाशने ।
राक्षसी शयिता प्रेक्ष्य मरणाय प्रतिष्ठिता ।
शाखा गृहीत्वा विविधा निबध्यात्मानमात्मना ।
उपवेष्टु कृतमतिर्हनुमाश्चकितोऽभवत् ।
उत्पत्य वायुवेगेन हनुमान्मारुतात्मज ।
अमोचयन्महाप्राज्ञो अदृश्य स्वेन कर्मणा ।
तत सा चकिता भीता केनेद कृतमन्तरा ।
दिश आलोक्य सुश्रोणी पुनर्वक्तु प्रचक्रमे ।
तत कपिवरो धीमान्पूर्णान्तरितविग्रह ।

[(l 8) Note hiatus between the two halves]

—c) Ś1 D10 प्रस्ताव, D1 2 सु(D2 स)श्राव, D3 M1 सश्रये, Cv m g t as in text (for सश्रवे) Ñ2 V B D6 शनैः स(Ñ2 V2 स, D6 सु)श्रवणे(Ñ2 D6 °ण)वाक्य ❀ Cv g सश्रवे सम्यक् श्रूयतेऽस्मिन्निति सश्रव समीपम् । (Cg समीपे व्याजहार । यद्वा "पाठ्ये गेये च मधुरम्" इति सश्रवे श्रवणे मधुरम् ।), So also Cr m t ❀ —d) Ñ2 V B D6 सीताया (for वैदेह्या) Ś1 D1 3 10 T2 स, Ñ2 V B1 2 4 D6 वै, G2 हा, M2 च (for ह)

2 b) Ś1 D11 वाजिना, D1 G3 -वाजिवान् Ñ2 V B D2 6 प्रभूतबलवाहन —Ś1 D10 11 transp cd and ef —d) Ñ2 V B D6 देव(B4 वेद [meta])दर्शी(B2 [marg. also] °शीलो), D7–9 इक्ष्वाकूणा, M1 3 प्राज्ञु(M3 ऋषि)-रासीन् (for ऋजुरासीन्) V2 B4 महातपा, B1 महाबल —After 2cd, M1 ins

अहिंसारतिरक्षुद्रो घृणी सत्यपराक्रमः ।
मुख्यश्चेक्ष्वाकुवंशस्य लक्ष्मीवाँल्लक्ष्मिवर्धनः ॥ ३

पार्थिवव्यञ्जनैर्युक्तः पृथुश्रीः पार्थिवर्षभः ।
पृथिव्यां चतुरन्तायां विश्रुतः सुखदः सुखी ॥ ४

तस्य पुत्रः प्रियो ज्येष्ठस्ताराधिपनिभाननः ।
रामो नाम विशेषज्ञः श्रेष्ठः सर्वधनुष्मताम् ॥ ५

रक्षिता स्वस्य वृत्तस्य स्वजनस्यापि रक्षिता ।
रक्षिता जीवलोकस्य धर्मस्य च परंतपः ॥ ६

तस्य सत्याभिसंधस्य वृद्धस्य वचनात्पितुः ।
सभार्यः सह च भ्रात्रा वीरः प्रव्रजितो वनम् ॥ ७

तेन तत्र महारण्ये मृगयां परिधावता ।
जनस्थानवधं श्रुत्वा हतौ च खरदूषणौ ।
ततस्त्वमर्षापहृता जानकी रावणेन तु ॥ ८ G 5 30 B 5 31 L 5 25

644* पितेव बन्धुर्लोकस्य सुरेश्वरसमद्युतिः ।

—M1 cont, while D5 T G M2 3 ins after $2^{cd}$, whereas D8 ins after 4

645* राजर्षीणां गुणश्रेष्ठस्तपसा चर्षिभिः समः ।

[ D8 गुरु- (for गुण ) M1 (with hiatus) ऋषिभि G2 द्योतितप्रभ (for चर्षिभि सम ) ]

—Ñ2 V B D1–4 6 7 9 om $2^{ef}$ D8 reads $2^{ef}$ (preceded by 645*) after 4

3 $^{a}$) Ñ2 V B D6 -रुचिर्, M2 -गतिर् (for रतिर्) D4 अक्रुद्ध (for अक्षुद्रो) —$^{b}$) Ñ2 V B D2 6 कांत, D4 क्षांति, T2 घृणि (for घृणी) Ś1 D10 सत्यपरायण, D2 °प्रतिस्रव (sic), D4 सर्वप्रतिश्रय —$^{c}$) Ñ2 V B D2 4 6 पुण्यस्य, D1 3 7–9 T1 G1 2 M2 Ct °स्य (for मुख्यश्च) D5 -वंश्यश्च (for वंशस्य) —$^{d}$) D1 प्रीतिवर्धन, D3 कीर्ति°, D11 शील° (for लक्ष्मि°) Ś1 D10 राज्य( D10 °ज )लक्ष्मीविवर्धन, Ñ2 V B D2 4 6 विश्रुत कीर्ति( D2 प्रीति )वर्धन ॐ Ct लक्ष्मिवर्धन इति ह्रस्व आर्ष ॐ

4 $^{a}$) G2 पार्थिवर्, Cr m g k t as in text (for पार्थिव-) Ñ2 V B1 2 4 D6 -व्यजनोपेत, B3 °न श्रीमान् (for °नैर्युक्त ) Ś1 D10 पृथिवींद्रो जनैर्युक्त —$^{b}$) M1 पार्थिवात्मज (for °वर्षभ ) Ñ2 V B D6 पृथु(B1 °थु ) श्री( B3 धी )मान्समाहित —$^{c}$) B3 चतुर्णार्याः, D2 4 6 11 G2 सागरान्तायां (for चतुरन्तायां) —$^{d}$) D1 सुरथ (for सुखद ) Ś1 सुधी (for सुखी) B3 कीर्तिवर्धन (for सुखद् सुखी) D2 4 विदित शुभ( D4 सुख )दर्शन —After 4, Ś1 Ñ2 D2–4 6 10 11 ins

646* धर्मशीलो वदान्यश्च प्रियवादी जितेन्द्रियः ।

[ D2 सत्य- (for धर्म-) Ñ2 D6 महातेजा (for वदान्यश्च ) D2 मितभाषी, D3 4 सत्य° (for प्रियवादी) ]

—After 4, D8 reads $2^{ef}$ (preceded by 645*)

5 $^{a}$) Ś1 D1 10 11 गुण-, B3 महाज्ञ् (for प्रियो). D4 11 M1 श्रेष्ठस् (for ज्येष्ठस्) —$^{b}$) Ś1 Ñ2 V B D1 2 6 10 तारापति- (for °धिप )

6 For 6, cf 1 1 $13^{ab}$ and 57* Ñ2 V B D6 transp $^{ab}$ and $^{cd}$ Ś1 D10 transp $^{a}$ and $^{c}$ —$^{a}$) D3 तस्य, D9 हास्य (for स्वस्य) Ś1 D1–4 10 वंशस्य, T1 3 G2 M3 धर्मस्य (for वृत्तस्य) Ñ2 D6 च स्ववृत्तस्य (for स्वस्य वृत्तस्य) —$^{b}$) V B D1–4 11 G2 M3 च, T G3 [अ]भि- (for [अ]पि) Ś1 D10 जनकस्य च (for स्वजनस्यापि) Ñ2 D6 विश्रुत कीर्तिवर्धन —$^{c}$) D4 om (hapl) रक्षिता D3 जीवलोकस्य सर्वस्य —$^{d}$) Ñ2 V B D6 परिरक्षिता (for च परंतप )

7 $^{a}$) Ñ2 V B D6 स च (for तस्य) —$^{b}$) D11 वृद्धस्याद्वचन पितु (sic) —$^{c}$) D6 सहभार्य (hypm ) Ś1 स सह, D1 च सह (by transp ) (for सह च ) B1 भ्राता च, B2 तद्भ्रात्रा (for च भ्रात्रा) D2 4 11 सहभार्यं सह भ्रात्रा —$^{d}$) Ñ2 V B D6 राम (for वीर ) D2 5 11 M Cg प्रव्राजितो ॐ Cg वनं प्रव्राजितः, गतः । स्वार्थे णिच् ॐ

8 $^{a}$) Ś1 Ñ2 V B D6 10 तत्र तस्य, D1–4 11 तस्य तत्र (for तेन तत्र) —$^{b}$) Ś1 Ñ2 V B D1–4 6 10 11 परिधावत, Cg t as in text —After $8^{ab}$, Ś1 Ñ2 V B D1–4 6 10 11 ins

647* रावणेन हृता भार्या मिथिलाधिपतेः सुता ।

[ Ñ2 V B1 2 4 D6 रक्षमाप( D6 °ण्य )हृता, B3 राक्षसाभिहृता (for रावणेन हृता ) ],

while D5 7–9 S ins after $8^{ab}$

648* राक्षसा निहताः शूरा बहवः कामरूपिणः ।

[ G3 transp निहता and बहव ]

—Before $8^{cd}$, Ś1 ($9^{ab}$ only) D1–4 10 11 read 9 —$^{c}$) Ś1 B2 4 D1 2 10 जनस्थाने, Cg t as in text (for °न-) D11 कृत्वा, G2 ज्ञात्वा, Ct as in text (for श्रुत्वा) —$^{d}$) Ñ2 D7 9 Ct निहतौ (for हतौ च ) D1 हतौ तौ च खरदूषणौ —$^{e}$) G1 [अ]मर्षात्प्रहृता, Cg t as in text —$^{f}$) G2 रावणेन तु जानकी (by transp ) —For $8^{ef}$, Ś1 Ñ2 V B D1–4 6 10 11 subst

649* तेनामर्षादिहानीता रावणेन दुरात्मना ।

[ Ś1 D1 2 4 10 11 त्वममर्षाद्, D3 त्वमनर्थाद् (for तेनामर्षाद्) ]

—Thereafter, all the above MSS cont

650* शृणु वैदेहि रामस्त्वां राजा कौशल्यमब्रवीत् ।
देवरश्चापि ते वीर कुशली देवि लक्ष्मण ।

G 5 30 0 P 5 31 14 L 5 25 10 यथारूपां यथावर्णां यथालक्ष्मीं विनिश्चिताम् ।
अश्रौषं राघवस्याहं सेयमासादिता मया ॥ ९
विररामैवमुक्त्वासौ वाचं वानरपुंगवः ।
जानकी चापि तच्छ्रुत्वा विस्मयं परमं गता ॥ १०
ततः सा वक्रकेशान्ता सुकेशी केशसंवृतम् ।
उन्नम्य वदनं भीरुः शिंशपावृक्षमैक्षत ॥ ११
सा तिर्यगूर्ध्वं च तथाप्यधस्ता-
न्निरीक्षमाणा तमचिन्त्यबुद्धिम् ।
ददर्श पिङ्गाधिपतेरमात्यं
वातात्मजं सूर्यमिवोदयस्थम् ॥ १२

इति श्रीरामायणे सुन्दरकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

---

[(l 1) V B दति (for शृणु) D4 ते राम (for रामस्त्वा) Ś1 D3 4 10 11 पति, B3 वाक्य, D1 2 प्रति (for राजा) D10 कुशलम् —Ś1 om l. 2 —(l 2) D1 शूर, D10 वाक्य (for वीर) D2 4 11 कुशल लक्ष्मणोऽब्रवीत्, D10 शूर कुशलमब्रवीत (for the post half) ]

—After 8, D5 7–9 S ins.

651* वञ्चयित्वा वने राम मृगरूपेण मायया ।
स मार्गमाणस्ता देवीं राम सीतामनिन्दिताम् ।
आससाद वने मित्र सुग्रीव नाम वानरम् ।
तत स वालिन हत्वा राम परपुरंजय ।
प्रायच्छत्कपिराज्य तत्सुग्रीवाय महाबल ।
सुग्रीवेणापि संदिष्टा हरय कामरूपिण ।
दिक्षु सर्वासु ता देवीं विचिन्वन्ति सहस्रश ।
अह सपातिवचनाच्छतयोजनमायतम् ।
तस्या हेतोर्विशालाक्ष्या सागर वेगवान्प्लुत ।

[(l 5) D7 G1 आयच्छत (for प्रा°) D7 8 तु, D9 om (subm ), G3 च (for तत्) D7–9 T2 महात्मने (for °बल ) —(l 6) D7–9 T2 M1 [अ]भि-, T1 च (for [अ]पि) —(l 7) D6 7 9 T2 विचिन्वन G3 ततस्तत (for सहस्रश ) —(l 9) T1 G1 2 M1 3 अस्या (for तस्या) D7–9 T1 समुद्र (for सागर) ]

9 Ñ2 V B D6 om 9 Ś1 (9^ab only) D1–4 10 11 read 9 before 8^cd —^a) D2 यथावर्णार् (sic) (for °रूपा) Ś1 D1 3 4 10 11 transp यथारूपा and यथावर्णां —^b) D11 च जीवता, T1 2 G1 M3 च निश्चिता (G1 °त), Cr as in text (for विनिश्चिताम्) Ś1 D1–4 7 9 10 G2 M2 Cv यथा लक्ष्मी (Ś1 D7 9 °क्ष्म)वतीं (D2 °ता) च ता (Ś1 D10 शुभा) ꣸ Cv यथारूपां यथावर्णां यथालक्ष्मीवतीं च तामिति पाठ ꣸ —^c) Ś1 D10 सा तथा दृष्टा, D1–3 11 सा त्वमद्यार्ये, D4 चापि सदीर्यात, T2 राघवेणाह (for राघवस्याह) —^d) Ś1 D1–4 10 11 दृष्टा मे (Ś1 D10 मया च)नात्र संशय

10 ^a) Ś1 D1,6 7 9 G1,3 M2 स, Ñ2 V B D2 3 6 8 10 M1 तु, T2 ता (for [अ]सौ) D4 11 उक्त्वाभि (for उक्त्वासौ) —^b) Ś1 Ñ2 V B D1–4 10 11 हनूमान्सा (Ś1 वचन सा, D1 निर्गतो सा, D2–4 10 11 स वचो सा)प्यन्ता सज —^c) T2 सा (for च) —^d) Ś1 Ñ2 V B D1–4 6 10 11 जहर्ष च ननन्द च

11 ^a) D5 तथा Ñ2 V B1 4 D6 सा चारु-, B2 3 सुचारु-, D3 सुवक्र- (for सा वक्र ) —^b) Ś1 V2 B1 3 D2 10 11 सवृता, D1 °ता, Ck t as in text (for -सवृतम्) V1 B2 क्रे (V1 कं)शस्वृत्तचेतना —^c) D1 उन्नाम्य, D10 तन्नम्य (sic) (for उन्नम्य) Ś1 D10 सीता, D1 सीता (for भीरु ) D4 उवाच वचन भीरु, M2 उन्नाम्य वदन भीरु —^d) D5 T शिशुपा- Ś1 Ñ2 V B D1–4 6 10 11 शिश (D1 2 4 6 11 °शि)पा स (Ñ2 V B D4 6 ता)मुदैक्षत, D7–9 शिंशुपामन्ववैक्षत —After 11, D5 7–9 S ins

652* निशम्य सीता वचनं कपेश्च
दिशश्च सर्वा प्रदिशश्च वीक्ष्य ।
स्वय प्रहर्षं परम जगाम
सर्वात्मना राममनुस्मरन्ती ।

[(l 1) G1 2 नद (for च) —(l 3) ꣸ Cr स्वय प्रहर्षमिति पाठ ꣸ ]

12 Ñ2 V B1–3 D6 om 12 —^ab) B4 समतिर्यग (sic) (for सा तिर्यग्) D2 4 हि (for च) D2 यथा (for तथा) Ś1 B4 D1 2 4 7 9–11 G1 ह्यधस्तान्; D2 ह्यवस्था (for [अ]प्यधस्तान्) D1–5 7 10 11 T2 M1 निरीक्ष्यमाणा T1 3 निरीक्षमाणा तथा ह्यवस्तात् Ś1 B4 D1 4 10 -रूप (for -बुद्धिम्) —^d) B4 D1 3 [उ]दयत (sic) (for [उ]दयस्थम्)

Colophon Ñ2 V B1–3 D1–4 6 om —*Sarga name* Ś1 B4 D10 11 हनुमद्दर्शन —*Sarga no* (figures, words or both) D10 11 om, Ś1 27, B4 32, D5 7–9 T G M1 3 31, M2 30 —After colophon, G concludes with श्रीरामाय नम

# ३०

ततः शाखान्तरे लीनं दृष्ट्वा चलितमानसा ।
सा ददर्श कपिं तत्र प्रश्रितं प्रियवादिनम् ॥ १
सा तु दृष्ट्वा हरिश्रेष्ठं विनीतवदुपस्थितम् ।
मैथिली चिन्तयामास स्वप्नोऽयमिति भामिनी ॥ २
सा तं समीक्ष्यैव भृशं विसंज्ञा
गतासुकल्पेव बभूव सीता ।
चिरेण संज्ञां प्रतिलभ्य चैव
विचिन्तयामास विशालनेत्रा ॥ ३
स्वप्नो मयायं विकृतोऽद्य दृष्टः
शाखामृगः शास्त्रगणैर्निषिद्धः ।
स्वस्त्यस्तु रामाय सलक्ष्मणाय
तथा पितुर्मे जनकस्य राज्ञः ॥ ४

G. 5 30 0
B 5 32 9
L 5 26 4

## 30

Ñ2 V B1-3 D1-4 6 continue the previous Sarga M2 begins with श्रीरामाय नम शुभमस्तु

1 Ñ1 illeg for 1-7 (cf v l 5 28 43) —$^b$) Ś1 Ñ2 V B D1-4 6 10 11 त्रस्ता (for दृष्ट्वा) B3 च स्मित, G3 चकित (for चलित-) D3 -लोचना, G2 -मानस, Cv r m g t as in text (for -मानसा) —After 1$^{ab}$, D5 7-9 S ins

653* वेष्टितार्जुनवस्त्रं त विद्युत्संघातपिङ्गलम् ।

—$^c$) Ñ2 V B D6 ददर्श प्रसृत (V2 B3 °श्रित, B1 2 [also] °सृता) सीता —$^d$) Ñ2 V B D6 वानर, D1 3 5 11 G1 प्रसृत (for प्रश्रित) B4 -दर्शन (for वादिनम्) —After 1, D5 7-9 S ins

654* फुल्लाशोकोत्कराभास तप्तचामीकरेक्षणम् ।

—T1 3 G2 M2 3 cont, D7-9 G1 3 M1 ins after 2$^{ab}$, T2 ins after 2

655* मैथिली चिन्तयामास विस्मय परम गता ।
अहो भीममिद रूप वानरस्य दुरासदम् ।
दुर्निरीक्ष्यमिति ज्ञात्वा पुनरेव मुमोह सा ।
विललाप भृश सीता करुण भयमोहिता ।
राम रामेति दु खार्ता लक्ष्मणेति च भामिनी । [5]
रुरोद बहुधा सीता मन्द मन्दस्वरा सती ।

[T2 om l 1.—(l 2) T2 इम (for इद) D7-9 सत्त्व, M1 सर्व (for रूप) ꣸ Ct वानरस्य । निर्धारणे षष्ठी । जात्यैकवचनम् ꣸ —(l 3) D7-9 G3 इद, Ct as above (for इति) D7 9 Ct मत्वा, Ck as above (for ज्ञात्वा) M2 मुमोह जनकात्मजा (for the post half) —After l 3, M2 ins

655 (A)* चिरेण सज्ञा सप्राप्य पुनरुत्थाय भामिनी ।

—After l 4, M2 ins

655 (B)* विचेष्टमाना पतिता भूतले शुभदर्शना ।
द्रुमस्य शाखामालम्ब्य रुरोद जनकात्मजा ।

—(l 5) M2 मत्वर (for भामिनी) —T2 om l 6 —(l 6) D7-9 सहसा (for बहुधा) D7 T3 G3 मद- (for मन्द) ]

—Thereafter, D7-9 G3 M1 repeat (var ) 2$^{ab}$

2 Ñ1 illeg for 2 (cf v l 1) D7-9 G3 M1 repeat 2$^{ab}$ after 655* —$^a$) Ñ2 B D6 च, V1 D8 T1 3 G2 3 M1 (D8 G3 first time, M1 both times) 3 त, V2 D5 7-9 (D7 9 both times, D8 second time) T2 G1 M2 [अ]थ (for तु) Ñ2 V B D6 7 9 (D7 9 second time) हरिवर, D10 कपि° (for हरिश्रेष्ठ) —$^b$) D2 3 उपस्थिता, D6 7 9 (D7 9 first time) G1 अव°, D7-9 (all second time) उपागत (for उपस्थितम्) —After 2$^{ab}$, D7-9 G1 5 M1 ins 655* —$^d$) D2 इव (for इति) Ñ2 V B D6 भाविनी, D1-3 11 विस्मिता (for भामिनी) —After 2, D4 reads 3$^d$–4$^a$ (transp ) —After 2, T2 ins 655* and then cont, while D5 7-9 T1 3 G M ins after 2

656* सा वीक्षमाणा पृथुभुग्नवक्त्र
शाखामृगेन्द्रस्य यथोक्तकारम् ।
ददर्श पिङ्गप्रवर महार्हं
वाता मज बुद्धिमता वरिष्ठम् ।

[(l 1) D6 7 9 Ct भग्न, Cg k as above (for -भुग्न-) —(l 2) T2 -[उ]क्तकारिण (for °कारम्) ꣸ Cr m g k t यथोक्तकारमाज्ञाकरम् (Cr °ज्ञाकारिणम्) (Ck t यद्वा यथोक्तवेष्टितार्जुनवस्त्राद्याकारम् । छान्दसो ह्रस्व ) ꣸ —(l 3) D6 कपीन्द्र G3 महास्य (for महार्हं) T1 3 G2 M3 ददर्श पिंगाधिपतेरमात्य ]

3 Ñ1 illeg for 3 (cf v l 1) —$^a$) B2 [अ]द्य (for त) D3 निरीक्ष्य (for समीक्ष्य) Ś1 D10 [अ]थ, D5 प्र- (for [ए]व) Ñ2 V B1-3 D6 विसज्ञकल्पा, D7 9 भृश विपन्ना, Cg t as in text (for भृश विसज्ञा) —$^b$) Ñ2 V B D6 विमूढचेताश्च, D1 मृता सुकन्येव, D3 गतासुवाल्येव (for गतासुकल्पेव) ꣸ Cg इवशब्दो वाक्यालकारे ꣸

☞ V1 illeg from 5 30 3$^c$ up to 5 33 80 —$^c$) Ś1 D1-3 10 11 चिरस्य, Cg as in text (for चिरेण) B4 D7-9 11 J 2 G3 चव, T1 3 चित्ते, G2 M3 भूयो (for चैव) D4 दृष्ट्वा तु सा तत्र हरिप्रवीर —D4 transp 3$^d$ and 4$^a$ and reads after 2 —$^d$) B3 विचित [illegible], T3 सा चितयामास D2 विशालनेना, T2 विशालनेत्री

4 Ñ1 illeg for 4 (cf v l 1) Ñ2 V2 B1 2 D6 om 4 D4 transp 3$^d$ and 4$^a$ and reads after 2

G. 5 30 16
B 5 32 10
L 5 26 5

स्वप्नोऽपि नायं न हि मेऽस्ति निद्रा
शोकेन दुःखेन च पीडितायाः ।
सुखं हि मे नास्ति यतोऽस्मि हीना
तेनेन्दुपूर्णप्रतिमाननेन ॥ ५

अहं हि तस्याद्य मनोभवेन
संपीडिता तद्गतसर्वभावा ।
विचिन्तयन्ती सततं तमेव
तथैव पश्यामि तथा शृणोमि ॥ ६

मनोरथः स्यादिति चिन्तयामि
तथापि बुद्ध्या च वितर्कयामि ।
किं कारणं तस्य हि नास्ति रूपं
सुव्यक्तरूपश्च वदत्ययं माम् ॥ ७

नमोऽस्तु वाचस्पतये सवज्रिणे
स्वयंभुवे चैव हुताशनाय ।
अनेन चोक्तं यदिदं ममाग्रतो
वनौकसा तच्च तथास्तु नान्यथा ॥ ८

इति श्रीरामायणे सुन्दरकाण्डे त्रिंशः सर्गः ॥ ३० ॥

—ᵃ) Ś1 D5 10 M1 3 Cg स्वप्ने मया, B4 स्वप्नोपमो, Ck t as in text (for स्वप्नो मया) D5 विकृते, M2 विहितो, Ck t as in text (for विकृतो) D1 विदृष्ट , D4 ग्रदृष्टो (for ऽद्य दृष्ट) —ᵇ) T2 -गुणैर् (for -गणैर्) Ś1 B3 4 D1–4 10 11 धिङ्मम भाग(D11 नाम)धेय (for शाखगणै-र्निषिद्ध) —ᵈ) Ś1 B3 4 D1–4 10 11 पित्रे त(D1 य)था मे जनकाय(D1 °धि) राज्ञे(Ś1 D10 °केश्वराय)

5 Ñ1 illeg for 5 (cf v l 1) —ᵃ) Ś1 तव, B3 D1 2 4 10 11 तु न, D7 9 T1 G1 M2 Ck t हि न, T3 न च, M3 [ऽ]पि वा, Cg as in text (for ऽपि न) B3 मम न, G1 न च मे, Cg as in text (for न हि मे) D10 [ऽ]द्य (for ऽस्ति) Ñ2 V2 B1 2 4 D6 स्वप्नो ममा(B4 °या)य शयिता न चास्मि(V2 B4 तु न च स्वपामि) —ᵇ) Ś1 Ñ2 V2 B D1–4 6 10.11 भयेन शोकेन (for शोकेन दुःखेन) Ñ2 V2 B1 2 4 D6 दह्यमाना, D10 पीडितासु (sic) (for पीडितायाः) —ᶜ) D10 च (for हि) D3 T2 यतो हि(T2 °तोम्ति [sic]) हीना, D5 7–9 T1 G2 यतो विहीना (for यतोऽस्मि हीना). Ñ2 V2 B1 2 4 D6 महात्मना धर्मम(B2 चाप्रति)मेन हीना —ᵈ) Ñ2 V2 B1 2 4 D6 [अ]हमिन्दु- (for [इ]न्दुपूर्ण-) Ś1 D2–4 10 11 तेनैव पूर्णेन्दुनिभाननेन, B3 ये नाहमिन्द्रप्रतिमेन तेन —After 5, D5 7–9 S ins

657* रामेति रामेति सदैव बुद्ध्या
विचिन्त्य वाचा ब्रुवती तमेव ।
तस्यानुरूपा च कथा तदर्था-
मेव प्रपश्यामि तथा शृणोमि ।

[Cf st 6 —(l 1) T3 G3 विचिंत्य, M1 तथैव, Cm g as above (for सदैव) —(l 2) T3 सदैव, G3 तथैव (for विचिन्त्य) —(l 3) D7 9 T1 G1 3 M3 [अ]नुरूप, Cv g as above (for °पा) D5 8 T2 3 M2 3 Cv m g तम(T2 °द)र्थम्, Cgp.t as above (for तदर्थाम्) —(l 4) T3 M1 तमे(M1 °थे)व, Cv m g as above (for एव प्र-) ❀ Cv तथा शृणोमीति सम्यक् पाठ ❀]

6 Ñ1 illeg for 6 (cf v l 1) —ᵃ) Ñ2 V2 B D6 [ए]व (for [अ]द्य) —ᵇ) Ñ2 B1 समीहिता, V2 B2 4 D2 4 6 समोहिता, D11 न मोहिता, T2 सुपीडिता (for संपीडिता) —ᶜ) Ñ2 B1 2 D6 स , V2 मा , B3 सु- (for वि-) Ś1 D11 एव (for एव) —ᵈ) Ś1 D10 रूप च, Ñ2 V2 B D6 ध्यानेन, D1 3 T2 G1 M1 तमेव, D2 त वे प्र-, D4 11 त्व(D11 त)चैव (for तथैव)

7 Ñ1 illeg for 7 (cf v l 1) —ᵃ) Ñ2 V2 B1 2 4 D6 मनोरथैश्चैव तु(V2 च) (for मनोरथः स्यादिति) —ᵇ) Ñ2 V2 B1 2 4 D6 तथैव, B3 नैवेति, D2 5 T2 G1 2 M1 2 तथा च(T2 G1 हि), Cv k t as in text (for तथापि) B2 युक्त्या, D11 विद्या (sic) (for बुद्ध्या) Ś1 D1 3 4 10 11 न वि-, Ñ2 V2 B D6 परि , D5 7–9 T1 M1 Ct [अ]पि वि-, Cv m g as in text (for च वि-). —ᶜ) Ñ2 V2 B1 2 D6 यत्र, B3 चेह, B4 तत्र (for तस्य) Ñ2 B1 D6 नाम (for नास्ति) —ᵈ) Ś1 B4 D10 व्यक्त स्व(B4 सु)रूप, Ñ2 D6 G3 सुव्यक्तरूप, B1 3 D4 व्यक्तस्वरूपश्, D1–3 11 व्यक्त सरूपश् (for सुव्यक्तरूपश्) D2 च (for माम्)

8 ᵃ) D4 च (for स-) Ñ2 V2 B D6 रुद्राय नमोस्तु (for वाचस्पतये स) —ᵇ) Ś1 Ñ1 D3 4 10 11 चापि, D1 2 वापि, T2 G3 दीप्त- (for चैव) G3 M2 3 Cg हुताशनाय च ❀ Cv.r हुताशनायेति सम्यक्। अन्यथा वृत्तभङ्ग (Cr °ङ्ग स्यात्) ❀ —ᶜ) Ś1 Ñ1 D10 यदि ते(D10 °दतो), D5 11 वचन (for यदिद) D4 10 ममाग्रे (for ममाग्रतो) Ñ2 V2 B D6 अनेन वाक्य(Ñ2 चोक्त) यदिहाद्य (B3 °दि सत्य-) कीर्तित —ᵈ) D3 वि- (for च) D4 मा (for न) Ñ2 V2 B1–3 D6 निखिल तथास्तु मे (B1 3 om मे), B4 निखिल ममास्तु (for च तथास्तु नान्यथा) —After 8, M2 ins

658* देवदेव नमस्कृत्य विष्णु जिष्णु जगत्पतिम् ।
तमेव शरण सीता जगाम जनकात्मजा ।
दु स्वप्नदोषनाशाय भयार्ता भयमोहिता ।
तमेव शरण विष्णु जगाम जनकात्मजा ।

## ३४

भूय एव महातेजा हनूमान्मारुतात्मजः ।
अब्रवीत्प्रश्रितं वाक्यं सीताप्रत्ययकारणात् ॥ १
वानरोऽहं महाभागे दूतो रामस्य धीमतः ।
रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम् ।
समाश्वसिहि भद्रं ते क्षीणदुःखफला ह्यसि ॥ २
गृहीत्वा प्रेक्षमाणा सा भर्तुः करविभूषणम् ।
भर्तारमिव संप्राप्ता जानकी मुदिताभवत् ॥ ३
चारु तद्वदनं तस्यास्ताम्रशुक्लायतेक्षणम् ।
बभूव प्रहर्षोदग्रं राहुमुक्त इवोडुराट् ॥ ४
ततः सा ह्रीमती बाला भर्तुः संदेशहर्षिता ।
परितुष्टा प्रियं श्रुत्वा प्राशंसत महाकपिम् ॥ ५ G 5 B 5 L. 5

Colophon —*Sarga name* Ś1 D1 3 4 10 हनुमद्वाक्य, Ñ1 सीतासभाषणे हनुमद्वाक्य, Ñ2 B3 D6 अंगुली( B3 °री )-यकसमर्पण, V B2 अगुली( B2 °री )यसमर्पण, B1 4 अगुरीयकदान, D2 दिग्विजये रामवर्णन, D11 सीतासभाषण —*Sarga no* ( figures, words or both ) Ñ1 D1 2 4 10 11 om , Ś1 Ñ2 B1 2 D6 32, V1 33, V2 23, B3 30, B4 D3 5 7–9 T G M1 3 35, M2 34 —After Colophon, G concludes with श्रीरामाय नम —After Sarga 33, Ś1 Ñ V B D1–4 6 10 11 ins a passage relegated to App I (No 7)

## 34

M2 begins with श्रीरामाय नम

1 V1 om 1–5 V2 B om $1–2^{b}$ Ñ1 illeg for $1^{a}$ —$^{a}$) Ś1 Ñ2 D1–4 6 10 11 भूय( Ś1 अन्य )श्चापि (for भूय एव) —$^{b}$) D5 7 9 T1 3 G1 M1 पवनात्मज —$^{c}$) Ñ1 प्रवृत, D1–4 6 M1 2 प्रसृत, Cv as in text (for प्रश्रित). —After 1, Ś1 Ñ1 (illeg from $67^{c}$ up to हि in $2^{e}$) D1–4 10 11 read 5 33 67–72 ( Ś1 D10 om 72 )

2 V1 om 2 , Ñ1 illeg up to हि in $2^{e}$ (for both, cf v l 1) Ś1 Ñ2 V2 B D1–4 6 10 11 om $2^{ab}$ (for V2 B, cf v l 1) —Ñ2 V2 B D6 read $2^{cd}$ (including star passages) after 5 33 75 (followed by 742*, B3 followed by 742* and 744*) —$^{c}$) B3 श्रीरामेण (for रामनाम ) D10 -[ आ ]कृत, Ck t as in text (for [ अ ]ङ्कित) B1 इद, D2 देवि (for चेद ) —$^{d}$) Ś1 D2 10 11 दिव्य पश्य, Ñ2 V2 B D6 प्रगृह्णाण, D1 3 त्व गृहाण, D4 प्रगृह्णीष्व (for पश्य देवि ) —After $2^{cd}$, Ñ2 V2 B3 4 ( Ñ2 V2 B4 om [ hapl ] ) D1–3 6 11 ins , while Ś1 B1 D10 ins before $2^{cd}$, whereas B2 cont after 755*, while D4 ins after 2

754* सुवर्णस्य सुवर्णस्य सुवर्णस्य च भामिनि ।
प्रेषित रामचन्द्रेण सुवर्णस्याङ्गुलीयकम् ।

[ (l 1) Ś1 च मैथिलि, B1 2 D6 11 च भाविनि, B3 [अ]गुलीयक (for च भामिनि ) D10 स्ववर्णस्य स्ववर्णस्य स्ववर्णस्यैव मैथिलि —(l 2) D1 4 रामभद्रेण, B3 D5 तव रामेण, D11 रामदेवेन (for रामचन्द्रेण ) B1 रामेण प्रहित देवि, B2 प्रहित रामभद्रेण, D2 6 रामेण प्रेषित भद्रे (for the prior half) D10 स्ववर्णस्य ] —B3 D6 cont , Ñ2 V2 B1 2 4 D5 7–9 S ins after $2^{cd}$

755* प्रत्ययार्थं तवानीत तेन दत्त महात्मना ।

[ Ñ2 V2 B D6 त्वदभिज्ञानहेतोर्हि (for the prior half) Ñ2 V2 B D6 दत्त तेन ( by transp. ) ]

—Ñ2 V2 B D6 om $2^{e}–5$ —$^{e}$) D8 समाश्वसि च (sic)

3 Ñ2 V B D6 om 3 (cf v l 1 and 2) —$^{ab}$) Ś1 D2 10 तद् , Ñ1 D4 11 त, D3 [ अ ]त्र (for सा) D7 9 11 विभूषित D1 गृहीत्वा प्रेषयामाणा तद्भर्तु करभूषणं (sic). —After $3^{ab}$, Ś1 Ñ1 D2–4 10 11 ins

756* मुमोच हर्षज वारि सव्रीडितमधोमुखी ।
तच्छ्रुत्वा मधुर वाक्य सीता रामगुणान्वितम् ।

—Then they all read 5 33 $77^{cd}$, D3 repeating l 2 of 756* and 5 33 $77^{cd}$ after 762* —$^{c}$) Ś1 D2 4 10 11 सप्राप्य, Ñ1 D1 3 7 9 T G2 Ct सप्राप्त, Cg as in text (for °प्राप्ता) —$^{d}$) D1 3 समभ्यत (for मुदिताभवत् )

4 Ñ2 V B D6 om 4 (cf v l 1 and 2) —$^{a}$) T2 तच्चारु वदन ( by transp ) —Ñ1 illeg for $4^{b}$ —$^{b}$) D1 -मुक्त , D3 -युक्त- (for -शुक्ल-) Ś1 D1 3 4 10 11 -[ अ ]सित- , D2 -सित- (for -[ आ ]यत- ) Ś1 D11 -[ ई ]क्षणा (sic) —$^{c}$) D7 9 T2 Ck t हर्षोदग्र( D9 °य ) च( T2 ◦ ) , T1 3 हर्षितोदग्र (for प्रहर्षोदग्र ) Ś1 D1–4 10 11 हर्षोदग्र( D1 2 °य, D11 ततो हर्षो) बभूवाथ, Ñ1 यथा राहुविनिर्मुक्ता, D8 M3 अशोभत विशालाक्ष्या ❀ Ck बभूव हर्षोदग्रमित्यत्र स्वरभक्ति पृथग्वर्णतया पद्यपूरणाय पाठ्या।, Ct 'बभूव हर्षोदग्र च' इति पाठ ❀ —Ñ1 illeg for $4^{d}$ —$^{d}$) D10 प्रस्त (for -मुक्त ) D11 इवोडुपान् (sic) (for इवोडुराट् ) D3 राहुमुक्तमिवेंदुराट् , D8 राहुमुक्तेंदुमटल

5 Ñ2 V B D6 om 5 (cf v l 1 and 2) —$^{b}$) D1 3 भर्त्रभिज्ञान- (for भर्तु सदेश ) Ś1 D10 भर्तृव्यसनकर्षिता, Ñ1 D2 4 11 भर्तु शोकेन कर्षि(D4 पीडि)ता —After $5^{ab}$, Ś1 Ñ1 (illeg ) D1–4 10 11 ins

757* रुदती शोकहर्षाभ्या मुदिता वाक्यमब्रवीत् ।

G 5 33. 21 B 5 36 7 L 5 32. 9 विक्रान्तस्त्वं समर्थस्त्वं प्राज्ञस्त्वं वानरोत्तम ।
येनेदं राक्षसपदं त्वयैकेन प्रधर्षितम् ॥ ६
शतयोजनविस्तीर्णः सागरो मकरालयः ।
विक्रमश्लाघनीयेन क्रमता गोष्पदीकृतः ॥ ७
न हि त्वां प्राकृतं मन्ये वानरं वानरर्षभ ।
यस्य ते नास्ति संत्रासो रावणान्नापि संभ्रमः ॥ ८
अर्हसे च कपिश्रेष्ठ मया समभिभाषितुम् ।
यद्यसि प्रेषितस्तेन रामेण विदितात्मना ॥ ९
प्रेषयिष्यति दुर्धर्षो रामो न ह्यपरीक्षितम् ।
पराक्रममविज्ञाय मत्सकाशं विशेषतः ॥ १०
दिष्ट्या च कुशली रामो धर्मात्मा धर्मवत्सलः ।
लक्ष्मणश्च महातेजाः सुमित्रानन्दवर्धनः ॥ ११
कुशली यदि काकुत्स्थः किं नु सागरमेखलाम् ।
महीं दहति कोपेन युगान्ताग्निरिवोत्थितः ॥ १२

---

[ Ś1 हर्षशोकाभ्यां (by transp ), D2 3 काम° (for शोक-हर्षाभ्यां) D1 3 जानकी, D2 हृष्यती, D4 11 हर्षिता, D11 हृषिता (for मुदिता) ]

—Thereafter, Ś1 Ñ1 (illeg for all except $45^{cd}$) D1–4 10 11 read 12, 13 and 45 (including star passages) —Ś1 Ñ1 D1–4 10 11 om $5^{cd}$ —$^{c}$) D5 7–9 T3 M2 3 Cv r m g t कृत्वा (for श्रुत्वा) —$^{d}$) D5 7 9 M3 प्रशशस

6 Before 6, Ś1 Ñ1 V1 (om $76^{cd}$) D1–4 10 11 read 5 33 $76–77^{ab}$ (including star passage), while Ñ2 V2 B D6 read 5 33 67–72 (V2 B om 67–72), $76^{ab}$ and $77^{ab}$ (including star passages) before 6 —$^{a}$) B3 महाप्राज्ञ , D1–3 G3 समर्थश्च (for समर्थस्त्व). —$^{b}$) Ñ2 V1 B1 2 4 D6 प्लवगर्षभ B3 समर्थो भव सर्वदा —$^{cd}$) G1 पुर (for -पद) Ś1 Ñ1 V2 D1 2 4 10 11 येनाय राक्षसा(D10 °सो) वासस्, Ñ2 V1 B1 2 4 D3 6 येनाय राक्षसावासस् (for $^{c}$) D10 मयेकेन (sic) Ś1 Ñ V B1 2 4 D1–4 6 10 11 प्रध(D2 °क)र्पित (for प्रधर्षितम्) B3 येनाह राक्षसारामे त्वयागत्य निवेदिता —After 6, B3 ins

758* अत पर महत्कार्यं क· करिष्यति शङ्कित ।

7 $^{a}$) D2 -विस्तीर्ण —$^{b}$) Ñ2 V B D6 च महोदधि (for मकरालय ) D2 सागर मकरालय —$^{c}$) Ñ2 V B (B2 m ) D6 विक्रमै (B2 also °मे), D4 विक्रम्य (for विक्रम-) —$^{d}$) B1 D5 11 क्रामता, Ck t as in text

8 $^{a}$) D6 त्वा —$^{b}$) D1 3 प्लवगोत्तम, D11 G3 वानरोत्तम —$^{c}$) Ñ2 V B D6 [ए]व (for [अ]स्ति) —$^{d}$) Ś1 Ñ1 D7–10 Ct अपि, Ñ2 V B1 3 D2 4 6 न च, B2 नैव, B4 च न, D5 नास्ति, T2 नाति- (for नापि) B2 सभव , D3 वि° (for सभ्रम )

9 $^{a}$) Ś1 B3 D1 3 10 अर्हसि, T2 हर्षसे (sic), Cr m g k t as in text (for अर्हसे) Ś1 Ñ2 V B3.4 D1 3.6 10 त्व (for च ) —$^{b}$) Ś1 Ñ V1 B1 3 4 D1–4 6 10 11 G3 M1 2 समभिभाषण —$^{c}$) Ś1 Ñ1 D10 11 परीक्ष्य, Ñ2 V B D6 यस्मात्त( B1 2 °त्स-), D2 8 G2 यदसि, D3 यदासि, D4 यदभि-, D5 M2 3 Cr.m g यद्यपि, Ck t as in text (for यद्यसि). ※ Cr अव्ययानामनेकार्थत्वादत्र यद्यपीति निपातसमुदायोऽवधारणे वर्तते।, so also Cg ※ —$^{d}$) B4 परमात्मना

10 $^{a}$) Ś1 Ñ2 V B D1 3 4 6 10 मेधावी (for दुर्धर्षो). —D10 om (hapl) from $10^{b}$ up to the prior half of l 1 of 759* —$^{b}$) Ś1 Ñ1 D1–4 11 न रामो (by transp ) V2 [अ]भ्युपवीक्षित्, D6 त्वपवीक्षित, D11 °क्षता (sic) (for ह्यपरीक्षितम्) —$^{c}$) D4 इति रामम् (sic) (for पराक्रमम्) B4 परिज्ञाय, D11 स विज्ञाय (for अवि°) —$^{d}$) Ñ2 V B D6 मत्समीप(D6 °पे) —After 10, Ś1 Ñ V2 D1–4 6 10 11 ins

759* अविन्ध्यो नाम मेधावी राक्षसो वृद्धसमत ।
तद्वाक्यादवगच्छामि रामसुग्रीवयोरहम् ।
सख्यं वालिवध चैव सुग्रीवैश्वर्यमेव च ।
कपिराघवसबन्धात्त्वा च दूतमवैम्यहम् ।

[ (l 1) D10 om the prior half Ś1 वृद्धसमत ; Ñ1 D1 वृद्ध(Ñ1 ** [ illeg ])सत्तम , Ñ2 दृढसमत , V2 ** समत .—(l 2 ) Ś1 D10 अधि-, V2 अभि-, D3 उप- (for अव-) D2 तद्वाक्येनाभिजानामि (for the prior half). —(l 3) D1 -वधात्त ह (for -वध चैव) —Ñ2 D6 om l 4 —(l 4) Ś1 D10 कपे, Ñ1 हरि- (for कपि-) D1 2 -सबाधात्, D11 -सबध (for सबन्धात्) ]

11 $^{a}$) Ś1 D3 8 10 T2 G2 3 M1 स, D2 4 11 तु (for च) —$^{b}$) Ñ2 D6 धर्मज्ञो (for धर्मात्मा) D7 9 M3 सत्यसगर , D8 T G M1 2 सत्यवत्सल —$^{d}$) V B D6 G M1 2 सुमित्रानदि- —After 11, Ś1 Ñ1 D1 (preceded by 769*) 2–4 10 11 read $22^{cd}$

12 Ñ2 V B D6 om 12–13 Ś1 Ñ1 (illeg ) D1–4 10 11 read 12, 13 and 45 after $5^{ab}$ (preceded by 757*).—$^{a}$) D10 कुशले (sic) —$^{b}$) Ś1 D1–4.10 11 Cg p t न, Cr g k as in text (for नु) ※ Cr कुशली यदि काकुत्स्थ किं नु सागरमेखलामिति पाठ . ※ —$^{c}$) Ś1 D1–4 10 11 लका, Cg.k t as in text (for महीं) —$^{d}$) D9 reads from न्ता up to त in marg

अथवा शक्तिमन्तौ तौ सुराणामपि निग्रहे ।
ममैव तु न दुःखानामस्ति मन्ये विपर्ययः ॥ १३
कच्चिन्न व्यथते रामः कच्चिन्न परितप्यते ।
उत्तराणि च कार्याणि कुरुते पुरुषोत्तमः ॥ १४
कच्चिन्न दीनः संभ्रान्तः कार्येषु च न मुह्यति ।
कच्चित्पुरुषकार्याणि कुरुते नृपतेः सुतः ॥ १५
द्विविधं त्रिविधोपायमुपायमपि सेवते ।
विजिगीषुः सुहृत्कच्चिन्मित्रेषु च परंतपः ॥ १६
कच्चिन्मित्राणि लभते मित्रैश्चाप्यभिगम्यते ।
कच्चित्कल्याणमित्रश्च मित्रैश्चापि पुरस्कृतः ॥ १७

G 5 3 B 5 - L 5

13 Ñ2 V B D6 om 13, Ñ1 illeg for 13 (for both, cf v l 12) For sequence in Ś1 Ñ1 D1–4 10 11, cf v l 12 —[a]) M2 इदानीं, Cv r g k t as in text (for अथवा) D1 3 शक्तियुक्तौ, D11 किश्यमतौ (sic) (for शक्तिमन्तौ) ❀ Cv अथवेत्यादि। अथातोऽनन्तराप्यर्थे-विकल्पारम्भमङ्गल इति वचनादत्र अथशब्द इदानीमप्यर्थे वर्तते।, Cr अथ वेति। अथाप्यर्थे ❀ —[c]) D1 3 नास्ति, D2 तु खु, D4 नून, D5 G1 न तु (by transp), T1 3 हि न —[d]) D1 3 मन्येद्यापि, D5 नास्ति मन्ये (for अस्ति मन्ये). —After 13, D1 3 ins

760* तच्छ्रुत्वा हनुमांस्तस्या जानक्या परिदेवितम्।

—D1 cont

761* उवाच शान्तया वाचा कुशल राघवस्य च।
निशम्य वाक्य जनकात्मजा सा,

while D3 cont after 760*

762* भूयश्चापि महातेजा जानकीं पर्यसान्त्वयत्।
शोकोऽय त्यज्यता भीरु कल्याण समुपस्थितम्।
राघव स महाबाहु क्षिप्र त्वा प्रतिपत्स्यते।
सभ्रातृबान्धव हत्वा रावण राक्षसाधिपम्।
निर्वैर स हि धर्मात्मा निहते राक्षसेर्विभु। [5]
त्वा ग्रहीष्यति काकुत्स्थो नष्टा वेदश्रुतीमिव।

—Thereafter, D3 repeats l 2 of 756* and 5 33 77[cd]. —After 13, D4 ins

763* नष्टा यथा विश्वसृजा च सृष्टि
पुन प्रमोदं भजते त्वभीक्ष्णम्।
तथैव श्रुत्वा जनकात्मजा ता
रामस्य वार्ता प्रमुमोद देवी।

14 [a]) D2 क्वचिन् (for कच्चिन्) D3 कच्चित् (for राम). —[b]) D2 10 क्वचिन् —[c]) D10 11 तु (for च) —[d]) D1 पुरुषर्षभ, G3 नृपते सुत

15 [a]) D2 क्वचिन् Ñ2 V B3 4 वीरो न, B1 2 दीनो न (by transp), D6 धीरो न (for न दीन) —[b]) Ś1 Ñ V1 B1 3 D10 न विमुह्यति (V1 B1.3 °ते), V2 न च विद्यते, B2 4 D1 2 6 न च (B2 परि, D1 स न, D2 [अ]पि न, D6 न) मुह्यति (D6 °ते) (for च न मुह्यति) —After 15[ab], D10 ins 769* —Ś1 D10 read 15[cd] after 22 —[c]) D1 किंचित् Ś1 Ñ1 D10 पुरुषकार च (Ñ1 स), D1–4 11 °कारेण, Cg k t as in text —[d]) Ś1 Ñ V B D1–4 6 10 11 पार्थिवात्मज (for नृपते सुत).

16 [a]) Ñ1 D2 त्रिविध (Ñ1 °धम्), B2 D3 11 Cr विविध (for द्विविध) D2 -[उ]पाय, D4 -[उ]पेयम् (for -[उ]पायम्) —[b]) D3 उपेयम् (for उपायम्) Ś1 Ñ V B D1 3 4 6 10 11 कश्चि (B D1 3 6 11 °च्चि) दास्थित, D5 T2 उपसेवते, Cv as in text (for अपि सेवते) D2 सोपाय समुपस्थित —[c]) Ñ1 जिगीषुश्च Ñ1 D4 प्रकृ (Ñ1 °हृ) दश्च, D1–3 10 11 च हृ (D1 10 द) दश्च, D6 G2 सुहृत्कश्चिन् (for सुहृत्कच्चिन्) —[d]) Ñ1 D1 3 4 10 11 न च दैव (D10 दोष) परायण (Ñ1 °पर कचित), D2 कश्चित्कर्मणि चोदित ❀ Cm सुहृत्परंतपो रामो विजिगीषु सन्निविधोपाय सामदानभेदरूपमुपायम्। उपायमपि दण्डोपायमपि। मित्रेषु चकारादमित्रेषु च द्विविध यथा भवति तथा सेवते कच्चित्। मित्रेषु सामदाने, अमित्रेषु भेददण्डौ चेत्येव विभज्य प्रयुङ्क्ते कच्चित्।, Ck विजिगीषुसुहृत्कच्चित् "बहुव्रीहिस्तत्पुरुषश्च" ❀ —For 16[cd], Ś1 Ñ2 V B D6 subst, while Ñ1 ins after 19, whereas D1 3 4 10 11 ins after 16[ab]

764* अविरागी च धृष्टश्च कच्चित्कर्मणि चोदित।

[Ś1 D10 अविनाशी, Ñ1 अभिमानी, D1 4 अतिरागी D11 न धृष्णुश्च (for च धृष्टश्च) B3 अतीवासीच तुष्टश्च (for the prior half) Ñ1 B4 D4 10 कश्चित, D1 कचित् D3 कर्मसु (for कर्मणि) Ś1 D10 चोच्छ्रित, Ñ1 चोदित, B3 चेष्टते, D1 चाश्रित ] —Thereafter, Ñ1 (partly illeg) cont

765* कच्चिच्च कपिशार्दूल स्थितामत्र सुदुःखिताम्।
* * * * * * * * * जानकीं रघुनन्दन।

—Ñ1 further cont l 6 of 768*

—After 764*, Ñ2 V B D6 cont, while Ñ1 D1–4 10 ins after 16

766* यस्तु नारभते कर्म नरो दैवपरायण।
क्षिप्र भवति निर्द्रव्य पलायनपरायण।

[Ñ1 transp l 1 and 2 —(l 1) Ñ1 नाचरते Ñ1 D1–4 किंचिन् (for कर्म) —(l 2) D1 नद्रव्य (for निद्रव्य) ]

17 Ś1 om (hapl) 17[ab]. —[a]) D1 क्वचिन् Ñ2 V B D6 भजते (for लभते) —[b]) Ñ2 V B D6 चाप्यधि- (Ñ2 V1 °भि-), D2–4 10 11 M1 चाप्यु (D11 °भ्यु) प, T1 3 चाप्यधि-, Cm g k t as in text (for चाप्यभि-) D1 मित्रैश्चाभ्युदय लभेत् —[c]) D1 क्वचित् Ś1 Ñ1 D2 10 11 -मित्रश्च, Ñ2 V1 B1–3 D6 -वृत्त (Ñ2 D6 °त्ति) श्च, D1 -मित्रस्य;

G. 5 33 32 B 5 36 19 L. 5 32 23 कच्चिदाशास्ति देवानां प्रसादं पार्थिवात्मजः ।
कच्चित्पुरुषकारं च दैवं च प्रतिपद्यते ॥ १८
कच्चिन्न विगतस्नेहो विवासान्मयि राघवः ।
कच्चिन्मां व्यसनादस्मान्मोक्षयिष्यति वानर ॥ १९
सुखानामुचितो नित्यमसुखानामनूचितः ।
दुःखमुत्तरमासाद्य कच्चिद्रामो न सीदति ॥ २०
कौसल्यायास्तथा कच्चित्सुमित्रायास्तथैव च ।
अभीक्ष्णं श्रूयते कच्चित्कुशलं भरतस्य च ॥ २१
मन्निमित्तेन मानार्हः कच्चिच्छोकेन राघवः ।
कच्चिन्नान्यमना रामः कच्चिन्मां तारयिष्यति ॥ २२

---

Cr m g k t as in text (for -मिश्रश्च) —$^{d}$) Ñ2 V2 B D6 मित्रैर् (V2 °श्चा) पि च सत्कृत

18 $^{a}$) D1 किंचिन् (for कच्चिद्) Ñ1 आशास्ते, D1 नाशास्ति Ñ2 V B1-3 D6 देवाना कच्चिदाशास्ते, B4 देवानाराध्य चामाद्य. ※ Cr आशास्तीति परस्मैपदमार्षम् ।, Cm g k t आशास्ति आशास्ते (Ck t प्रार्थयत इत्यर्थ) ※ —D11 om (hapl) 18$^{c}$–19$^{b}$ D7 reads 18$^{cd}$ in marg —$^{c}$) D1 किंचित् (for कच्चित्) D2 वै (for च) —$^{d}$) D4 6 दैवत (D6 °वं) (for दैवं च) T2 दैवतं च प्रपद्यते

19 D11 om 19$^{ab}$ (cf v l 18) —$^{a}$) D1 कच्चित् B3 [अ]विगत, G2 विदित- (for विगत-). —$^{b}$) M3 प्रवासान् (for वि°) D1-4 10 मे नरर्षभ (for मयि राघव) Ś1 विवसन्मेदिनीपति, Ñ V B D6 विप्रवासान्नरर्षभ —Ñ2 V B read 19$^{cd}$ for the first time here, repeating it after l 5 of 768* —$^{c}$) Ñ2 V B D6 (Ñ2 V B1 2 4 both times, B3 first time) अपि, B3 (second time) कच (for कच्चिन्) M1 मा (for मां) D3 तस्मात् (for अस्मात्). —$^{d}$) D7-9 M1 राघव (for वानर) Ś1 Ñ V B D1 4 6 10 (Ñ2 V B both times) सुघोरादुद्धरिष्यति, D2 3 सुघोरात्तारयिष्यति, D11 सुघोरान्मोचयिष्यति —After 19, Ñ1 ins 764*, followed by 765* and l 6 of 768*, while D4 ins l 6 of 768* after 19

20 Ś1 D10 om 20 B3 om 20$^{ab}$ —$^{b}$) Ñ2 V B1 2 D1 3 4 6 11 च नोचित, B4 ह्यहोचित (sic), D2 तु नोचित, T1 3 M2 3 Cv r m अनोचित, T2 अकोविद, Cg k t as in text (for अनूचित) ※ Cv r m अनुचित एवानोचित (Cv प्रज्ञादिभ्यश्चेति स्वार्थेऽण्प्रत्यय) ।, Cg अनूचित इति दीर्घ आर्ष ।, so also Ck t ※ —$^{c}$) Ñ2 V1 B D1-4 6 11 उत्तमम् (for उत्तरम्) —$^{d}$) D5 कच्चिद्. Ñ1 D1 2 4 11 शोचति, D3 मुह्यति (for सीदति) —After 20, B3 ins 768*

21 B3 om 21-22, Ñ2 V B1 2 4 D6 om 21 Ś1 D1-4 10 11 read 21 and 23-26 after 29 (including star passages) —$^{a}$) Ś1 Ñ1 D1-4 10 11 देव्या (for कच्चित्) —$^{b}$) Ś1 Ñ1 D1-4 10 11 कच्चित्सह सुमित्रया —$^{c}$) D1-4 10 11 तत्र (for कच्चित्) —After 21, Ś1 D1-4 10 11 ins

767* कच्चिद्रक्षेत कौसल्या सुमित्रा चाप्यनामयम् ।
कच्चिद्धर्मेण शासन्त स्तुवन्ति भरत नराः ।

[D7 om (hapl) l 1 —(l 1) Ś1 D10 शृणोति (for श्रूयेत) D2 4 वा (for च) D2-4 11 [अ]नामया (for [अ]नामयम्) —(l 2) Ś1 D1 10 प्रजा, D3 जना (for नरा)]

22 B3 om 22 (cf v l 21) —$^{a}$) Ś1 Ñ V B1 2 4 D1-4 6 10 11 -निमित्तं च (D2 हि), Cv as in text (for -निमित्तेन) —$^{b}$) Ś1 Ñ1 D4 11 तापेन, Ñ2 V B1 2 4 D1 3 6 वानर, G1 3 शोचेन, Cv r m t as in text (for शोकेन) D2 कच्चिद्वानर, D10 कच्चित्तापेन —After 22$^{ab}$, Ś1 Ñ V B (B3 after 20 [owing to om]) D1-4 6 10 11 ins

768* अल्पमायास्यते वीर सोऽद्य भूमिपते सुत ।
यदि जीवति काकुत्स्थ किमर्थं रावणालयम् ।
न निर्दहति कोपेन युगान्ते पावको यथा ।
किमर्थं मर्षयति मा रिपुसस्थामरिंदम ।
न रावणविनाशाय प्रयत्नमुपतिष्ठति ।
धक्ष्यते सायकैश्चेमा त्वयि प्रतिगते पुरीम् ।
कच्चित्स नाथो मम राजपुत्र
सर्वस्य लोकस्य च धर्मनाथ ।
मा वीरनाथा बलवद्गृहीता-
मनाथवत्ता प्रति चिन्तयान ।

[Ś1 B3 om l 1 —(l 1) B1 4 अन्यम् (for अल्पम्). Ñ2 D6 आतप्यते, B1 आशास्यते, B4 आश्रयते (for आयास्यते) Ñ2 V B1 2 4 D6 रामो (for वीर) D4 मद्यो (for सोऽद्य) Ñ2 V B1 2 4 D6 विदेशे नृपते सुत (for the post half) —(l 2) D3 राक्षसालय (for रावणालयम्) —(l 3) D2 4 ज्वलनो (for पावको) Ś1 D1 3 10 11 युगा (Ś1 वना) ना (D1 लकाम) मिरिवोत्थित, Ñ1 युगाग्निरिव वोत्थित (for the post half) —D6 om (hapl ?) from the post half of l 4 up to the prior half of l 6 —(l 4) B3 मर्षते मा च, B4 मर्षति श्रीमान्, D11 मर्षयिष्यति (sic) (for मर्षयति मा) Ñ V1 अरि- (for रिपु-) D11 -स्थानम् (for सस्थाम्) Ñ2 V B3 अमर्षण B1 2 4 अरिमस्थानमर्षण (for the post half) —(l 5) D1 स (for न) Ñ V B1 2 4 D3 4 अनुतिष्ठति, D2 उपतिष्ठते —After l 5, Ñ2 V B repeat 19$^{cd}$ —Ś1 D1-3 10 11 om l 6 Ñ1 cont l 6 after 765*, while D4 ins l 6 after 19. —(l 6) D4 [ए]व (for [इ]मा) Ñ1 च शरैर्लङ्का (for सायकैश्चेमा). Ñ1 illeg ; D4 -गते पुन (for -गते पुरीम्) —(l 7) D2

कच्चिदक्षौहिणीं भीमां भरतो भ्रातृवत्सलः ।
ध्वजिनीं मन्त्रिभिर्गुप्तां प्रेषयिष्यति मत्कृते ॥ २३
वानराधिपतिः श्रीमान्सुग्रीवः कच्चिदेष्यति ।
मत्कृते हरिभिर्वीरैर्वृतो दन्तनखायुधैः ॥ २४
कच्चिच्च लक्ष्मणः शूरः सुमित्रानन्दवर्धनः ।
अस्त्रविच्छरजालेन राक्षसान्विधमिष्यति ॥ २५

रौद्रेण कच्चिदस्त्रेण रामेण निहतं रणे ।
द्रक्ष्याम्यल्पेन कालेन रावणं ससुहृज्जनम् ॥ २६
कच्चिन्न तद्धेमसमानवर्णं
तस्याननं पद्मसमानगन्धि ।
मया विना शुष्यति शोकदीनं
जलक्षये पद्ममिवातपेन ॥ २७

G 5 .
B 5 .
L 5 .

न ( for स ) —(l 8) V2 स सर्व- ( for सर्वस्य ) Ś1 B4 D10 लोकनाथ , D3 धर्मवाट ( for धर्मनाथ ) —B4 om ( hapl ? [ see var ] ) from l 9 up to 774* —(l 9) Ñ1 मार्गमाणो, Ñ2 D6 चाप्यनाथा, D3 न्याय्यमानो, D11 नाथमानो ( for वीरनाथां ) Ñ2 V B1–3 D6 वलिना ( for वलवद्- ) —(l 10) Ś1 D10 वत्स्यति, Ñ1 शुष्यति, Ñ2 D6 तप्यति, V1 तामति , V2 B3 तां परि-, D1 11 ताम्यति, D2 नावति, D4 नास्वति ( sic ) ( for ता प्रति ) D1 11 शोकयुक्त ( D11 °दीना ) ( for चिन्तयान ) D3 नानाथवत्ताम्यति शोकदीन ]

—Ñ2 V B1 3 D6 om $22^{cd}$ Ś1 Ñ1 D1–4 10 11 read $22^{cd}$ after 11 ( including star passage ) —$^{c}$ ) D2 कचिन् D1 [ अ ]न्यमतो ( sic ) —$^{d}$ ) D2 कचिन् D10 मा ( for मा ) —After 22, Ś1 D10 read $15^{cd}$ —After 22, Ñ1 D2–4 11 ins , while D1 ins after 11, whereas D10 ins after $15^{ab}$

769* कच्चिच्छोक्षा इवोग्रेण भारेण व्यवसीदति ।

[ D2 कचिन् . D1 3 कच्चिद्दक्षवघो( D1 °दुःखेन चो )ग्रेण ( for the prior half ) D10 परिपीडिता , D11 श्रव° ( for व्यवसीदति ) Ñ1 महता भारेण सीदति ( hypm ) ( for the post half ) ]

23 For sequence in Ś1 D1–4 10 11, cf v l. 21 Ñ2 V B D6 read 23–26 after 29 ( including star passages ) Ñ1 illeg for 23–26 —$^{a}$ ) Ś1 D10 अक्षौहिणीयुक्तो( D10 °क्त [ sic ] ), Ñ2 V B D4 6 अक्षौहिणी भीमा, D2 अक्षोहिणीं दीना, D3 अक्षौहिणीभर्ता, T1 3 G2 3 अक्षौहिणीं पूर्णां —$^{b}$ ) Ś1 D1–4 10 11 वा( D4 चा )प्यम ( D1 °ह )र्पित ( for भ्रातृवत्सल ) Ñ2 V B D6 भरतस्य महात्मन —$^{c}$ ) D5 युक्ता ( for गुप्ता ) Ś1 D1–4 10 11 ध्वजिन्या मन्त्रिभिर्गुप्त , Ñ2 V B D6 ध्वजिनी मन्त्रिभिर्गुप्ता —$^{d}$ ) Ś1 Ñ2 V B D1–4 6 10 11 क्षिप्रमेष्यति ( for प्रेषयिष्यति )

24 For sequence in Ś1 Ñ2 V B D1–4 6 10 11, cf v l 21 and 23 Ñ1 illeg for 24 ( cf v l 23 ) —$^{a}$ ) Ś1 Ñ2 D1–4 6 10 11 वानराणां पति —D11 om ( hapl ? ) $24^{b}$–$25^{a}$. —$^{b}$ ) D1 एष्यते —$^{c}$ ) Ś1 Ñ2 D1 2 4 6 10 सार्धं, D3 साक ( for वीरैर् ) —For 24, V B subst , while Ñ2 D6 ins after 24

770* कच्चिदेहागमिष्यन्ति वानरा भीमविक्रमा ।

25 For sequence in Ś1 Ñ2 V B D1–4 6 10 11, cf v l 21 and 23 Ñ1 illeg for 25 ( cf v l 23 ) D11 om $25^{a}$ ( cf v l 24 ) Ś1 om $25^{ab}$ —$^{a}$ ) V B D1–4 10 स, D6 om ( hapl ) ( for च ) Ñ2 V B D1–4 6 10 श्रीमान् ( for शूर ) —$^{b}$ ) Ñ2 V1 B D6 G M1 2 -[ आ ]नन्दिवर्धन —D9 reads from वि in °up to $^{d}$ in marg —$^{d}$ ) Ś1 D1–4 10 11 रक्षांसि प्रमथि( Ś1 D10 शमयि )ष्यति, Ñ2 V B D6 प्रमथि( B3 वारयि )ष्यति राक्षसान्

26 For sequence in Ś1 Ñ2 V B D1–4 6 10 11, cf v l 21 and 23 Ñ1 illeg for 26 ( cf v l 23 ) —$^{a}$ ) Ñ2 V B D6 परमास्त्रेण, D1 कच्चिदस्त्रेण —$^{b}$ ) M3 ज्वलता ( for रामेण ) Ś1 D1–4 10 11 युधि ( for रणे ) —$^{d}$ ) M2 राक्षस ( for रावण ) M1 सु- ( for स- ) T2 G3 -गणं ( for -जनम् ) —For $26^{cd}$, Ś1 D1–4 10 11 subst

771* द्रक्ष्यामि रावण क्षुद्र पतित रणमूर्धनि ।

[ D2 3 क्रुद्ध ( for क्षुद्र ) Ś1 D10 मगग ( for पतित ) ]

—They all cont

772* कच्चिद्रामो महाबाहु शोकेन महता वृत ।
अपक्ष पक्षवान्व्योम विहग इव चोत्पतेत ।

[ (l 1) D4 क्षुत ( for वृत ) —(l 2) D2 कचिदाकाशे ( for पक्षवान्व्योम ). D2 चासदत् , D3 नाशयन् ( sic ) ( for चोत्पतेत् ). D1 अपक्ष पक्षवद्व्योम विहगम इवासदत् ]

—After 26, V2 B read an addl colophon ( see var below at st 30 )

27 B4 om 27 ( cf v l 22 ) —$^{a}$ ) Ñ1 न सोमस्य, Ñ2 V B1–3 D1–3 6 10 11 न( D6 स, D11 च ) तत्सोम , D4 तत सोम- ( for न तद्धेम- ) Ñ1 -कांतिं, Ñ2 V B1–3 D6 -कांत ( for -वर्णं ) ꣼ Cv शुद्धजाम्बूनदमिति कृत्वा श्याम रामानन हेमसमानवर्णमित्युच्यते ꣼ —$^{b}$ ) B3 सोम- ( for पद्म- ) B2 -पलाश- ( for -समान- ) Ś1 D10 -गाध ( for -गन्धि ) —$^{c}$ ) Ñ1 -तप्त ( for -दीन ) —$^{d}$ ) Ś1 Ñ1 D1–4 10 11 जलाल्पये —For $27^{cd}$, Ñ2 V B1–3 D6 subst ·

773* शश्वच्छुभ शुष्यति मत्प्रणाशा-
च्चन्द्रो यथा वै क्षयणीयपक्षे ।

[ (l 1) B3 द्रुत ( for शुभ ) V2 B3 पश्यति ( for शुष्यति ) ]

G. 5 33 41
B. 5 36 29
L. 5 32 31

धर्मापदेशात्त्यजतश्च राज्यं
मां चाप्यरण्यं नयतः पदातिम् ।
नासीद्व्यथा यस्य न भीर्न शोकः
कच्चित्स धैर्यं हृदये करोति ॥ २८
न चास्य माता न पिता न चान्यः
स्नेहाद्विशिष्टोऽस्ति मया समो वा ।
तावद्ध्यहं दूत जिजीविषेयं
यावत्प्रवृत्तिं शृणुयां प्रियस्य ॥ २९
इतीव देवी वचनं महार्थं
तं वानरेन्द्रं मधुरार्थमुक्त्वा ।
श्रोतुं पुनस्तस्य वचोऽभिरामं
रामार्थयुक्तं विरराम रामा ॥ ३०

---

28 Ś1 B4 D10 om 28 (for B4, cf v l 22) —a) B1-3 D1-4 6 11 धर्मोपदेशान Ñ2 V2 B1-3 D4 7 9 स्वराज्य (for च राज्य) —b) V2 [अ]वश्य, D2 [अ]रण्यान (for [अ]रण्य) Ñ V B1-3 D1-9 11 T1 पदाते (for पदातिम्). —c) Ñ1 B2 आसीद्, M3 नास्ति (for नासीद्) Ñ V B1 2 D1-3 6 7 T1 3 M2 व्यथा (for व्यथा) D1-4 11 तस्य, M1 वास्य (for यस्य) V2 कच्चित् (for शोक·) —d) T1 3 G2 M3 च (for स) V1 B1-3 D6 वहते तथैं (B1 सदैं)व (for हृदये करोति) Ñ1 D1-4 11 कच्चित्तु (Ñ1 °त्स, D1 °न्न, D2 न कच्चिद्, D3 °च) धैर्याद्रि (Ñ1 D4 11 °र्यं भ्रि)यते यथावत्, V2 स नीतिकार्यं वहते तथैव

29 B4 om up to लोकनाथ (see var) in l 4 of 774* (cf v l 22) —a) Ñ V2 D1 2 4 6 11 तस्य, D3 ह्यस्य (for चास्य). D2 M5 च नान्य (by transp), D5 न चास्य, G2 च मान्य (for न चान्य) —D11 om. (hapl) 29b —b) D5 विसृष्टो (for विशिष्टो) —For 29ab, Ś1 V1 B1-3 D10 subst, while Ñ2 D1-4 6 11 (after 29a) ins after 29ab, whereas V2 subst for 29cd

774* स्नेहादमर्षाच्च सम निमित्ता-
न्न व्याधिमृच्छत्यमराधिपाभ· ।
श्रुत्वा त्वनौ मामिह वर्तमाना
विनंक्ष्यते कच्चिददीर्घकालम् ।

[Ś1 V1 B1-3 D10 om l 1-2 —(l 1) Ñ2 D6 च वीर्याच्च (for अमर्षाच्च) D4 नितातान्, D6 11 निमित्त (for निमित्तान्) —(l 2) V2 व्याधि नियच्छति, D2 11 न व्याधिमाच्छेति (for न व्याधिमृच्छति) D4 -[अ]धिमान (for °पाभ) —(l 3) Ś1 D10 [अ]प्यसौ (for त्वमौ) Ñ2 V1 B1-3 D6 श्रुत्वा ममेता (B1 °दीया) विषमा प्रवृत्तिं —(l 4) D3 क्रमिष्यते (for विक्रम्यते) D1 3 4 -कालात् (for -कालम्) Ñ2 V1 B1-3 D6 कच्चिन्न विक्रा (B3 °न्न हि क्रा) म (D6 °क्रम्य) ति लोकनाथ ]

—c) D1 3 हि मे, T2 M3 त्वह (for ह्यह) Ñ2 V1 B D6 तावच्च (V1 °द्धि) जीवेयमहं हनूमन्, D2 तावद्धि दूत प्रजिजीविषेय —d) B4 मनाक् (for यावत्) Ñ2 V1 B1 2 4 शृणुयात्प्रियो मे Ś1 D1-4 10 11 transp प्रवृत्तिं and प्रियस्य —After 29, Ś1 D1-4 10 11 ins

775* कच्चिन्महात्मा न पराजितात्मा
कच्चिन्न दैव कुरुते प्रमाणम् ।
मनो हि यस्योद्वहतीव भार
तस्याग्रतो दैवमनुप्रयाति ।

[(l 3) D3 [इ]ति (for [इ]व) D2 मार (for भार), —(l 4) D11 अत (for अनु-) ]

—They all cont (l 1-2 only), while Ñ2 V1 (preceded by an addl colophon) B D6 ins after 29, whereas V2 cont after 774*

776* उक्त्वा स पश्चात्परुष मूढया प्रेषितो मया ।
गतो रामगत मार्गं कच्चिज्जीवति लक्ष्मण ।
कच्चिज्जीवति कौशल्या सुमित्रा च यशस्विनी ।

[l 1) B3 उक्त, D6 उक्त (for उक्त्वा). Ś1 D3 10 उक्त (D10 °क्त) स परुष पूर्वं (D3 वाक्य), D1 2 4 11 उक्त म पूर्व परुष (D1 पुरुषो) (for the prior half) Ś1 D10 मूढया प्रेरितो —(l 2) Ś1 D10 -मार्गे, D11 -गतो (sic) (for -गत) Ś1 मार्गेन्, B1 मार्ष (for मार्गं) ]

—Thereafter, Ś1 Ñ2 V B D1-4 6 10 11 read 21 (Ñ2 V B D6 om) and 23-26

30 V B om 30 —a) Ś1 D10 [इ]व चेद; Ñ2 D6 [इ]त्युक्त्वा, D1-4 11 [ए]व देवी (for [इ]व देवी) D2 महार्हं, D4 11 महात, D5 हितार्थं (for महार्थं) —b) Ś1 Ñ D1-4 6 10 11 कपिप्रवीर (for तं वानरेन्द्र) D1 युक्त, D6 उक्त (for उक्त्वा) Ñ2 महदर्थयुक्तं (for मधुरार्थमुक्त्वा) —c) D2 श्रुत (sic) D5 वचस् (for पुनस्) Ś1 Ñ2 D6 10 वचो यथोक्तं, Ñ1 D1-4 11 यथावद्ु (D3 °र्थयु)-क्त, D5 मनोभिराम —d) Ś1 Ñ2 D6 10 रामेण रम्य (Ñ2 D6 हीना), Ñ1 D1-3 रामार्थ (Ñ1 °नु [sic]) मव्य, D11 °र्थमुग्र, Cr m g k t as in text (for रामार्थयुक्त) Ñ2 D6 सीता (for रामा) —After 30, Ś1 Ñ D1-4 6 10 11 read an addl colophon, while V2 B read it after 26, whereas V1 reads after 29

[*Sarga name*. Ś1 Ñ2 V B D1 3 6 10 सीतावाक्य, Ñ1 सीताप्रमाद·, D2 4 11 सीताप्रश्न —*Sarga no* (figures, words or both) Ñ1 B3 D1,2 4 10 11 om, Ś1 35, Ñ2 B1 2 D6 33, V1 34, V2 24, B4 36, D3 37.]

सीताया वचनं श्रुत्वा मारुतिर्भीमविक्रमः ।
शिरस्यञ्जलिमाधाय वाक्यमुत्तरमब्रवीत् ॥ ३१
न त्वामिहस्थां जानीते रामः कमललोचनः ।
श्रुत्वैव तु वचो मह्यं क्षिप्रमेष्यति राघवः ॥ ३२
चमूं प्रकर्षन्महतीं हर्यृक्षगणसंकुलाम् ।
विष्टम्भयित्वा बाणौघैरक्षोभ्यं वरुणालयम् ।
करिष्यति पुरीं लङ्कां काकुत्स्थः शान्तराक्षसाम् ॥ ३३
तत्र यद्यन्तरा मृत्युर्यदि देवाः सहासुराः ।
स्थास्यन्ति पथि रामस्य स तानपि वधिष्यति ॥ ३४
तवादर्शनजेनार्ये शोकेन स परिप्लुतः ।
न शर्म लभते रामः सिंहार्दित इव द्विपः ॥ ३५

G 5
B 5
L 5

31 For 31, Ś1 Ñ V B D1–4 6 10 11 subst

777* एतच्छ्रुत्वा शुभं वाक्यं सीताया मारुतात्मजः ।
इदं मधुरया वाचा कृताञ्जलिरभाषत ।

[ (l 1) Ś1 Ñ1 D1–4 10 11 एवमुक्त ( Ñ1 D11 °क्त ), V2 तच्छ्रुत्वा तु ( for एतच्छ्रुत्वा ) Ñ2 D6 ततो ( for शुभं ) D1–4 10 सीतया ( for सीताया ) Ñ2 D6 प्लवगर्षभ , V पवनात्मज —(l 2) B3 पुनर् ( for इदं ) D1 2 4 11 मधु( D1 उत्त )रमारेभे ( for मधुरया वाचा ) Ś1 D1 3 10 प्रत्युवाच कृताञ्जलि , D2 11 वक्तु वचनमुत्तमं, D4 वचनं वक्तुमुत्तमं ( for the post half ) Ñ1 इदं वचन ◡ ◡ ◡ मधुर ✻ मुत्तम ) ( illeg ) ]

32 [a]) Ś1 Ñ2 V B1 2 4 D1–4 6 10 तावद्देवि, Ñ1 च देवि वि-, B3 त्वा जानकि, D11 तावद्वै वि-, M1 त्वामिह वि- ( for त्वामिहस्थां ) D1–4 11 T G2 जानाति, Ct °नीते ( as in text ) —[b]) T2 3 G2 M2 3 -लोचने Ś1 Ñ V B1 2 4 D1–4 6 10 11 त्वामिहस्थां( D11 त्राहि नरस्त्व ) स( V2 तु, D2 हि )राघव , B3 ( with hiatus ) इहस्था स च राघव —After 32[ab], Ñ2 V B1 2 4 D6 ins , while Ś1 Ñ1 D1–4 10 11 subst for 32[c]–33[b]

778* धक्ष्यते सायकैराशु लङ्का प्रतिगते मयि ।

[ D3 द्रक्ष्यसे D1 2 4 त्वाशु, D3 भित्त्वा, D11 चाशु ( for आशु ) Ñ2 V B1 2 4 मयि प्रतिगते पुरीं, D6 रामो मयि गते पुरीं ( for the post half ). ],

while D5 7–9 S ins

779* तेन त्वां नानयत्याशु शचीमिव पुरंदरः ।
[ T2 आनयति ( for नानयति ) ]

—M1 cont

780* श्रुत्वैव हरिभिर्वीरैर्वृतो दन्तनखायुधैः ।

—B3 om 32[cd]. Ñ2 V B1 2 4 D6 read 32[c]–33[b] after 33[ef] —[c]) D7 9 च (for तु) Ñ2 V B1 2 4 D6 मम श्रुत्वैव तु( B2 च ) वच ( V2 B4 वचनं ), G1 M1 श्रुत्वा तु( M1 क्रुद्धस्तु ) वचनं मह्यं ꕥ Cr m g मह्यं मम ( Cr g व्यत्ययेन षष्ठ्यर्थे चतुर्थी ।, Ct मह्यं मत्त ꕥ

33 For subst in Ś1 Ñ1 D1–4 10 11 and small sequence in Ñ2 V B1 2 4 D6, cf v l 32 —[b]) D1 8 9 M हर्यक्ष (sic) (for हर्यृक्ष-) D7 9 -समुता ( for -सकुलाम् ) —For 33[ab], Ñ2 V B D6 subst

781* प्रकर्षन्महतीं सेनां वानराणां महात्मनाम् ।
[ B4 हर्षयन ( for प्रकर्षन् ) ]

—B3 om 33[c–f] —[c]) Ñ2 V B1 2 4 D6 विष्टभ्य स हि ( for विष्टम्भयित्वा ) —[d]) Ś1 Ñ V B1 2 4 D1–4 6 10 11 अगाध( D11 °ध- ) ( for अक्षोभ्यं ) —[e]) Ñ1 D1 2 4 11 रिपोर् ( for पुरीं ) —[f]) Ś1 Ñ1 B4 D1–4 10 11 प्रसह्य ह( D1 स )त-राक्षसां, Ñ2 V B1 प्रयत्ना( V2 यत्नाद )न्वेष्यराक्षसां, B2 3 प्रयत्नाद्धयराक्षसां, D6 प्रयत्नात्तेषु राक्षसं —After 33, Ś1 Ñ1 D1–4 10 11 ins

782* त्वामेव तु विशालाक्षीमनुध्यायति निःश्वसन् ।
स्वसुकामस्य रामस्य निद्रा नैवोपजायते ।

[ (l 1) D11 च ( for तु ) D3 4 विशालाक्षि Ś1 D10 रामो D4 स च ( for अनु- ) Ñ1 D10 11 निश्वसन्, D1 2 निश्वस ( for निःश्वसन् ) D3 समनुध्यायनश्चिर ( for the post half ). —(l 2) D2 साधुकामस्य, D3 स्वप्नकामस्य D1 [उ]पपद्यते D2 4 11 न निद्रा ह्यभिनायते ( for the post half ) ]

—After 33[ef], Ñ2 V B1 2 4 D6 read 32[c] – 33[b] (subst )

34 Ś1 Ñ1 ( second time ) D1–4 10 11 read 34–38 after 5 35 20 (Ñ1 [ first time ] D11 read 36[cd] after 5 35 17[ab]) —[a]) Ñ1 तस्य ( for तत्र ) D3 [अं]तरे ( for [अ]न्तरा ) —[b]) T1 युधि, T2 युद्धे, G1 अपि, Cr m t as in text ( for यदि ) Ś1 वा स्म ( for देवा ) Ñ1 D5 7–11 महासुराः, D2 सवासवा , D3 सुरासुरा , G1 महोरगा , M3 सहामरा ( for सहासुरा ) Ñ2 V B D6 यदि सेंद्रा दिवौकसः —[cd]) Ś1 Ñ1 D1 यदि, D2 4 11 युधि ( for पथि ) Ñ2 V B D6 स्था( V2 ध्व )स्यति तानपि रणे( V2 वशे [ sic ] ) काकुत्स्थो निहनिष्यति

35 For sequence in Ś1 Ñ1 D1–4 10 11, cf v l 34 —[a]) Ñ1 D4 तदा, D11 तथा ( for तव ) Ñ2 V B1 2 4 D6 M1 [अ]दर्शनशोकेन( M1 °जेनार्य ) ( for °जेनार्ये ) B3 तव देवनशोकेन —[b]) D4 T2 G1 च ( for स ) Ś1 Ñ1 D1 3 10 11 G2 समभिप्लुत , D2 महताप्लुत , D7 9 M1 परिपूरि( M1 °पुप्लु )त , G2 समभि° ( for स परि° ) Ñ2 V B D6 महता समभिप्लुत ( B3 सपरिच्छद ) —[c]) Ñ2 V B D6 शांति ( for शर्म ) Ñ1 रामोसौ ( hypm ) ( for राम ). —[d]) V B1 2( marg also as in text ) 4 द्रवर्षभ

G. 5 34. 7
B. 5. 36. 38
L 5 34 36

दर्दरेण च ते देवि शपे मूलफलेन च ।
मलयेन च विन्ध्येन मेरुणा मन्दरेण च ॥ ३६
यथा सुनयनं वल्गु बिम्बोष्ठं चारुकुण्डलम् ।
मुखं द्रक्ष्यसि रामस्य पूर्णचन्द्रमिवोदितम् ॥ ३७
क्षिप्रं द्रक्ष्यसि वैदेहि रामं प्रस्रवणे गिरौ ।
शतक्रतुमिवासीनं नाकपृष्ठस्य मूर्धनि ॥ ३८
न मांसं राघवो भुङ्क्ते न चापि मधु सेवते ।
वन्यं सुविहितं नित्यं भक्तमश्नाति पञ्चमम् ॥ ३९

(for इव द्विप) D10 सिहान्दिज्ञवनद्विप (corrupt). —After 35, Ñ2 V B D6 ins

783* सत्येन वै शपे देवि तथैव सुकृतेन च।

[ Ñ2 सत् (for सु-) ]

36 For sequence in Ś1 Ñ1 D1–4 10 11, cf v l 34 Ś1 D10 om 36 D1 om $36^{a}$ G3 M3 transp $^{ab}$ and $^{cd}$ —$^{a}$) Ñ1 V2 B3 D3 5 6 दुर्धरेण, Ñ2 V1 B2 T2 M3 दर्दुरेण, B4 अकुरेण, D4 दुर्दरेण, D7–9 G3 Ct मन्दरेण, D11 दुदुरेण, Cr as in text (for दर्दरेण) Ñ2 D6 8 M1 वै(M1 तु) देवि, V B वैदेहि (for ते देवि) D2 दर्दुरे समये देवि —$^{b}$) D1 शोक (sic), D2 3 शाक- (for शपे) Ñ1 वा (for च) B3 शाकमूलफलेषु च —B3 om $36^{c}-37^{b}$ Ñ1 repeats $36^{cd}$ and illeg (first occurance) for $36^{c}$ —$^{c}$) V1 वमलेन, B1 2 4 D6 वरुणेन (for मलयेन) Ñ2 V2 B1 2 4 D6 स- (for च) D2 हिमालयेन विध्येन —$^{d}$) D1–3 6 मदिरेण (sic), D7–9 Cm g t दर्दुरेण (for मन्दरेण) G3 दर्दुरेण च मेरुणा

37 For sequence in Ś1 Ñ1 D1–4 10 11, cf v l 34 B3 om $37^{ab}$ (cf. v l 36) D11 om 37 —$^{a}$) Ñ1 अथवा (hypm ), D10 सीते (for यथा) V2 घनलय (for सुनयन) Ś1 वंजु, Ñ2 V2 B1 2 D6 वीर, V1 B4 धीर (for वल्गु) —$^{b}$) D10 बिंबौष्ट Ñ2 V B1 2 4 D6 दर्शन, D3 -मडल (for -कुण्डलम्) —D6 om $37^{c}-38$ D10 om $37^{cd}$ —$^{c}$) Ś1 Ñ V B D1–4 क्षिप्र (for मुख) —$^{d}$) Ś1 Ñ V B D1–4 पूर्णचद्रनिभ मुख(B3 4 D1 2 °भानन) —After 37, Ñ2 V B D6 (after $37^{ab}$, owing to om ) ins , while Ś1 Ñ1 D3 4.10 11 cont l. 1 only after l 1 of 788*, whereas D1 2 ins l 1 only after 43

784* त्वामेव ध्यायति सदा विशालाक्षि स राघव ।
सुप्तस्यैव च रामस्य निद्रा नैवोपतिष्ठति।

[ Cf 782* —(l 1) Ñ2 D6 ध्यायते नित्य, D1–3 सतत ध्याति (metri causa) (for ध्यायति सदा) —(l 2) Ñ2 D6 [ए]व तु, B2 [ए]व हि, B3 चैव (by transp ) (for [ए]व च ) Ñ2 B2 4 D6 [उ]पतिष्ठते ]

38 For sequence in Ś1 Ñ1 D1–4 10 11, cf v l 34. Ñ2 V B D6 om 38 (for D6, cf v l 37) —$^{b}$) D1–3 11 प्रश्रवणे —$^{d}$) D2 4 7 9 T1 3 G1 2 Cr m ना(D3 [न]-)गराज(D7 9 °पृष्ठ)स्य ※ Cr नागराजस्य मूर्धनि। ऐरावतस्य मूर्धनि। नाकपृष्ठस्य मूर्धनीति पाठे स्वर्गोपरीत्यर्थे । so also Cm, Cg नाकपृष्ठो नामेन्द्रस्यासाधारणस्वर्गस्थानविशेष ।, Ct नागपृष्ठस्य मूर्धन्यैरावतोपरि स्थितमिन्द्रमिव मत्पृष्ठग रामं द्रक्ष्यसीत्यर्थ । 'नाकपृष्ठस्य' इति पाठ । स्वर्गस्योपरीत्यर्थ इति तीर्थ ? ※

39 $^{a}$) Ś1 Ñ V B D1–4 6 10 11 न भक्षयति मासानि. —$^{b}$) Ñ1 दधि, D2–4 देवि, D7 9 चैव (for चापि). Ś1 D10 दविमप्याशन न(D10 °दि नैव) च, Ñ2 V B1–3 D6 न मधूनि(V2 च हृद्य, B1 च कृत्य, B3 च पान, D6 च मद्य) निषे(B2 च से)वते, B4 न च ऋत निवर्तते, D1 11 न देवि मधु सेव्यते (D1 °मेव च) —$^{c}$) Ś1 Ñ1 D1–4 10 11 शयान स्थडिले शय्या —$^{d}$) Ś1 D3 10 नक्तम्, Cm g t as in text (for भक्तम्) Ś1 Ñ1 D1–4 10 11 चाष्टमे(D1 3 °म, D2 °क), Cm g t as in text (for पञ्चमम्), D11 रात्रि नयति सर्वदा —For $39^{cd}$, Ñ2 V B D6 subst

785* वानेय विहित त्वेकमश्नुते भक्ष्यमष्टमम्।

[ B3 रामो यद् (for वानेय) B3 पथ्यम् (for त्वेकम्) B4 राम परिकृत त्वेकम् (for the prior half) B3 अश्नाति (for अश्नुते) Ñ2 V भुक्तम् (for भक्ष्यम्) Ñ2 B2 D6 उत्तम (for अष्टमम्) ]

—Thereafter, all the above MSS cont , while Ś1 Ñ1 D1–4 10 11 ins. after 39

786* न कामान्न च सरम्भान्न भयान्न च वृद्धये।
आहारमाहारयते प्राप्ते काले तथाष्टमे ।
मतिमानपि काकुत्स्थो वीरश्चैव विशेषत·।
त्वद्वियोगजदुःखेन विक्लव समपद्यत।
न शौर्ये नास्त्रकौशल्ये न रतौ न च भोजने। [5]
सुख विन्दति वैदेहि त्वद्गतेनान्तरात्मना।
विलपन्सतत भीरु शोचश्च बहुशो भृशम्।
जीवित निन्दते नित्य कुले जन्म च सर्वदा।
धिगस्त्राण्यस्त्राणि दिव्यानि धिग्वीर्यं धिक्पराक्रमम्।
धिग्जन्म मे कुले तेषामिक्ष्वाकूणा महात्मनाम्। [10]
यत्र मे रक्षसा भार्या प्राणैरिष्टतमा सती।
हृतावमन्य तृणवत्कृत्वा मे सर्वथा कुलम्।

[ D10 om (hapl ) l 1–2. —(l 1) Ś1 B1 D2 4 न च कामान्न (by transp ) V2 सरब्धान् (for सरम्भान्). V B1 3 4 कार्यान्न च(V2 °र्थार्थ-), B2 न कार्यान्न (for भयान्न च) Ś1 गृध्नुत , Ñ1 गृध्नन , D1 3 गृद्धिन , D3 गृद्धिन , D4 गृध्यत (for वृद्धये) D11 न भयान्नार्थगृद्धन (for the post half) —(l 2) B3 आहारयति शुद्धान्न (for the prior half) V1 B4 D6 प्राप्त (for प्राप्ते) B2 (marg also) तथाष्टम. —(l 3) Ñ1 स हि, B4 D1 11 अति (for अपि) B2 D2–4

नैव दंशान्न मशकान्न कीटान्न सरीसृपान् ।
राघवोऽपनयेद्गात्रात्त्वद्गतेनान्तरात्मना ॥ ४०
नित्यं ध्यानपरो रामो नित्यं शोकपरायणः ।
नान्यच्चिन्तयते किंचित्स तु कामवशं गतः ॥ ४१

अनिद्रः सततं रामः सुप्तोऽपि च नरोत्तमः ।
सीतेति मधुरां वाणीं व्याहरन्प्रतिबुध्यते ॥ ४२
दृष्ट्वा फलं वा पुष्पं वा यच्चान्यत्स्त्रीमनोहरम् ।
बहुशो हा प्रियेत्येवं श्वसंस्त्वामभिभाषते ॥ ४३

G B L

भीरु. Ś1 D10 एव, Ñ1 B3 D1 2 4 11 चापि (for चैव) —After l 3, Ñ1 ins

786(A)* विशेषज्ञो विशिष्टश्च विशेषज्ञजनोत्तम ।

—(l 4) D1 -वियोगेन, D6 -वियोगजेन (hypm) (for -वियोगज) Ś1 Ñ1 D1-4 10 11 -शोकेन (for दुःखेन) V2 B3 4 D2 3 विक्लव (for विह्वल) Ñ1 V D2 समपद्यते, B4 समतप्यत, D6 समापतत् (for समपद्यत) —(l 5) D3 [अ]पि, D4 [अ]त्र (for [अ]स्य) V2 -शस्त्रेण, B1 2 सकल्पे (B2 marg also साकल्ये), B4 -शास्त्रेषु (for कौशल्ये) D1 रात्रौ (for रतौ) Ś1 D3 10 11 नापि ज्ञाने महामति (D3 न भोजने) (for the post half) —After l 5, Ñ1 ins a line which is mostly illeg —(l 6) Ś1 D10 सुप्त सबुध्य (D1 °विद)ते देवि, Ñ1 D2 4 सुप्त न(D2 म) विंदते देवि, D3 स विंदति सुप्त देवि, D11 स्वसप्न विंदते देवि (for the prior half) Ñ2 हर्षितेन, B2(marg. also) त्वत्कृतेन (for त्वद्गतेन) —(l 7) D1 विक्षिपन् (for विलपन्) D1 3 बहुधा (for सतत) Ñ1 देवि (for भीरु) V2 D1 शोचते (for शोचश्च) Ś1 Ñ1 D1-4 10 11 बहुधा (for बहुशो) Ś1 D10 तथा, Ñ1 बहु (for भृशम्) —(l 8) D3 देवि (for नित्य) B1 D4 11 कुल (for कुले) D1 धिग्धिग्जीवित नित्य च (for the prior half) Ñ2 B1 3 4 D6 सर्वथा, D1 निंदते (for सर्वदा) D3 त्वया हीन यदाभवत् (for the post half) —(l 9) Ñ1 नामास्त्राणि, B2 शस्त्राणि च, B4 मामस्त्राणि, D2 11 मे(D11 मा) शस्त्राणि (for ममास्त्राणि) Ś1 in marg, B3 सर्वाणि (for दिव्यानि) —Ñ1 illeg for the post half —(l 10) Ñ1 D4 ज म च, Ñ2 B1 D6 च शूर (B1 °र), V शूरत्व, B2 शूर धिक्, B3 प्रभुत्व, B1 शूराणा, D1 धिग्जन्म, D3 च जन्म (for जन्म मे) D4 कुल (for कुले) Ñ2 V B D6 जन्म (for तेषाम्) —After l 10, Ñ1 ins

786(B)* चिरबाहु ++ धिक्शौर्यं धिग्धामेव च सर्वदा ।

—(l 11) V1 यतो, B1 यस्य, D2 अत्र (for यत्र) V B D4 राक्षसैर् (for रक्षमा) B3 भीम (for भार्या) D4 6 इष्टतरा, D11 प्रियतरा (for इष्टतमा) Ś1 Ñ1 D2 4 10 11 प्रिया (for सती) D1 3 प्राणेभ्योपि गरीयसी (for the post half) —(l 12) Ś1 D10 हृतावमानात्, Ñ °मन्ये, B4 D1 4 हृतावमत्य, D2 हृतावमन्य (corrupt), D11 हृता च मन्ये (for हृतावमन्य) Ś1 हृत, D1-4 11 कृत, D6 वृथा, D10 वन (for कृता) B3 मां, D2 तत् (for मे) V2 नवमाकुल ]

40 a) D3 स, D10 च (for [ए]व) D4 दंतान् (sic) (for दंशान्) —b) Ś1 D10 वन्यान्देव, Ñ1 नान्य+ + (illeg), Ñ2 V2 B4 D2 6 अन्यांश्चापि, V1 B3 D1 2 4 11 नान्यांश्चापि (D11 °श्चैत), B1 वन्यांश्चापि, B2 नान्यानपि (for न कीटान्न) —c) Ś1 Ñ V B1 3 D1 6 10 11 वारयत्यगात् (Ś1 °गास्), B2 वारयेदगात्, B4 वारयत्यगे (for ऽपनयेद्गात्रात्) —d) Ś1 Ñ1 D1-4 10 11 तत्र (D4 न च) नामवत चरन्, Ñ2 V B D6 तवार्थे वरवर्णिनि.

41 D3 reads 41[ab] twice —a) D6 नित्य- D3 (second time) चिता (for ध्यान-) —b) Ś1 D10 जप, B4 कोप-, D3 (second time) मोह- (for शोक) —c) V2 B1 3 D7-9 M1 नान्य, D2-5 10 11 नित्य (for नान्यच्) D3 ध्यानपरश्, D11 सचितयेन् (for चिन्तयते) Ś1 Ñ2 V B1-3 D3 4 6 10 11 चापि, Ñ1 रामम्, B3 वापि, D2 नापि, T1 3 G2 देवि (for किंचित्) D1 नित्य चितापरश्चेति —d) T2 हि (for तु) Ś1 Ñ V B D1-4 6 10 11 त्वद्गतेनातरात्मना —After 41, D1 ins

787* विक्षिपद्बहुधा भीरु त्वद्गतेनान्तरात्मना ।

42 a) Ś1 Ñ1 D1-4 10 11 नित्य निद्रावशो राम, Ñ2 V B D6 त्वामेव चितयन्रा(B4 °न्ना)म (V2 °> *) —b) Ś1 D10 सुप्तो हि, Ñ1 प्रसुप्तोपि (hypm), B2 (in marg also) सुस्थो न, B3 D3 स्वप्नेपि, D1 सत्योपि, M1 सुस्थापि, Cm t as in text (for सुप्तोऽपि) Ś1 D1 2 4 11 पुरुषर्षभ, Ñ2 V B D6 प्रतिबुध्यते, D3 भरताग्रज, D8 च नरेश्वर (for च नरोत्तम) —c) D4 मधुर —d) Ś1 D1 3 10 11 स विबुध्यते, Ñ1 ह्रि बुध्यते, Ñ2 V B D6 पुरुषर्षभ, D2 समबुध्यत

43 a) Ś1 D10 तु (for first वा) Ñ2 V B D6 फल चा(V2 B1 4 D6 वा)लोक्य पुष्प(B3 मूल) वा, D2 11 दृष्ट्वा पुष्प फल वा(D11 पुष्पफल चा)पि —b) V2 B3 4 D5 8 T2 M3 वा (for च) Ś1 D1 2 श्री-, B2 च, T1 3 G2 M3 सु-, Ct as in text (for स्त्री) G1 यत्रान्नि (for चान्यत्स्त्री) Ñ2 B2 D4 मनोरम ∯ Ct स्त्रीमनोहर स्त्रीमनिधाने मनोहर स्त्रीणा मनोहर वा ∯ —c) Ñ2 V B D6 गृहीत्वा (for बहुशो) D4 प्रिये नित्य, D5 प्रिये त्वेव (for प्रियेत्येव) —d) D7-9 स्मरस् (for श्वसस्) Ś1 Ñ1 D1-4 10 11 नि(Ś1 नि)श्वासबहुलोब्रवीत् (Ñ1 D4 °ल सदा, D1 °लो ब्रुवन्, D2 °लो रुदन्, D11 °लो रुदन्) Ñ2 V B D6 नि(V2 नि, B4 नि)श्वासपरमोभवत् (Ñ2 V2 D6 °मो भवेत्) —After 43, Ś1 Ñ1 D3 4 11 ins, while D1 2 ins only l 2 (preceded by l 1 of 784*) after 43

788* हा जानकीति निःश्वस्य बाष्पपूर्णमुखोऽभवत् ।
क्षिप्रं प्राप्स्यति वैदेहि राम पद्मदलेक्षणम् ।

# ३५

सीता तद्वचनं श्रुत्वा पूर्णचन्द्रनिभानना ।
हनूमन्तमुवाचेदं धर्मार्थसहितं वचः ॥ १
अमृतं विषसंसृष्टं त्वया वानर भाषितम् ।
यच्च नान्यमना रामो यच्च शोकपरायणः ॥ २
ऐश्वर्ये वा सुविस्तीर्णे व्यसने वा सुदारुणे ।
रज्ज्वेव पुरुषं बद्ध्वा कृतान्तः परिकर्षति ॥ ३
विधिर्नूनमसंहार्यः प्राणिनां प्लवगोत्तम ।
सौमित्रिं मां च रामं च व्यसनैः पश्य मोहितान् ॥ ४
शोकस्यास्य कदा पारं राघवोऽधिगमिष्यति ।
प्लवमानः परिश्रान्तो हतनौः सागरे यथा ॥ ५
राक्षसानां क्षयं कृत्वा सूदयित्वा च रावणम् ।
लङ्कामुन्मूलितां कृत्वा कदा द्रक्ष्यति मां पतिः ॥ ६
स वाच्यः संत्वरस्वेति यावदेव न पूर्यते ।
अयं संवत्सरः कालस्तावद्धि मम जीवितम् ॥ ७
वर्तते दशमो मासो द्वौ तु शेषौ प्लवंगम ।
रावणेन नृशंसेन समयो यः कृतो मम ॥ ८
विभीषणेन च भ्रात्रा मम निर्यातनं प्रति ।
अनुनीतः प्रयत्नेन न च तत्कुरुते मतिम् ॥ ९ G. 5 35 10 B 5 37 9 L 5 34 9

## 35

M2 begins with श्रीरामाय नम

1 $^a$) D5 7-9 M1 Cr सा सीता, Cg k as in text (for सीता तद्) —$^c$) Ñ2 V B D6 अथोवाच (for उवाचेद्) —$^d$) Ñ2 V B D6 वचो(D6 -चः)धर्मार्थ(V2 °र्थम)सहित

2 $^a$) Ś1 -समृष्ट, Ñ1 D4 7-9 मपृक्त, D1 3 सयुक्त, D6 11 T2 3 G1 -सस्पृष्ट, Cg k as in text (for -ससृष्ट) —$^b$) D1 तथा, M1 यथा (for त्वया) Ñ1 हनुमन्भाषित त्वया —For 2$^{ab}$, Ñ2 V B D6 subst

792* विषेण चामृत मिश्र भाषित वचन त्वया।

[Ñ2 V1 विशेषेण, V2 द्रविणेव, B1-3 विषणेव (for विषण च) B4 [अ]मृतैर् V2 (after corr as above) पीत (for मिश्र) ]

—$^c$) D10 यश्च B2 (marg also) [अ]प्यन्यमना, B3 [अ]नन्यमना (for नान्यमना). —$^d$) D10 यश्च Ñ2 V B D6 यच्च कामेन पीडित

3 D1 om (hapl) 3$^b$–4$^c$ —$^b$) B4 व्यसनेन D2 चापि दारुणे (for वा सुदा°) ⊛ Ct ऐश्वर्ये व्यसन इति च विषयसप्तमी ⊛ —$^c$) B4 वधो वा (sic), D2 राज्ये च, D11 रक्षेव (sic), M1 रज्जेव (for रज्ज्वेव) Ś1 Ñ V B D1 4 6 10 11 पुरुषो Ś1 V2 D3 4 10 11 बद्ध, D2 बद्ध (for बद्ध्वा) —$^d$) Ś1 Ñ2 V B D2-4 6 10 11 कृतान्तेनेव(Ś1 [before corr ]°नव )नीयते, Ñ1 वनदेवेन नीयते

4 D1 om 4$^{abc}$ (cf v l 3) —$^a$) Ñ2 V B D6 transp विधिर् and नूनम् B3 अनाहार्य (for अस°) —$^b$) Ñ2 V B D6 वानरर्षभ (for प्लवगोत्तम) —$^c$) B1 पश्य (for मा च) G2 सीता (sic) (for राम) —$^d$) D2 विधानै, D4 व्यसने (for व्यसनै)

5 $^a$) D8 च (for [अ]स्य) D7 9 कथ (for कदा) —$^b$) Ñ2 V B D6 सतरिष्यति, D11 [S]पि गमिष्यति —Ś1 D10 om 5$^{cd}$ —$^c$) D7 9 Ct परिक्रान्तो, D8 °क्रान्तो (for °श्रान्तो) —$^d$) D5 हतनो, D11 हता नौ D3 4 भ्राता (D4 हत) नौरिव सागरे —For 5$^{ca}$, Ñ2 V B D6 subst

793* पर पारमिवासाद्य पुरुष सलिलार्णवे।

[V1 B1 2 तरन्, V2 B4 पार (for पर) B4 सन्निपातरे ]

6 $^a$) B4 D5 7-9 M3 वध (for क्षय) B3 राक्षसानामाय-कस्तीक्ष्णर् —$^b$) Ś1 Ñ1 D1-4 10 11 घातयित्वा, Ñ2 V B D6 नाश° (for सूद°) —$^c$) Ñ1 V1 D7 9 T2 उन्मथिता (for उन्मूलिता) V2 (m also) चापि (for कृत्वा) D3 लङ्कामुन्मूलयित्वा तु —$^d$) B1 सदा (for कदा) B3 मा द्रक्ष्यते (for द्रक्ष्यति मा) Ñ1 प्रभु (for पति)

7 $^a$) Ś1 D3 10 मम वाक्येन, Ñ2 D6 सत्वर चैव, V2 सत्वर चेति, B4 तु त्वया चेति (for संत्वरस्वेति) B3 स राघव सत्वर चापि (hypm), D1 11 अत्वत(D11 स वाच्य) सत्वरश्चेति, D2 मम्र सवत्सरश्चेति —$^c$) T3 सकल्पित (for सवत्सर)

8 $^a$) B3 क्षगमत्कुसुमो मासो, D10 वर्तते दशमे वामो —$^b$) T2 च (for तु) D2 शेष, D11 श्रेष्ठा, M3 मासा (for शेषौ) Ś1 मासौ द्वौ तु, D3 द्वौ शेषा तु (by transp) (for द्वौ तु शेषौ) Ñ2 V B1 2 4 D6 द्वौ तु मासा(V1 B4 मासा तु) महाकपे, B3 द्वौ मासौ चापि तिष्ठतः —$^c$) T2 (also) विशेषेण, G1 [आ]नृशस्येन (for नृश°) —$^d$) Ś1 D1 4 6 10 T2 [S]य (for य) D11 मया (sic) (for मम) Ñ2 V B D6 य कृत समयो मम

9 D6 om 9–11$^b$ —$^a$) D2 4 11 सौम्येन, T2 स भ्रात्रा (for च भ्रात्रा) —$^c$) Ś1 D1 10 स्वय तेन, Ñ1 स्वय दृष्टो, D2 4 11 स्वय भ्रात्रा, D3 स्वय पापो (for प्रयत्नेन) M1 उक्तोपि बहुशस्तीक्ष्णो —$^d$) Ś1 D1 10 च ता, Ñ1 D3 स ता, D5 स तत् (for च तत) D2 4 न च तत्कृतवास्तथा (D4 °दा), D11 न च ता कृतवान्मतिं —For 9, Ñ2 V B subst

G. 5 35. 11 B. 5 37 10 L 5 34 10 मम प्रतिप्रदानं हि रावणस्य न रोचते ।
रावणं मार्गते संख्ये मृत्युः कालवशं गतम् ॥ १०
ज्येष्ठा कन्यानला नाम विभीषणसुता कपे ।
तया ममैतदाख्यातं मात्रा प्रहितया स्वयम् ॥ ११
अविन्ध्यो नाम मेधावी विद्वान्राक्षसपुंगवः ।
धृतिमाञ्शीलवान्वृद्धो रावणस्य सुसंमतः ॥ १२
रामात्क्षयमनुप्राप्तं रक्षसां प्रत्यचोदयत् ।
न च तस्यापि दुष्टात्मा शृणोति वचनं हितम् ॥ १३

आशंसेयं हरिश्रेष्ठ क्षिप्रं मां प्राप्स्यते पतिः ।
अन्तरात्मा हि मे शुद्धस्तस्मिंश्च बहवो गुणाः ॥ १४
उत्साहः पौरुषं सत्त्वमानृशंस्यं कृतज्ञता ।
विक्रमश्च प्रभावश्च सन्ति वानर राघवे ॥ १५
चतुर्दश सहस्राणि राक्षसानां जघान यः ।
जनस्थाने विना भ्रात्रा शत्रुः कस्तस्य नोद्विजेत् ॥ १६
न स शक्यस्तुलयितुं व्यसनैः पुरुषर्षभः ।
अहं तस्यानुभावज्ञा शक्रस्येव पुलोमजा ॥ १७

---

794* विभीषणस्तु धर्मात्मा राक्षसो रावणानुज ।
विज्ञप्तवान्रावण स मम निर्यातन प्रति ।
अनुनीतो मुहुस्तेन न च तत्कृतवानसौ ।

[ (l 3) Ñ2 V [ऽ]नुजस् (for मुहुस्) B2 तत्मत्कृतवान् (for च तत्कृतवान्) ],
Thereafter all the above MSS cont , while Ñ1 D1–4 10 11 ins after 9

795* भ्रातु सकाशात्परुष लब्ध्वा किल स निर्गत ।

[ Ñ2 किल वि-, V B4 स किल (by transp ), D2 10 स तु वि- (for किल स) Ñ1 D1 4 लब्ध्वा स तु( Ñ1 सोपि ) प्लवगम, D3 लब्धवान्स प्लवगम, D11 लब्ध्वा स तु प्रविक्षत (for the post half) ]

10 D6 om 10 (cf v.l 9) —$^{a}$) B3 तु, D9 च (for हि) —$^{b}$) B3 रावणाय —$^{cd}$) Ñ1 D1 3 4 10 राघव (for रावण) Ś1 रावणो मार्गते सख्य, D2 11 राघवमार्गते शक्र (for $^{c}$) Ś1 D1–4 10 11 मृत्यु- (D3 11 °त्यु) Ś1 Ñ1 D1–4 10 11 T2 G1 गत (for गतम्) Ñ2 V B राघवान्मार्गते मृत्यु मन्ये कालवश गत

11 D6 om $11^{ab}$ (cf v l 9) —$^{ab}$) D1 G3 ज्येष्ठ-कन्या D1 ( unmetrical ) नदा, D7 9 कला ( for [अ]नला ) Ś1 Ñ V B D2 4 10 11 विभीषणसुता ज्येष्ठा नदा नाम महाकपे —$^{c}$) D2 तदा (for तया) Ñ2 V B D6 मे सर्वम्, T M3 ममेदम्, Ck t as in text (for ममैतद्) D1 तया मयेव प्रख्यात —$^{d}$) Ñ2 B4 D6 प्रेषितया, V B1–3 सा( V2 ., B2 च ) प्रेषिता, D2 प्रतिहिता, D7 सहितया, D8 [अ]भिहितया, D11 प्रहित * ( for प्रहितया )

12 D5 T1 3 G M om 12–13 —$^{a}$) B4 सुविन्ध्यो, D1 4 अरन्ध्यो Ñ V B1 2 4 D2–4 6 11 तेजस्वी ( for मेधावी ) —D4 om (hapl ) from राक्षस- in $^{b}$ up to $13^{a}$ —$^{c}$) Ñ1 V2 धृतिवान् B3 तेजस्वी बलवान्वृद्धो —$^{d}$) D1 10 सुमगत , D3 8 T2 च( T3 तु ) समत —After 12, V2 ins

796* तेनापि भ्रातिनो राजा मम निर्यातन प्रति ।

13 D4(up to $13^{a}$) 5 T1 3 G M om 13 (cf v l 12) —$^{a}$) D2 राम क्षमम्, D7 9 Ct रामक्षयम् ❀ Ct रामक्षय रक्षसा रामात्क्षय प्राप्तमित्यर्थ ❀ —$^{b}$) Ś1 Ñ1 D3 8 10 प्रत्यवेदयत्, T2 पर्यचोदयत् ( for प्रत्यचोदयत् ) D1 राक्षसाना प्रत्यवोचत( hypm ), D2 4 11 राक्षस( D11 °सान् ) प्रत्यवेदयत् —For $13^{ab}$, Ñ2 V B D6 subst

797* सोऽस्यानयमनुप्राप्य राक्षस प्रत्यवेदयत् ।

[ V2 D6 [आ]लयम् ( for [अ]नयम् ) B2 4 अनुप्राप्त B1 सोप्यन्यायमनुप्राप्त ( for the prior half ) Ñ2 D6 रावण, B2 रक्षसां ( for राक्षस ) V1 प्रत्यबोधयत्, V2 B2 प्रत्यबो-( B2 °पा )दयत् ]

—After $13^{ab}$, D3 4 ins

798* बाणेनैकेन निहतं वालिन प्रत्यवेदयत् ।

—$^{c}$) D3 न हि B2 [अ]पि दुरात्मा (unmetrical), D6 [अ]भिदुष्टात्मा, D7–9 स दुष्टात्मा, D11 [अ]पि हृष्टात्मा ( for [अ]पि दु° ) B1 तस्यापि न च मूढात्मा

14 $^{a}$) Ś1 D10 आशसेह, Ñ V B1 2 4 D1 2 4 6 11 °सामि, B3 D3 °से हि( D3 + ), D5 8 T2 M अमशयं ( for आशसेय ) Ñ1 D3 6 10 T1 3 कपिश्रेष्ठ ( for हरिश्रेष्ठ ) ❀ Cv यमाशसे य प्रार्थयामि ।, so also Cr ❀ —$^{b}$) D2 आलप्स्यते, D4 11 मा लप्स्यते, D8 सप्रा° ( for मा प्रा° ) Ñ2 V B D6 क्षिप्रमेष्यति राघव —Ś1 D10 om $14^{cd}$ —$^{c}$) B2 D3 T च, B3 न ( sic ) ( for हि ) D11 शुद्धश्च ( for मे शुद्धस् ) —$^{d}$) B4 तु, D8 हि ( for च )

15 $^{a}$) D8 T2 उत्साह D4 5,8 G2 सत्यम् ( for सत्त्वम् ) —$^{b}$) Ñ2 V ( V2 also ) B D6 अप्रमाद ( for आनृशस्य ) —$^{d}$) B3 नित्य ( for सन्ति ). Ñ1 प्रतापा राघवे हरे ( sic )

16 $^{a}$) D3 सहस्राणा —$^{b}$) Ñ1 च, V2 B4 D5 स ( for य ) —$^{d}$) D3 क शत्रुस् ( by transp ), D1 शत्रुघ्नस् ( for शत्रु कस् ) Ś1 D3 10 गण्यते ( for नोद्विजेत् )

17 $^{ab}$) T3 न स शक्तस् D3 4 लघयितु ( for तुल° ) Ñ1 विजेता स न शक्यस्तु( [ also ]तुलयितु [ hypm ]) ( for $^{a}$ ) Ñ1 D1 2 10 11 T1 3 व्यसने D10 नरर्षभ ( subm ) ( for पुरुष° ) Ś1 विजेतु न स शक्यस्तु रावणेन नरर्षभ —After $17^{ab}$, Ñ1 ( for the first time here

G 5 38 46
B 5 28 25
L 5 35 33

ततस्तस्याक्षि काकस्य हिनस्ति स्म स दक्षिणम् ॥ ३१
स ते तदा नमस्कृत्वा राज्ञे दशरथाय च ।
त्वया वीर विसृष्टस्तु प्रतिपेदे स्वमालयम् ॥ ३२
मत्कृते काकमात्रेऽपि ब्रह्मास्त्रं समुदीरितम् ।
कस्माद्यो मां हरत्त्वत्तः क्षमसे तं महीपते ॥ ३३
स कुरुष्व महोत्साहं कृपां मयि नरर्षभ ।
आनृशंस्यं परो धर्मस्त्वत्त एव मया श्रुतः ॥ ३४
जानामि त्वां महावीर्यं महोत्साहं महाबलम् ।
अपारपारमक्षोभ्यं गाम्भीर्यात्सागरोपमम् ।
भर्तारं ससमुद्राया धरण्या वासवोपमम् ॥ ३५

847* परित्यक्तो विपण्णश्च स त्वयोक्तस्तदा विभो ।
अमोघोऽयमिपु क्षिप्त किमङ्ग ज्ञातयामि ते ।

[ (l 1) Ñ2 D6 परित्राणो, V2 °भूत, B4 °पूर्णो (for परित्यक्तो) —(l 2) Ś1 Ñ1 D1–4 10 11 मुक्त (for क्षिप्त) ]

—After 30, M3 ins.

848* हिनस्तु दक्षिणाक्षि स्वच्छर इत्यथ सोऽब्रवीत् ।

31 $^{b}$) G1 मिनत्ति (for हिनस्ति) D8 [अ]स्त्र तु (for स्म स) —For 31, Ś1 Ñ V B D1–4 6 10 11 subst

849* तेनैक नयन त्यक्त तद्दिपीका व्यशातयत् ।

[D4 मुक्त (for त्यक्त) B2 तत्पीको, D10 उविपीका (corrupt) (for तद्दिपीका) Ñ1 व्यपानयत, D3 [अ]भ्यशातयत (for व्यशातयत्) Ś1 Ñ2 B3 नदे(Ñ2 °दी)पीको व्य(B3 प)शातयत्, D4 तदीपीकस्य शातन (for the post half)
—After 31, D7–9 T2 G2 3 M1 3 ins.

850* दत्त्वा तु दक्षिण नेत्र प्राणेभ्य परिरक्षित ।

[T2 तद्, M3 स (for तु). G2 स दत्त्वा (for दत्त्वा तु) ], while G1 ins after 31 :

851* तदा प्रभृति काकानामेकमक्षि विधीयते ।

32 Ñ2 V B D6 om 32 —$^{a}$) D6 7–9 S रामाय (for ते तदा) Ś1 D1–4 8–11 G2 नमस्कृत्य —$^{b}$) Ś1 राज्ञो (for राज्ञे) Ś1 D8 11 दशरथस्य —$^{c}$) Ñ1 विसृष्ट (sic). Ś1 D10 मन, D2 11 च (for तु) D6 7–9 S विसृ(G3 सृटि)-ष्टस्तेन वीरे(D8 रामे, G2 धीरे)ण —$^{d}$) G3 प्रपेदेय (for प्रतिपेदे) —After 32, D1 ins.

852* स समार्थाय वक्तव्यो रामो दशरथात्मज ।
यत्तत्पारुपमाश्रित्य सदेये दैवतान्यपि ।

[(l 2) post half sic ]

33 $^{a}$) D3 अकृतं (for मत्कृते) Ñ1 D2 3 11 हि, Ñ2 B1 D6 ते, B2 च, B3 4 D5 8 T2 G M तु, T1 3 तद् (for ऽपि) V काकमात्रेषु D4 तदा वायसमात्रे तु —$^{b}$) B1 समुदीरण (for °रितम्) Ś1 D1–4 8 10 11 G1 ब्राह्मम(D4 °हं ते)स्त्रमुदीरितं, T2 ब्राह्ममस्त्र समीरित —D3 reads $33^{cd}$ after $36^{ab}$ (transp) —$^{c}$) D7 T1 G1 3 Ck t मा, Cm as in text (for मा) B2 D8 T1 2 G3 M2 Cr हरेत, Cm g k as in text (for हरत्) Ś1 Ñ1 D1–4 10 11 मा हरेत्तस्य, Ñ2 D6 हरते मां त्व, V हरते त्वत्त, B1 हरते दुष्ट, B3 मा हरेत्तर्ण, D5 मा हरत त्व, M1 मा हरेत्त त्व, M3 मा हरेत्यक्त (for मा हरत्त्वत्त) B4 तस्माद्रक्षोरिपु त्व तु ❀ Cg हरत् अहरत् ❀ —$^{d}$) Ś1 Ñ2 V B1 D1 4 6 10 11 त्व (Ñ2 V B1 D6 त) क्षमेथा, Ñ1 B2 D3 क्षमेथास्त्व, B3 त रक्षसि, B4 सक्षयेथा, D2 कृपा कार्या (for क्षमसे त) D5 रावण क्षमसे कथ ❀ Ct कस्मात्क्षमसे इत्यवान्तरवाक्यान्ते इत्युक्तवतीति ब्रूहीति वाक्यशेषो द्रष्टव्य इति कतक । बुद्धिस्थ राममेव सोपालम्भ सबोध्य प्रार्थयते इति तीर्थ । त्वत्तस्त्वत्सकाशाद्यो मा मामहरद्धृतवान् ❀

34 Ś1 Ñ1 D1 2(after $41^{ab}$)–4 10 11 read 34–35 (including star passages) (Ś1 D10 om $34^{b}$–$35^{a}$) after 41 (preceded by 859*). Ñ2 V D6 read 34 after 36 —$^{a}$) V B2 4 G1 2 तत् (for स). Ñ2 D6 कुरु त्व (for कुरुष्व). Ś1 Ñ1 D1–4 10 11 T2 कुरुष्व त्व (for स कुरुष्व) Ñ2 V B D1 3 6 महेष्वास, D5 यथो°, D7 9 T1 G1 M1 3 महोत्साह(D7 9 °हा) (for महोत्साह) —Ś1 D10 om (hapl ?) $34^{b}$–$35^{a}$ —$^{b}$) D2 कपिभिस्तैर् (for कृपा मयि) B D6 नरेश्वर, D1 11 M3 नरर्षभ Ñ1 ·· तु नरर्षभ (illeg) —After $34^{ab}$, D7–9 S ins

853* त्वया नाथवती नाथ अनाथा इव दृश्यते ।

[T2 नाथपते, Ct as above (for °वती) —Note hiatus between the two halves T1 3 G2.3 M3 ह्य(G2 अ)नाथेव हि(G3 च) (for अनाथा इव) ❀ Cr अनाथा इवेत्यत्र गुणाभाव आर्ष ❀]

—$^{c}$) B1 2 4 D4 11 आनृशस्य- —$^{d}$) Ñ1 D4 तवैव हि (for त्वत्त एव) Ñ2 V1 B1 2 4 D6 श्रुतो मया (by transp), V2 D4 5 7–9 T1 3 G1 2 मया श्रुत, D1 2 11 श्रुतं मया (for मया श्रुत)

35 Ś1 D10 om $35^{a}$ (cf v l 34) For sequence in Ś1 Ñ1 D1–4 10 11, cf v l 34 Ñ2 V B1 4 D6 read 35 (all except V2, om $^{ef}$) after 41 (preceded by 859*) B3 reads 35 (om. $^{ef}$), $41^{c}$–42 after $47^{ab}$ (including star passages) —$^{a}$) Ñ V B D1–3 6 11 महोत्साह, D4 °सत्त्व (for महावीर्यं) —$^{b}$) Ś1 Ñ V B D1–3 6 10 11 महासत्त्व (for महोत्साह) —After $35^{ab}$, Ñ1 (slightly illeg) ins

854* लीलया सूदितारातिं सर्वक्षत्रकुलेश्वरम् ।
वारुण्यमैन्द्रवायव्य · · · · धारिणम् ।

—Ñ1 cont., while Ś1 Ñ2 V B D1 4 6 10 11 ins after $35^{ab}$

एवमस्त्रविदां श्रेष्ठः सत्त्ववान्बलवानपि ।
किमर्थमस्त्रं रक्षःसु न योजयसि राघव ॥ ३६
न नागा नापि गन्धर्वा नासुरा न मरुद्गणाः ।
रामस्य समरे वेगं शक्ताः प्रतिसमाधितुम् ॥ ३७
तस्य वीर्यवतः कश्चिद्यद्यस्ति मयि संभ्रमः ।
किमर्थं न शरैस्तीक्ष्णैः क्षयं नयति राक्षसान् ॥ ३८
भ्रातुरादेशमादाय लक्ष्मणो वा परंतपः ।
कस्य हेतोर्न मां वीरः परित्राति महाबलः ॥ ३९
यदि तौ पुरुषव्याघ्रौ वाय्विन्द्रसमतेजसौ ।
सुराणामपि दुर्धर्षौ किमर्थं मामुपेक्षतः ॥ ४०
ममैव दुष्कृतं किंचिन्महदस्ति न संशयः ।
समर्थावपि तौ यन्मां नावेक्षेते परंतपौ ॥ ४१ G 5 36 54 B 5 38 40 L 5 35 41

855* महाप्राज्ञं महेष्वासं वेगवन्तमरिंदमम् ।

[ Ś1 Ñ1 D1 3 4 10 transp महाप्राज्ञं and महेष्वासं D2 महाशक्तिं महाप्राज्ञं, D11 महाबाहुं महाप्राज्ञं (for the prior half) B3 वीर्यवतम् (for वेग°) Ñ2 D6 11 अरिंदम, B4 महाबलं Ś1 D10 महावेगमरिंदम (D10 °म) (for the post half) ]

—D4 om 35cd Ñ1 transp cd and ef —c) Ñ V B D2 6 11 अपराजितम्, D7 9 °वारम् (for अपारपारम्) ꣸ Cv m अपारपारं दूरपारम् । अप्राप्यगुणसीमान्तमित्यर्थः ।, Cr g अपारपारं दुरधिगमपारम् । असीममित्यर्थः । दुरधिगमगुणसीममित्यर्थो वा (Cr अपारपारम् । अत्र पारशब्देन कर्मसमाप्तिरुच्यते । अपारा पारा कर्मसमाप्तयो यस्य स इत्यर्थः । निरवधिकापदान इत्यर्थः ) ।, Ck t अपारवारम् (Ck छान्दसो ह्रस्वः ) मर्यादारहितम् ꣸ —d) Ś1 Ñ V B D1 2 6 10 गाम्भीर्ये, D3 11 गम्भीर (for गाम्भीर्यात्) —After 35cd, Ñ1 ins

856* कौसल्याशोकहर्तारं कौसल्याशोकधारिणम् ।

—B1 3 om 35e–36 Ñ2 V1 B2 4 D6 T2 om (hapl) 35ef —f) Ś1 Ñ1 V2 D1–4 10 11 मेदिन्या (for धरण्या) —After 35, Ś1 D10 ins a passage relegated to App I (No 8), while Ñ1 ins after 35

857* वासवास्त्रधरं रौद्रं वासवप्रतिमं युधि ।
रौद्रं रुद्रास्त्रधरं रुद्रविक्रमभूषणम् ।
महाबाहुं महाप्राज्ञं वेगवन्तं महोद्यमम् ।

36 B1 3 om 36 (cf v l 35) D3 transp ab and cd —a) Ś1 D10 एवमस्त्रमिदं श्रेष्ठ —b) D7 9 transp सत्त्ववान् and बलवान् Ñ1 B4 असि (for अपि) —After 36ab (transp), D3 reads 33cd —c) T2 किमस्त्रं किल (for किमर्थमस्त्रं) —d) D9 मोचयसि (for योजयसि) D5 8 T2 M1 3 न योजयति राघव. —After 36, Ñ2 V D6 read 34

37 a) Ñ2 V B1 2 4 D6 च (for [अ]पि) Ś1 Ñ1 D2–4 10 11 देवा न च, B3 च नागा न, D1 देवनाग- (for नागा नापि) —b) Ñ2 V2 B2 D2 5–7 9 सुरा (for [अ]सुरा) Ñ2 V B D6 च राक्षसा (for मरुद्गणा) —cd) Ś1 Ñ V B D1 2 4 6 10 11 तव (B3 °व, D11 न ते) राम रणे, D3 राघवस्य रणे (for रामस्य समरे) B2 4 शक्ता (for वेगं) Ñ2 V B1 3 D6 transp वेगं and शक्ता Ś1 Ñ1 V B1 D1 2 4 6 10 11 प्रति (Ś1 D10 सर्वे, D4 परि)-समासितुं, Ñ2 D7 9 T2 Ck t °समीहितुं, B3 °नवाश्रिता (sic), D3 °समीक्षितुं, Cg tp as in text (for प्रतिसमाधितुम्) B2 4 शरवेगं समासितुं ꣸ Ck t प्रतिसमाहितुम् । प्रतिभटतया स्थित्वा निरोद्धुमित्यर्थः । 'प्रतिसमाधितुम्' इति पाठान्तरम् । तत्रार्थस्त्वं शरणम् ꣸

38 a) Ñ V B D1–4 6 तत्र (for तस्य). D6 वीर्यं च तत् (for वीर्यवत) —b) B4 न हि (for यदि) G1 3 Ck tp मम (for मयि) D2 संग्रह (sic) (for संभ्रम). —c) Ś1 D4 10 11 किं त्वं न, D1 किं त्वत्र, D2 कथं न, D3 कस्मान्न (for किमर्थं) Ś1 Ñ1 D1–4 10 11 सायकैः (for न शरैः) —d) T3 स्वयं (sic) (for क्षयं) Ś1 Ñ V B D1–4 6 10 11 नयसि D4 राघव

39 a) T3 आज्ञाय (for आदाय) Ñ2 V B1–3 D6 आदेशधर्मज्ञो —b) Ñ1 महाबलः, D1 °तप (for परंतप) —d) Ś1 D10 परित्रायति (D10 °येत) राघव, Ñ1 D1–4 11 परित्रायति सुव्रत —For 39cd, Ñ2 V B D6 subst

858* अस्त्रवित्स महावीर्यो न परित्राति मामित ।

[ V2 तत्त्ववित् B3 सु- B4 किं (for स) B1 4 महावीरो V2 परित्रातु (unmetrical) ]

40 a) D1–4 11 यदा (for यदि) Ñ1 सर्वार्तौ नरव्याघ्रौ, Ñ2 V B D6 तौ यदा नरशार्दूलौ —b) Ś1 Ñ V B D1–4 6 10 11 T1 3 G2 3 M1 3 -[अ]ग्नि (for -[इ]न्द्र-) —c) D6 दुराधर्षौ (hypm) (for दुर्धर्षौ) —d) Ñ2 V2 B2 D6 उपेक्षता, G1 °क्षिता (archaic), Cr m g as in text (for °क्षत) B3 किमुपेक्षां करिष्यत

41 For sequence in B-, cf v l 35 —a) Ñ V B D6 11 M1 मन्ये (for किंचित्) —After 41ab, B3 ins l 2 of 862*, while D2 reads 34–35 —D2 om 41cd —c) Ś1 D10 यौ द्वौ (for तौ यन्) —d) Ś1 Ñ1 D10 उपेक्षेता, B3 नो वीक्षेते, B4 D1 3 11 उपेक्षेते, D4 M1 नावेक्षेता (for नावेक्षेते) Ñ V B D6 11 सुदुःस्थिता (V2 B1 3 °तौ) (for परंतपौ) —After 41, Ś1 Ñ V B D1 3 4 6 10 11 ins

859* स वाच्यो राघवो वीर पूर्णचन्द्रनिभानन ।
प्रणामपूर्वं सौहार्दादिमस्नेहं वचनं मम ।
कस्मान्न कुरुषे वीर कृपां मयि नरर्षभ ।

G 5 36 57
B 5. 38 53
L 5 35. 45

कौसल्या लोकभर्तारं सुषुवे यं मनस्विनी ।
तं ममार्थे सुखं पृच्छ शिरसा चाभिवादय ॥ ४२

स्रजश्च सर्वरत्नानि प्रिया याश्च वराङ्गनाः ।
ऐश्वर्यं च विशालायां पृथिव्यामपि दुर्लभम् ॥ ४३

पितरं मातरं चैव संमान्याभिप्रसाद्य च ।
अनुप्रव्रजितो रामं सुमित्रा येन सुप्रजाः ।
आनुकूल्येन धर्मात्मा त्यक्त्वा सुखमनुत्तमम् ॥ ४४

अनुगच्छति काकुत्स्थं भ्रातरं पालयन्वने ।
सिंहस्कन्धो महाबाहुर्मनस्वी प्रियदर्शनः ॥ ४५

[(l 1) Ś1 Ñ1 D1 3 4 10 11 श्रीमान् (for वीर) —(l 2) V1 B1 2 4 प्रणम्य (for प्रणाम-) V1 illeg for पूर्व B4 °नादार्यात् (for मादादात्) Ñ2 सम्राट्, V2 B4 D6 सस्नेह-, B3 सदेश (for सस्नेह) Ś1 Ñ1 D1 3 4 10 11 ममागम्य सहप्रिय (for the post half). —Ś1 Ñ1 D1 3 4 10 11 om l 3 —(l 3) B3 नरेश्वर (for नरर्षभ) ]

—Thereafter Ś1 Ñ1 D1 3 4 10 11 read 34–35 (Ś1 D10 om 34[b]–35[a]), while Ñ2 V B1 4 D6 read 35 (all except V2, om 35[ef]) only

—After 41, D5 7–9 S ins the lines of 5 38 12–16 (var)

[(l 1) T2 -पातन, Cg as in text (for भाषितम्) —(l 2) D5 T1 Cg तथा, T2.3 तदा (for अथ) D5 7–9 T G3 M1 2 हरियूथप (for मारुतात्मज) —D5 om. l 3 —(l 3) M1 देवि राम (by transp) M3 मे (for ते). —(l 4) D5 7–9 T1 3 G3 M दुःखाभिपन्ने (T3 M1 °भूते) च (D7 9 T3 तु), T2 G1 2 दुःखाभिसतप्ते (T2 °पन्न) (for शोकाभिभूते तु) —(l. 5) D5 7–9 S कथंचिद्भवती दृष्टा (by transp) (for the prior half) —(l 6) D6 8 G1 M1 2 Cr इद, Cm g t as in text (for इम) D7 9 शोभने, T3 M1 [अ]निंदिते (for भामिनि) D6 8 T1 2 G M2 3 द्रक्ष्यन्त्यतमनिंदिते (for the post half) ※ Cr m g इम मुहूर्तमस्मिन्मुहूर्ते (Cr g संतम्यर्थ द्वितीया). ※ —(l 7) D5 7–9 S महाबले (for अनिन्दिते). —(l 8) D7 9 लोकान् (for लङ्का) —(l 9) D5 7–9 T2 G1 3 M च (for तु) D5 7 T1 2 ममर (for ममरे) —(l 10) D5 7–9 S राघवस् (for राघवौ) D5 7–9 T1 3 G M1 2 प्रतिनेष्यति (for प्रापयिष्यत) T2 M3 नेष्यति त्वा पुरी प्रति (for the post half) ]

—Thereafter, they all cont

860* ब्रूहि यद्राघवो वाच्यो लक्ष्मणश्च महाबल ।
सुग्रीवो वापि तेजस्वी हरयो वा समागता ।
इत्युक्तवति तस्मिंश्च सीता पुनरथाब्रवीत् ।

[(l 1) T2 ब्रूया, Ck t as in text (for ब्रूहि) —(l 2) T1 3 चापि T2 M3 [s]पि (for second वा) —(l 3) G3 वाक्यम् (for पुनर्) T2 M3 सीता सुरसुतोपमा (for the post half) ]

—T3 M3 further cont

861* उवाच शोकसतप्ता हनूमन्त प्लवगमम् ।

42 For sequence in B3, cf v l 35 —[a]) Ś1 Ñ1 D4 10 लोकगोप्तार, D2 8 °कर्तार (for °भर्तार) —[b]) Ś1 Ñ1 तपस्विनी, B2 यशस्विनी, D10 G1 2 मनस्विन —D5 om. 42[cd] —[c]) B4 त्वं (for त) Ś1 D4 10 मद्(D4 °मा)र्थं(D10 °र्थे), Ñ2 V B D6 राम त्व (V1 सु-, B4 त), Cg k t as in text (for ममार्थे) Ś1 Ñ V B D1–4 6 10 11 पृच्छे (for पृच्छ) —[d]) B4 म- (for च) Ś1 Ñ1 [अ]भिवादन, Ñ2 V B D6 प्रसादये, D1 2 4 [अ]भिवादये, D3 [अ]भिवाद्य च, D10 G2 [अ]भिवादयन्, Cg as in text (for [अ]भिवादय) D11 शिमावक्षभिवादिन (corrupt) —After 42, Ñ2 V B1 2 4 D6 ins, while B3 ins l 2 only after 41[ab]·

862* तत्कुरुष्व महेष्वास कृपा मयि नरर्षभ ।
कथितं चेष्टितं चात्र यदि स्मरसि राघव ।

[(l 2) B4 कथंचित् (for कथित) B4 यदि स्मरति राघव (for the post half) ]

43 [a]) Ś1 D1–4 10 11 सचय, Ñ1 B1.4 मदर्थे, Ñ2 V B2 3 D6 ममार्थे, D9 T2 3 M1 विसृज्य, Cg k t as in text (for स्रजश्च). Ś1 D1–4 10 11 रत्नानि (for -रत्नानि). —[b]) Ñ2 V B D6 प्रियाश्चैव (for प्रिया याश्च) Ś1 Ñ1 D1–4 10 11 प्रिया (D2 स्त्रिय) श्च परमागना —[c]) Ś1 D10 हि (for च) Ś1 D1–4 10 11 विशालाया —[d]) Ñ अभिनंदसि (Ñ1 °ति), V B D6 नाभिनंदसि (B3 °से, B4 °ति) (for अपि दुर्लभम्) Ś1 D1–4 10 11 पृथिव्या योवमन्यत (D2 11 °ते)

44 [a]) D11 भ्रातर (for मातर) D10 transp पितर and मातर Ś1 Ñ V B1 3 D1–4 6 10 11 [उ]भौ, D8 G2 [अ]पि (for [ए]व) —[b]) D1 प्रणम्य (for समान्य) Ś1 D2 3 10 [अ]भिप्रगम्य (for °प्रसाद्य) Ñ1 समान्यामभिराघव (sic), Ñ2 V B D6 योनुमान्य प्रसाद्य च, G3 परिदाय समाद्य च (sic), M1 2 परित्यज्य प्रसाद्य च —[c]) D8 T2 G2 Cr अनुप्रव्राजितो, Cv m g as in text (for °व्रजितो) Ś1 D10 नित्य (for राम) —[e]) Ś1 Ñ V B1 2.4 D1–4 6 10 11 अनुक्रोशेन, B3 अनुरक्तो हि (for आनुकूल्येन) —[f]) D1 त्यक्त्वा ग्राम्यसुख हि तत्, D9 सुत्यक्त्वा सुखमुत्तम

45 D4 om 45 —[a]) Ś1 अनुगच्छत (archaic), V2 °गच्छामि (sic), D10 11 अन्वगच्छत (for अनुगच्छति). —[b]) M2 प्रस्थित (for पालयन्) Ñ2 V B D6 transp भ्रातर and पालयन्

पितृवद्वर्तते रामे मातृवन्मां समाचरन् ।
ह्रियमाणां तदा वीरो न तु मां वेद लक्ष्मणः ॥ ४६
वृद्धोपसेवी लक्ष्मीवाञ्शक्तो न बहुभाषिता ।
राजपुत्रः प्रियश्रेष्ठः सदृशः श्वशुरस्य मे ॥ ४७
मत्तः प्रियतरो नित्यं भ्राता रामस्य लक्ष्मणः ।
नियुक्तो धुरि यस्यां तु तामुद्वहति वीर्यवान् ॥ ४८
यं दृष्ट्वा राघवो नैव वृद्धमार्यमनुस्मरत् ।
स ममार्थाय कुशलं वक्तव्यो वचनान्मम ।
मृदुर्नित्यं शुचिर्दक्षः प्रियो रामस्य लक्ष्मणः ॥ ४९

G 5 36 65
B 5 38 62
L 5 35 54

46 B4 om 46 Ś1 Ñ V B1 D1-4 6 10 11 read 46 after $48^{ab}$ —$^{ab}$) B1 सोह (sic) (for रामे) Ś1 Ñ1 D1-3 10 11 वर्तते मयि, Ñ2 V B1-3 D6 च सदा (B1 तथा) मयि, D7 9 G3 Ct मा ममाचरत्, G1 मा सदाचरन्, Cr m g as in text (for मा समाचरन्) D4 पित्रवर्धत रामेण मात्र-वर्धकृते मयि (sic) —B3 om $46^{cd}$ —$^{d}$) G1 च (for तु) G3 देव (metr), M2 वेत्ति (for वेद) Ś1 Ñ1 D1-4 10 11 मा वेत्ति स, Ñ2 V B1 2 D6 मां जानाति (for तु मा वेद) —After 46, Ś1 ins 864*, while Ñ1 ins

863* सन्निधावपि तदा स्याद्रावणावरजो वली ।
नाराचेन सुतीक्ष्णेन प्राहिणोद्यमसादनम् ।
राक्षसेन्द्र दुरात्मान रावण लोक . । कम् ।
रामानुजो महावीर्य. सुमित्रानन्दवर्धन ।

47 D4 om $47^{ab}$ —$^{a}$) Ñ2 V B D6 ह्री (B3 श्री)-माश्च (for लक्ष्मीवाञ्) —$^{b}$) M1 ज्ञातो (for शक्तो) D8 बहुभाषितु Ś1 Ñ1 D1-3 10 11 शक्तश्च (Ñ1 मुक्तश्च, D8 श्लक्ष्ण च, D11 शूरश्च) बहुजल्पक, Ñ2 V B D6 शूरो न बहुजल्पिता (B4 °त) —After $47^{ab}$, B3 reads 35 (om $^{ef}$) and $41^{c}$-42 —Ś1 om $47^{cd}$ —$^{c}$) V2 B2 D3 5 7-9 T1 2 Ct राजपुत्र- Ñ V B1-3 D1-4 6 10 11 प्रियो राज्ञ, B4 प्रिय प्राज्ञ, D5 G2 M3 प्रिय श्रेष्ठ, Ct as in text (for प्रियश्रेष्ठ) —$^{d}$) D10 सदृग्देवाधिपस्य च

48 $^{a}$) Ś1 V1 D10 मातु, V2 सत (sic), B3 T3 M3 मम, Ct as in text (for मत्त) —$^{b}$) Ś1 D10 सगी, Ñ V B D6 मन्ये, D1 मम, D2-4 11 अग (for भ्राता) —After $48^{ab}$, Ś1 Ñ V B1 D1-4 6 10 11 read 46 —Ś1 B4 om $48^{c}$-$49^{b}$ —$^{c}$) Ñ V B1-3 D1-4 6 10 11 यु (D10 यो) ज्यते, D5 नियुज्य, T3 M2 नियुजेद् (for नियुक्तो) Ñ2 V B1-3 D6 हि (for तु) —$^{d}$) Ñ1 वै वहति (for उद्वहति) Ñ1 D1-4 10 11 धुर्यवत् (for वीर्यवान्) Ñ2 V1 B1-3 D6 स तामुद्वहते धुर, V2 महतामुद्वहते भुव (hypm)

49 Ś1 B4 om $49^{ab}$ (cf v l 48) T1 damaged for $49^{abcd}$ —$^{a}$) Ñ V B1 2 D1 2 10 11 रामस्नेहाद्वसन्ने (Ñ2 °अ . . [illeg ]) त्र (D1 2 10 11 °व), B3 D6 रामस्नेहानुबधेन, D3 रामप्रियो ह्यसन्नेव, D4 रामप्रियो ह्यसौ नित्य —$^{b}$) Ñ V B1-3 D1-9 11 T2 M3 Cr t वृत्तम् (for वृद्धम्) D10 वृत्तमानम् (sic) (for वृद्धमार्यम्) Ñ2 V B1-3 D1-4 6 7-11 G2 अनुस्मरन, D5 6 T2 3 G1 2 M1 2 Cr m g °स्मरेत्, Ct as in text (for °स्मरत्) —After $49^{ab}$, Ñ V2 D1-4 6 10 11 ins, while Ś1 ins after 46

864* सासुरा सहगन्धर्वा भुजगनरदेवता ।
हन्यात्स समरे क्रुद्ध कि पुना रावण रणे ।

[(l 1) D6 11 ससुरा V2 अमुरासर-, D2-4 ससुरासुर-(for सासुरा सह-) D2 11 -गधर्वर्, D3 गधर्वान् (for -गन्धर्वा) V2 -वन- (for नर-) D3 सयक्षोरगराक्षसान् (for the post half) —(l 2) Ś1 D10 निहन्यात्, Ñ1 D11 म हन्यात (by transp ), D3 हन्याच ]

—Ś1 Ñ V B1-3 D1-4 6 10 11 transp $^{cd}$ and $^{ef}$ (including star passages) —$^{cd}$) D4 स मद्वाक्य मकुशलो (for $^{c}$) D1 बहुशस्त्वया, D4 लक्ष्मणस्त्वया (for वचनान्मम) Ś1 D10 मद्वाक्यात्कुशल वाच्यस्त्वया वानरपुगव, Ñ V B D2 3 6 11 स च (Ñ1 D2 11 ते) मद्वचनाद्वाच्य कुशल वलवत्तर (D1 हनुमस्त्वया) ❀ Ck ममार्थाय मत्प्रयोजनोन्मुख्याय मम वचनाद्वक्तव्य इति ❀ —After $49^{cd}$, Ñ1 (slightly illeg ) ins

865* बहुमत्तामिवाशी . . .त्वाभि पुन पुन ।
अभिनन्द्य महाबाहुर्लक्ष्मण शुभलक्षण ।

—Ñ1 cont, while Ś1 (l 3 only) Ñ2 V B D1-4 6 10 11 ins after $49^{cd}$.

866* अप्रमत्तेन काकुत्स्थे भवितव्य त्वयेति च ।
उत्थायोत्थाय वक्तव्यो सौमित्रिर्वचनान्मम ।
कुशल लक्ष्मण दृष्ट्वा सुग्रीव च महाबलम् ।

[(l 1) D4 अप्रमत्तेन Ñ1 त्वया सदा (for त्वयेति च) —(l 2) D4 लक्ष्मणो (for सौमित्रिर्) Ñ1 D1-3 10 11 वचन ल (Ñ1 D3 °नाह्न) क्ष्मणो मम (for the post half) —(l 3) D11 transp कुशल and लक्ष्मण ]

—B4 om $49^{ef}$ —$^{e}$) Ś1 Ñ V B1-3 D1-4 6 10 11 दात (for नित्य) —$^{f}$) Ñ1 लक्ष्मणो राघवप्रिय —After 49, D5 7-9 S ins

867* यथा हि वानरश्रेष्ठ दु खक्षयकरो भवेत् ।
त्वमस्मिन्कार्यनिर्वाहे प्रमाणं हरिसत्तम ।
राघवस्त्वत्समारम्भान्मयि यत्नपरो भवेत् ।

[(l 1) D8 [इ]ह (for हि) —(l 2) D5 8 T1 G M2 3 -निर्योगे (for -निर्वाहे) D7-9 हरियूथप ]

G 5 36 69
B 5 38 61
L 5 35 56

इदं ब्रूयाश्च मे नाथं शूरं रामं पुनः पुनः ।
जीवितं धारयिष्यामि मासं दशरथात्मज ।
ऊर्ध्वं मासान्न जीवेयं सत्येनाहं ब्रवीमि ते ॥ ५०
रावणेनोपरुद्धां मां निकृत्या पापकर्मणा ।
त्रातुमर्हसि वीर त्वं पातालादिव कौशिकीम् ॥ ५१
ततो वस्त्रगतं मुक्त्वा दिव्यं चूडामणिं शुभम् ।
प्रदेयो राघवायेति सीता हनुमते ददौ ॥ ५२
प्रतिगृह्य ततो वीरो मणिरत्नमनुत्तमम् ।
अङ्गुल्या योजयामास न ह्यस्य प्राभवद्भुजः ॥ ५३
मणिरत्नं कपिवरः प्रतिगृह्याभिवाद्य च ।
सीतां प्रदक्षिणं कृत्वा प्रणतः पार्श्वतः स्थितः ॥ ५४

50 $^a$) V2 इम, D3 एव (for इद) Ś1 D2 10 11 तु (for च) Ñ2 V B D6 वाक्य (for नाथ) Ñ1 मन्नाथ त्वमिद ब्रूया, D4 त मे नाथमिद ब्रूया —$^b$) Ñ1 नाथ (for राम) V1 B2 transp शूर and राम —$^c$) Ñ1 धारयाम्येव —$^d$) Ś1 D10 यावन्मासो गमि( D10 भवि )ष्यति, D3 द्वा मासौ रघुनन्दन —$^e$) Ś1 ऊर्ध्वं मास, Ñ2 V B D6 मासादूर्ध्वं ( by transp ) —$^f$) Ś1 Ñ V B1–3 D2 6 10 11 सत्यमेतद्, B4 सत्यमेव ( for सत्येनाह ) B4 [ अ ]ह ( for ते ) D1 3 4 सत्य प्रतिशृणोमि ते —After 50, Ś1 ins 868*

51 Ś1 om 51 —$^a$) Ñ V B1 2 D1–4 6 10 11 [उ]-पसृष्टा, B4 °पृष्टा ( for °रुद्धा ) B3 [ उ ]पकृष्टा ता —$^b$) D2 निकृता ( for निकृत्या ) Ñ1 D1 2 10 11 प्राकृतामिव, Ñ2 V B D6 प्राकृता यथा( B1 मया [ sic ]), D4 प्राज्ञतामिव ( for पापकर्मणा ) D3 निर्जनामिव प्राकृता —$^c$) G2 अर्हति Ñ1 D3 4 10 मज्जन्तीं, Ñ2 V1 B D1 2 6 11 नश्यन्तीं, V2 लप्स्यन्तीं, G2 मा वीर ( for वीर त्व ) —$^d$) Ñ V B D6 पृथिवीमिव( B3 °मपि ) वास( Ñ2 B3 D6 राघ )व, D1 2 4 11 पाताल इव राघव ( sic ), D3 केशवो वसुधामिव, D10 वराह इव मेदिनीं —After 51, Ñ V B D1–3 6 10 11 ins, while Ś1 ins after 50 ( owing to om )

868* सीताया वचन श्रुत्वा हनुमानिदमब्रवीत् ।
सर्वं करिष्यते रामो यथोक्त मैथिलि त्वया ।
यत्तु रामोऽभिजानीयादभिज्ञानमनिन्दिते ।
प्रीतिसजनन तस्य तत्प्रदातु त्वमर्हसि ।
मा निरीक्ष्य तत सर्वं वेण्या ग्रथितमुत्तमम् । [5]

[ (l 1) Ś1 Ñ1 D10 तु वच, D1–3 11 तद्वच ( for वचन ) —(l 2) B2 यदुक्त Ś1 D10 यत्त्वमिच्छसि मैथिलि, Ñ1 D1–3 11 यावदिच्छसि( D2 11 °ति ) मैथिलि ( for the post half ) —For l 3–4, cf v l 5 38 17 —(l 3) V1 B2 येन, D3 युक्त( sic ) ( for यत्तु ) B2 D3 विजानीयाद्( D3 °ते ), D11 [ऽ]भिजानीते —(l 4) Ś1 Ñ1 D2 10 11 इह ( for त्वम् ) B3 प्रत्यय दातुमर्हसि, D1 प्रदातु त ममाहमि, D3 त्रातुमर्हसि मैथिलि ( for the post half ). —After l 4, Ñ1 ins

868( A )* तथा तथा वदिष्येऽ भाषसे त्व यथा यथा ।
वैदेहि कारयिष्येऽह सर्वं व भाषित तव ।
तत सीता बाष्पमुख हनुमन्त महाबलम् ।

—(l 5) Ñ1 निरीक्ष्य मा ( by transp ), D3 मा निशम्य Ñ2 D6 तदा ( for तत ) D2 सीता ( for सर्वं ) Ś1 Ñ1 V2 D1–3 10 वेणी, D11 वेण्युद- ( for वेण्या ) ]

52 $^a$) D4 वेणी ( for वस्त्र- ) Ś1 Ñ1 D1–3 10 11 वेणीं मुक्त्वा ददौ तस्मै, Ñ2 V B D6 विमुच्य प्रददौ तस्मै —$^b$) D5 G1 दिव्य ( for दिव्य ) D6 शुचिं ( for शुभम् ) Ñ V B D1 2 6 11 मणिरत्न हनूमते —$^c$) Ñ1 B3 D2 11 G2 3 प्रदेय, Ñ2 V B2 D6 देयोय, B4 देय च ( for प्रदेयो ) —$^d$) D1 सा त ( for सीता ) D3 तदा ( for ददौ ) Ś1 Ñ V B D2 6 10 11 सीता सुरसुतोपमा

53 Ñ2 V B D6 om 53 —$^a$) D3 तु त ( for ततो ) —$^b$) Ś1 Ñ1 D1–4 10 11 मणि वेणीशयं शुभ —$^c$) D1–5 G2 3 M1 2 अंगुल्या, Cv r m g k t as in text ( for अङ्गुल्या ) —$^d$) Ś1 प्राभुयाद्, Ñ1 G3 प्रभवद्, D3 प्रविशद् ( for प्राभवद् ) Ś1 D1–4 10 11 भुजे ( for भुज )

54 $^a$) Ñ2 V B D3 6 हरिवर ( for कपिवर ) —$^b$) Ś1 Ñ1 D3 4 10 सम्प्रगृह्य, D1 2 11 स सगृह्य ( for प्रतिगृह्य ) B2 [ अ ]भिवद्य, B3 [ अ ]भिनद्य. —After 54$^{ab}$, Ś1 Ñ1 D1–4 10 11 ins

869* आचार्यमिव शिष्यो हि विनीतवदुपस्थित ।

[ D11 इति ( for इव ) D4 उपस्थित Ñ1 D2 11 विनत इदम ब्रवीत् ( for the post half ) ]

—Thereafter D1 3 cont

870* दत्त्वा तु त मणि सीता इद प्राह शुचिस्मिता ।
अनेन ते हरिश्रेष्ठ मणिरत्नेन राघव ।
उपनीतेन दृष्टाहमिति नून स मस्यते ।
त गृहीत्वा मणिवर हनुमान्प्लवगर्षभ ।

[ (l 1) Note hiatus between the two halves D1 सुनिस्मिता ( for शुचि° ) ]

—$^c$) B2 D3 4 G2 प्रदक्षिणीकृत्य —$^d$) Ñ2 V B D1 6 प्राजलि ( for प्रणत ) Ś1 Ñ1 D1–3 10 11 पार्श्वत प्राजलि स्थित —After 54, Ñ2 V B D6 ins, while Ñ1 D2 11 cont after 869*

871* आपृच्छे त्वा विशालाक्षि नोत्कण्ठा कर्तुमर्हसि ।

[ Ñ1 D2 11 आपृच्छामि हि ते( D2 त्वा ) देवि ( for the prior half ) Ñ1 illeg for नोत्कण्ठा ]

—Ñ1( partly illeg ) further cont

हर्षेण महता युक्तः सीतादर्शनजेन सः ।
हृदयेन गतो रामं शरीरेण तु विष्ठितः ॥ ५५

मणिवरमुपगृह्य तं महार्हं
जनकनृपात्मजया धृतं प्रभावात् ।
गिरिवरपवनावधूतमुक्तः
सुखितमनाः प्रतिसंक्रमं प्रपेदे ॥ ५६

G 5 36 77
B 5 38 70
L 5 35 66

इति श्रीरामायणे सुन्दरकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

872* आगमिष्यति ते भर्ता * * * * * * * * ।
* * * * * * * * राम पश्य सलक्ष्मणम् ।
इति सधा बहुधा समाश्वस्य च जानकीम् ।

55 B1 om 55 —[a]) Ś1 Ñ1 D1–4 10 11 [आ]विष्ट (for युक्त) —[b]) B3 M2 सदर्शनेन (for -दर्शनजेन) B4 D3 च (for स) Ñ2 V2 D6 सीताया दर्शनेन स (D6 च) —[d]) Ñ2 V1 M2 च (for तु) Ś1 B4 D10 11 त्वधिष्ठित, Ñ1 T3 [अ]त्र धि(T3 नि)ष्ठित, B3 [अ]प्यधिष्ठित, D1 4 6 च(D1 तु) धिष्ठित, D2 तु तिष्ठति, D3 तु चेष्टित (for तु विष्ठित) D7 9 लक्ष्मण च सलक्षण —After 55, B3 ins

873* श्रुत्वा तद्वचन सीता हर्षसपूर्णमानसा ।

56 V1 reads 56 and colophon in marg —[a]) B3 M3 मणिरत्नम्, D11 °प्रवरम् (hypm) (for °वरम्) G3 उपगम्य (for °गृह्य) Ś1 B2 D10 वरार्हं, B3 महात, G3 महा मा (for महार्हं) —[b]) Ś1 [अ]र्पितं, D3 [आ]हृत, I2 (also) वृत (for धृत) D1 2 11 प्रयत्नात्, D3 om (for प्रभावात्) D. 8 धृतप्रभाव —[c]) Ñ2 V B D6 द्रुम (B4 °त) इव, D1–4 11 T3 G M2 3 गिरिरिव (D4 °. .) (for गिरिवर-) Ś1 Ñ V B D1 2 4 6 10 11 मूर्ति, D3 मूर्धा (for मुक्त) —[d]) D8 परिमक्रम (for प्रति°) G2 प्रतस्थे, G3 . दे (for प्रपेदे) Ś1 Ñ D1–4 10 हृषि(Ñ2 क्षुभि)ततनुर्हनुमॉस्तदा बभूव (Ś1 D10 °मान्बभूव सद्य), V B D6 क्षुभिततनुर्हनुमान्कृतस्तदानीं, D11 हृषितमना स तदा बभूव वीर

Colophon V1 reads colophon in marg (cf v l 56) —*Sarga name* Ś1 Ñ V1 B1 3 D6 10 मणिप्रदान, V2 D3 सीता मणिप्रदान (D3 °न), B2 4 चूडामणिप्रदान, D1 2 11 मणिप्रदानिक, D4 हनुमतो मणिप्रदान —*Sarga no* (figures, words or both) Ñ1 B3 4 D1 2 4 10 11 om, Ś1 D5 7–9 T G M1 3 38, V1 M2 37, V2 27, D3 40 —After colophon, G concludes with श्रीरामाय नम

# ३७

G. 5 00 0 B 5 39 1 L 5 36 1 मणिं दत्त्वा ततः सीता हनूमन्तमथाब्रवीत् ।
अभिज्ञानमभिज्ञातमेतद्रामस्य तत्त्वतः ॥ १
मणिं तु दृष्ट्वा रामो वै त्रयाणां संस्मरिष्यति ।
वीरो जनन्या मम च राज्ञो दशरथस्य च ॥ २
स भूयस्त्वं समुत्साहे चोदितो हरिसत्तम ।
अस्मिन्कार्यसमारम्भे प्रचिन्तय यदुत्तरम् ॥ ३
त्वमस्मिन्कार्यनिर्योगे प्रमाणं हरिसत्तम ।
तस्य चिन्तय यो यत्नो दुःखक्षयकरो भवेत् ॥ ४
स तथेति प्रतिज्ञाय मारुतिर्भीमविक्रमः ।
शिरसावन्द्य वैदेहीं गमनायोपचक्रमे ॥ ५
ज्ञात्वा संप्रस्थितं देवी वानरं मारुतात्मजम् ।
बाष्पगद्गदया वाचा मैथिली वाक्यमब्रवीत् ॥ ६
कुशलं हनुमन्ब्रूयाः सहितौ रामलक्ष्मणौ ।
सुग्रीवं च महामात्यं वृद्धान्सर्वांश्च वानरान् ॥ ७
यथा च स महाबाहुर्मां तारयति राघवः ।
अस्माद्दुःखाम्बुसंरोधात्त्वं समाधातुमर्हसि ॥ ८
जीवन्तीं मां यथा रामः संभावयति कीर्तिमान् ।
तत्त्वया हनुमन्वाच्यं वाचा धर्ममवाप्नुहि ॥ ९

## 37

☞ Ñ2 V B D6 om Sarga 37 M2 begins with श्रीरामाय नमः

1 $^{a}$) D11 तदा (for ततः) —$^{b}$) Ś1 Ñ1 D1 2 4 10 11 वानरं वाक्यमब्रवीत् —$^{c}$) D4 प्रतिज्ञानम्, D6 (marg gloss ज्ञातमेव) (for अभिज्ञातम्) Ś1 Ñ1 D2 3 10 अनु (D2 3 °भि)ज्ञातमभिज्ञानम् —$^{d}$) T1 2 इदं (for एतद्) D3 8 G2 धीमतः (for तत्त्वतः)

2 $^{a}$) D6 दत्त्वा (sic) (for दृष्ट्वा) D7–9 T1 2 transp तु and दृष्ट्वा Ś1 Ñ1 D1–4 10 11 M1 मणिं तु (D3 च) रामो (D2 स तु) दृष्ट्वैव (M1 वै दृष्ट्वा) —$^{b}$) D10 स (for सं-) —$^{c}$) D8 मम चैव जनन्याश्च

3 $^{a}$) G2 त्वत्- (for त्वं) T1 G2 3 M2 Ct समुत्साह- (M2 °हः), Ck as in text (for °त्साहे) Ś1 D10 मम यश्च महोत्साहो, Ñ1 मया भूयः समुत्साहो, D1 2 स भूयः स्वयमुत्साहाच्, D3 स भूयस्तु समुत्साहो, D4 स भूयश्च समुत्साहात्, D11 स भूयः सहसोत्साह- —$^{b}$) Ś1 Ñ1 देशितो, D9 नोदितो, D11 -साधितो (for चोदितो) Ñ1 हरिपुंगव, D2 5 11 °सत्तम, D4 वानरर्षभ (for हरिसत्तम) —$^{c}$) D3 यस्मिन् (for अस्मिन्) D5 8 कार्यं (for कार्य-) D7 9 Ck t -समुत्साहे (for समारम्भे) —$^{d}$) G2 विचिन्तय G1 3 तद् (for यद्) Ś1 Ñ1 D1–4 10 11 चि(Ś1 प्रचि[hypm])-न्तयेदुत्तरोत्तरं

4 T2 om 4$^{ab}$ —$^{a}$) D2 अस्य (for अस्मिन्) Ś1 D10 -संयोगे (for -निर्योगे) —$^{b}$) M2 कपि- (for हरि-) Ś1 Ñ1 D1 2 4 10 11 यूथप, D3 -पुंगव (for -सत्तम). —D4 om 4$^{c}$–5 —$^{c}$) D5 8 T2 3 M1 3 Cg चिन्तयतो, Cr t as in text (for °य यो) Ś1 Ñ1 D3 तत्त्वं चिन्तय यत्नेन, D1 11 तत्तद्विचिन्तयेर्यत्नाद् (D11 °त्नेन), D2 तत्र चिन्तय यत्नाद् —$^{d}$) Ś1 Ñ1 D1–3 10 11 क्षयकरं (for °करो) D1 मम (for भवेत्). —After 4, D7–9 T2 (before 4$^{cd}$) G M1 ins, while T1 3 M3 ins after 4$^{ab}$

874* हनूमन्यत्नमास्थाय दुःखक्षयकरो भव ।

5 D4 om 5 (cf v l 4). —$^{a}$) Ś1 तत् (for स) Ñ1 प्रतिश्रुत्य, D6 तदा° (for प्रतिज्ञाय) —$^{c}$) ⁎ Cg आवन्द्येति पदच्छेदः ⁎

6 $^{a}$) D4 ततः (for ज्ञात्वा) D1 नु (for सं-) D11 -स्थिते (for स्थितं) Ś1 D10 वीरं (for देवी) —$^{b}$) D7 T1 3 G2 पवनात्मजं, D9 वानरा° (for मारुता°). —$^{c}$) Ś1 Ñ1 D1 2 4 10 11 -पीडितया, D3 -सगद्गया (for -गद्गदया) —$^{d}$) D1 वानरं (for मैथिली)

7 $^{a}$) Ś1 Ñ1 D1 2 4 10 11 कौशल्यं (for कुशलं) D3 7 9 हनुमन्कुशलं (by transp). D1 6 ब्रूयात्, D2 ब्रूहि, D4 पृष्ट (sic) (for ब्रूयाः) —$^{b}$) Ś1 D10 सह तौ (for सहितौ) —$^{c}$) Ś1 D10 च महामानं, Ñ1 D3 11 च (D11 स) महामात्यं (for च महामात्यं) —$^{d}$) D4 चान्यांश् (for सर्वांश्) D5 7 9 transp वृद्धान् and सर्वांश् D3 अन्यांश्च हरियूथपान् —After 7, D5 7–9 S ins

875* ब्रूयाश्च वानरश्रेष्ठ कुशलं धर्मसंहितम् ।

8 = 5 38 22 Ś1 Ñ1 D2 4 10 11 om 8 D1 3 transp 8 and 9 —$^{a}$) D7 तथा (for यथा) D1 सु- (for स) M3 स च (by transp) —$^{c}$) D1 3 च दुःख (for दुःखाम्बु) —$^{d}$) D1 तत्समाधातुमर्हसि

9 D1 3 transp 8 and 9 —$^{a}$) D9 मा (for मां) —$^{b}$) G1 सतारयति, Cg as in text (for संभावयति) Ś1 D10 वीर्यवान् (for कीर्तिमान्) —After 9$^{ab}$, Ñ1 ins

876* वीर्यवाञ्शीलसंपन्नो लक्ष्मणश्च महाबलः ।

—$^{c}$) Ś1 T3 स त्वया, Ñ1 त्वया च, D5 M3 Cg तत्तथा (for तत्त्वया) Ś1 D3 वाच्यो, Ñ1 वाच्यौ (for वाच्यं) D1 4 10 तथा स (D1 स त्वया) हनुमन्वाच्यो, D2 11 तत्त्वया (D11

नित्यमुत्साहयुक्ताश्च वाचः श्रुत्वा मयेरिताः ।
वर्धिष्यते दाशरथेः पौरुषं मदवाप्तये ॥ १०
मत्संदेशयुता वाचस्त्वत्तः श्रुत्वैव राघवः ।
पराक्रमविधिं वीरो विधिवत्संविधास्यति ॥ ११
सीतायास्तद्वचः श्रुत्वा हनुमान्मारुतात्मजः ।
शिरस्यञ्जलिमाधाय वाक्यमुत्तरमब्रवीत् ॥ १२
क्षिप्रमेष्यति काकुत्स्थो हर्यृक्षप्रवरैर्वृतः ।
यस्ते युधि विजित्यारीञ्शोकं व्यपनयिष्यति ॥ १३
न हि पश्यामि मर्त्येषु नामरेष्वसुरेषु वा ।
यस्तस्य वमतो बाणान्स्थातुमुत्सहतेऽग्रतः ॥ १४
अप्यर्कमपि पर्जन्यमपि वैवस्वतं यमम् ।
स हि सोढुं रणे शक्तस्तव हेतोर्विशेषतः ॥ १५
स हि सागरपर्यन्तां महीं शासितुमीहते ।
त्वन्निमित्तो हि रामस्य जयो जनकनन्दिनि ॥ १६
तस्य तद्वचनं श्रुत्वा सम्यक्सत्यं सुभाषितम् ।
जानकी बहु मेनेऽथ वचनं चेदमब्रवीत् ॥ १७
ततस्तं प्रस्थितं सीता वीक्षमाणा पुनः पुनः ।
भर्तुः स्नेहान्वितं वाक्यं सौहार्दादनुमानयत् ॥ १८ G 5 0 0 B. 5. 39 19 L 5 36 17

---

त्वया स ) हनुमन्वाच्यो, D3 तथा त्वया स वक्तव्यो ❀ Cg तत्तथा क्षव्ययमेतत् ❀ —d ) D4 समासुहि ( for अवा° ) Ñ1 श्रेष्ठौ नरवरात्मजौ —After 9, Ñ1 ins ( partly illeg )

877* . . . . . . . . वानराणां शो वच ।
ततो भवान्हरिश्रेष्ठ धर्ममाप्नोत्वनुत्तमम् ।

10 a ) Ś1 D10 युक्त स, Ñ1 D1 2 4 7 9 11 -युक्तस्य, D3 सयुक्ता ( for युक्ताश्च ) —D6 reads 10b in marg —b ) Ś1 D10 वाक्य, Ñ1 D2–4 11 वाच ( for वाच ) D2 G2 3 M3 त्वया ( for मया ) Ś1 Ñ1 D2–4 10 11 [ ई ]रिता ( Ś1 D10 °त ) ( for [ ई ]रिता ) D1 वाचं स्मृत्वा मयेरिता —c ) Ś1 D10 विवि( D10 वर्धि )ष्यते दाशरथि

11 a ) T G3 M2 -युता, Cm t as in text ( for -युता ) T G3 M2 वाच ( for वाचस् ) Ś1 D3 4 10 स हि मे त्व ( D10 त )त्समायुक्त( D3 °क्ता, D4 °क्ता ), Ñ1 इद मे म समादाय, D1 पौरुष तत्समाधाय, D2 इह मे त्वत्समायुक्तो, D11 इदमेतत्समाधाय —b ) D1 2 4 11 वाच ( for त्वत्त ) Ś1 Ñ1 D10 वच श्रुत्वा च ( for त्वत्त श्रुत्वैव ) —c ) T2 G2 रामो ( for वीरो ) D7–9 पराक्रमे मति वीरो —d ) D11 सम्प्रधास्यति ( for संवि° )

12 a ) D8 T2 M1 3 वचन ( for तद्वच ) G1 तस्यास्तद्वचन श्रुत्वा —b ) Ñ1 illeg , D2–4 11 पवनात्मज ( for मारुता° ) —c ) T3 शिरसा ( for शिरसि ) Ś1 D4 6 10 T2 आदाय ( for आधाय )

13 b ) D2–6 8–11 G3 M1 हर्यक्ष( D2 °क्षै ) ( for हर्यृक्ष ). D6 युत , M3 कृत ( sic ) ( for वृत ) Ñ1 -प्रवरास्थित , T2 प्लवंगर्युत ( for प्रवरैर्वृत ) —c ) D3 ततो, D1 यस्तु, D11 यस्मै ( for यस्ते ) M1 देवि ( for युधि ) Ś1 D1 2 4 10 T [ अ ]रिं ( for [ अ ]रीन् ) D11 विनिर्जित्य ( for विजित्यारीन् ) —d ) D11 व्यपनुदिष्यति ( for व्यपनयिष्यति ) Ś1 Ñ1 D3 10 शोक च( D3 ते ) व्यपनेष्यति ❀ Cr व्यपनयिष्यति व्यपनेष्यति ❀

14 Ś1 om 14 —ab ) D10 स ( for हि ) D3 राक्षसेषु ( for नामरेषु ) D10 [ अ ]पि, G1 M1 2 च ( for वा ) D2 सुरेष्वप्यसुरेषु च, D4 8 11 G2 नासुरेष्वमरेषु वा( D4 च ), D6 7 9 T2 M3 नासुरे( T2 दानवे )षु सुरेषु वा ( for b ) Ñ1 तत्र पश्यामि लोकेस्मिन्नसुरेषु सुरेषु वा —c ) D3 क्षपतो, D8 T1 3 G1 2 M क्षिपतो, Ck t as in text ( for वमतो ) D1 2 4 10 11 यस्तस्योद्गम( D10 °द्ग )तो बाणान् .

15 a ) Ś1 D10 अथ ( for first अपि ) —b ) M2 मम ( for यमम् ) —c ) Ś1 Ñ1 D1 2 4 10 11 विसोढु, G1 हि सोढा ( for हि सोढु ) D3 नाश्रयेद्युधि सक्रुद्धस्

16 Ś1 om 16 —a ) Ñ1 D3 4 10 11 न स, D1 य स, D2 न च, M1 स तु, M3 न हि, Cg as in text ( for स हि ) —b ) D7 9 G3 Ck t साधितुम् ( for शासितुम् ) D1 2 7 9–11 Ct अर्हति, Ck as in text ( for ईहते ) —c ) Ñ1 D1 2 4 10 11 -निमित्त, Ck t as in text ( for -निमित्तो )

17 a ) Ś1 D10 सम्यक् ( for श्रुत्वा ) —b ) D1 2 सात्व, D11 साधु ( for सत्यं ) Ś1 D10 सा श्रुत्वा हि सुभाषित, Ñ1 D3 4 सम्यक्सात्व प्र( D3 °क्सात्वेन, D4 °क्साधु प्र )भाषित —c ) Ś1 Ñ1 -मन्येव, D1 2 4 10 म( D10 -मा )न्यैव, D6 -मान्याथ, D7–9 T2 मेने त, D11 मत्वैव ( for मेनेऽथ ) D3 बहुवचोक्तम् . —d ) Ś1 Ñ1 D1 2 10 11 मैथिली ( Ś1 D10 वानर ) वाक्यमब्रवीत्, D3 4 T2 इदं( D4 ततो ) वचनमब्रवीत्

18 Ś1 om 18 —a ) D4 हरि ( for ततस् ) Ñ1 G1 2 स- ( for त ) D3 तत सप्रस्थित सीता —b ) D1–5 7 9 11 वीक्ष्यमाणा, D10 वक्ष्यमाण ( for वीक्षमाणा ) —c ) D2–4 7–9 11 T1 3 M3 Cr g t भर्तृ , Cv m k as in text ( for भर्तु ) G1 स्नेहादिद ( for स्नेहान्वित ) D2 11 भर्तु , D4 माध्वी ( for वाक्य ) D1 भर्तृस्नेहाद्विवक्त त ( sic ) —d ) D. G2 M1 अन्वमानयत् ( for अनु° ) D1 2 11 सौहृदादन्वमानयत् , D3 10 साहार्दादिदमब्रवीत् , G1 सौहाद दवदत्तदा ❀ Cv r m अनुमानयत्( Cv अनुमानयन्ती ) सम्मानयन्ती ( Cv आर्षत्वाल्लिङ्गव्यत्यय । , so also Cr ), Cg अनुमानयदन्वमानयत् । , Ck t अनुमानयदपूजयत् ❀

G 5 00 0
B 5 39 20
L 5 36 18

यदि वा मन्यसे वीर वसैकाहमरिंदम ।
कस्मिंश्चित्संवृते देशे विश्रान्तः श्वो गमिष्यसि ॥ १९
मम चेदल्पभाग्यायाः सांनिध्यात्तव वीर्यवान् ।
अस्य शोकस्य महतो मुहूर्तं मोक्षणं भवेत् ॥ २०
गते हि हरिशार्दूल पुनरागमनाय तु ।
प्राणानामपि संदेहो मम स्यान्नात्र संशयः ॥ २१
तवादर्शनजः शोको भूयो मां परितापयेत् ।
दुःखाद्दुःखपरामृष्टां दीपयन्निव वानर ॥ २२
अयं च वीर संदेहस्तिष्ठतीव ममाग्रतः ।
सुमहांस्त्वत्सहायेषु हर्यृक्षेषु हरीश्वर ॥ २३
कथं नु खलु दुष्पारं तरिष्यन्ति महोदधिम् ।
तानि हर्यृक्षसैन्यानि तौ वा नरवरात्मजौ ॥ २४
त्रयाणामेव भूतानां सागरस्येह लङ्घने ।
शक्तिः स्याद्वैनतेयस्य तव वा मारुतस्य वा ॥ २५
तदस्मिन्कार्यनिर्योगे वीरैवं दुरतिक्रमे ।
किं पश्यसि समाधानं त्वं हि कार्यविदां वरः ॥ २६
काममस्य त्वमेवैकः कार्यस्य परिसाधने ।
पर्याप्तः परवीरघ्न यशस्यस्ते बलोदयः ॥ २७
बलैः समग्रैर्यदि मां रावणं जित्य संयुगे ।
विजयी स्वपुरं यायात्तत्तु मे स्याद्यशस्करम् ॥ २८

---

19 a) D1 3 त्व, T2 मा (for वा) Ś1 D10 तावद्, Ñ1 D1 2 4 11 तात (for वीर) —c) D11 G3 कस्मिंश्च —d) D2 गमिष्यति

20 a) Ś1 Ñ1 D1–3 7 9–11 T1 2 G1 चैव, D4 8 वापि (for चेद्) D4 भागाया (for -भाग्याया·) —b) D3 T1 3 सांनिध्य (D7 °ध्ये) (for °ध्यात्) Ś1 D10 धीमत, D5 7–9 T2 (also) G1 M3 वानर (for वीर्यवान्) D1 सांनिध्ये भव वीर्यवान्, D11 सांनिध्याद्वीर्यवांस्तव —For 20cd, Ś1 Ñ1 D1–4 10 11 subst.

878* शोकस्यास्य विपारस्य मुहूर्तं स्यादपि क्षय ।

[D2 11 [अ]थ (for [अ]स्य) Ñ1 विशाल्य, D4 विनाशश्च, D10 उपारस्य (for विपारस्य) D3 अपारस्यास्य शोकस्य (for the prior half) D1 3 यदि (for अपि) D4 क्षण (for क्षय)] —Thereafter Ñ1 cont (partly illeg)

879* पश्यामि त्वा यावदह तावत्तौ रामलक्ष्मणौ ।
सुग्रीव च महात्मान ...... ।

21 Ś1 D10 om 21–22 —a) Ñ1 D7 9 T1 Ct ततो, Ck as in text (for गते) D5 [ऽ]पि, M1 Ck तु (for हि) Ñ1 कपि (for हरि-) G हरिशार्दूले —b) T3 च (for तु) D1 पुनरापन्नाय अपि (sic), D2 8 पुनरावृत्तये (D3 °गामिनि) त्वयि, D4 पुनरामालये त्वयि (sic), D11 पुनरप्यागमे त्वयि —d) D3 नास्ति (for स्यान्न) D2 4 11 [अ]स्ति (for [अ]त्र)

22 Ś1 D10 om 22 (cf v l 21) —a) Ñ1 D1–4 11 तव चा(D4 स, D11 त्व)दर्शन चापि (D3 वीर) —b) G1 प्रति (for परि) D1 तापयिष्यति (for परितापयेत्) —cd) D2 4 दुःखे (for दुःखाद्) D3 (marg) T1 दुःख, Cr m g k t as in text (for दुःख) Ñ1 D3 4 पराभूता, D2 -परा भूत्वा (for परामृष्टां) M2 इह (for इव) Ñ1 D2 4 दुर्मनस्कामभागिनीं (D2 °स्का विभागिनि), D1 अनाथा दुःखभागिनीं (for d) D1 11 दुःखे दुःखतरा (D11 °र) भूत्वा दुर्मनस्कामभागिनीं ※ Cr दुःखपरम्परामिति पाठे दुःखपरम्परामृष्टा मा दुःख भूयो दीपयन्निव उद्बोधयन्निव दीपयेदिति सबन्ध ।, Cm दुःख दुःखपरामृष्टामिति पाठे दुःख मा दीपयन् ज्वलयन्निव परितापयेदिति सबन्ध ※

23 a) D4 अह (sic) (for अय). Ś1 D10 तु (for च) —b) D11 इह (for इव) —c) Ś1 D6 10 तत, D2 सु, D7 च, Ck t as in text (for त्वत्-) G2 -सकाशेषु, Ck t as in text (for -सहायेषु) D4 11 मम हस्त (D11 सुमहत्सु) सहायेषु —d) D11 हर्येषु (subm), G3 हर्यक्षेषु (for हर्यृक्षेषु) Ñ1 कपीश्वर, D1 6 7 9 11 G1 Ck t हरीश्वर (G1 °रा)

24 a) Ś1 D8 कथ तु, Ñ1 D3 11 कथ हि, D1 कथंचित्, D2 10 कथ न Ñ1 D2–6 11 दुःपार (for दुष्पार) —b) D3 महार्णव (for महोदधिम्) —c) D1–3 6–11 ह(D9 ति)र्यक्ष (for हर्यृक्ष)

25 a) Ś1 D2–4 10 G1 अपि, Ck t as in text (for एव) —b) Ś1 D1 10 [अ]पि, Ñ1 T3 M1 3 [अ]स्य, D3 अभि, D4 अति, D6 [उ]प-, D11 G3 [इ]व (for [इ]ह) —Ś1 om 25c–27b, D10 om 25c–27a —d) D11 च (for second वा)

26 Ś1 D10 om 26 (cf v l. 25) —a) T1 3 G1 त्वम् (for तद) D7 एव (for अस्मिन्) D1 2 11 -स- (for -निर्) —b) D1 11 धी(D11 वी)रैश्च (for वीरैव) D2 देव हि दुरतिक्रम —c) D2 11 त्व (for कि) Ñ1 D7 9 पश्यसे —d) D3–5 8 G2 3 वर

27 Ś1 D10 om 27ab and 27a respv (cf. v l 25) —a) T2 राघवस्य D7 एक (for एव) —b) D3 शक्त कार्यस्य साधने —c) D1 5 11 T3 M2 -वीरघ्नो (for °घ्न) —d) D2 4 यशसस् (for यशस्यम्) D2 4 11 तु (for ते) Ś1 Ñ1 D1 2 4 7 9 10 T1 M1 3 Ck फलोदय (D4 °ये) (for बलो°) D1 यशसस्तुल्यफलोदय (hypm)

28 Ś1 reads 28 in marg —a) Ś1 Ñ1 D1 2 4 10 11 समस्तैर् (for °ग्रैर्) Ś1 Ñ1 D7 9 युधि (for यदि) —b) Ś1

बलैस्तु संकुलां कृत्वा लङ्कां परबलार्दनः ।
मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥ २९
तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः ।
भवेदाहवशूरस्य तथा त्वमुपपादय ॥ ३०
तदर्थोपहितं वाक्यं सहितं हेतुसंहितम् ।
निशम्य हनुमाञ्शेषं वाक्यमुत्तरमब्रवीत् ॥ ३१
देवि हर्यृक्षसैन्यानामीश्वरः प्लवतां वरः ।
सुग्रीवः सत्त्वसम्पन्नस्तवार्थे कृतनिश्चयः ॥ ३२
स वानरसहस्राणां कोटीभिरभिसंवृतः ।
क्षिप्रमेष्यति वैदेहि राक्षसानां निबर्हणः ॥ ३३
तस्य विक्रमसम्पन्नाः सत्त्ववन्तो महाबलाः ।
मनःसंकल्पसंपाता निदेशे हरयः स्थिताः ॥ ३४
येषां नोपरि नाधस्तान्न तिर्यक्सज्जते गतिः ।
न च कर्मसु सीदन्ति महत्स्वमिततेजसः ॥ ३५
असकृत्तैर्महोत्साहैः ससागरधराधरा ।
प्रदक्षिणीकृता भूमिर्वायुमार्गानुसारिभिः ॥ ३६
मद्विशिष्टाश्च तुल्याश्च सन्ति तत्र वनौकसः ।
मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसंनिधौ ॥ ३७
अहं तावदिह प्राप्तः किं पुनस्ते महाबलाः ।
न हि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जनाः ॥ ३८
तदलं परितापेन देवि शोको व्यपैतु ते ।
एकोत्पातेन ते लङ्कामेष्यन्ति हरियूथपाः ॥ ३९

G 5 0 0
B 5 39 40
L 5 36 39

---

Ñ1 D1 2 4 10 11 विनिर्जित्य( D1 2 11 °जित्य च ) दशानन, D3 जित्वा रावणमाहवे ※ Cg जित्य जित्वा।, Ck विजित्य मा गृहीत्वा।, Ct जित्वा विजयी सन्मा गृहीत्वा ※ —c) D3 G1 2 M3 स्वां( M3 स्व ) पुरीं, D10 सुपुर, G3 M1 स्व पुर ( for स्वपुर ) Ś1 Ñ1 D1–4 10 11 रामो ( for यायात् ) —d) Ś1 Ñ1 यत्तत्स्याद्य( Ñ1 °+ )शस्कर, D1–4 10 11 नयेत्तत्स्याद्यशस्करं, D7 9 G3 M1 तत्तस्य सदृश भवेत् —After 28, Ś1 Ñ1 D1–4 10 11 ins

880* सर्वराक्षसभर्तारं सूदयित्वेह रावणम् ।
नयेन्मां यदि काकुत्स्थ परं तत्स्याद्यशस्करम् ।
यथाहं तस्य वीरस्य वञ्चयित्वा हृता बलात् ।
रक्षसा तद्भयादेव तथा नार्हति राघव ।

[ Ś1 Ñ1 D10 om l 1 and 2 D11 reads l 1 and 2 after l 3 —(l 1) D3 सूदयेच्च ( for °यित्वा ) —(l 3) D1 प्रमथ्यापहृता बलात, D3 पापिनोपाधिना हृता ( for the post half ) —(l 4) Ñ1 रक्षसां D4 [अ]र्हसि ]

29 a) D3 बलै सु-, D5 8 G2 M3 Cr शरैस्तु, Ck t बलैस्तु ( as in text ) D4 10 सकुल ( for सकुला ) —b) D3 T1 बलार्दन ( for °र्दन ) D2 लका च रघुनन्दन —c) D1 11 मा ( for मां )

30 a) T2 यद् ( for तद् ) —b) G1 इह, G3 इव ( for महा ) —c) D3 भवति ( for भवेद् ) D11 आप्लव- ( for आहव- ) D2 भवेदाहरतस्तस्य —d) D2 11 उपपादये ( D11 °येत् ), D3 उपधारय, G1 अपवादय ( for उपपादय )

31 a) Ś1 तदर्थसहित ( for °र्थोपहित ) —b) D4 7–10 Ct प्रश्रि( D4 °सृ )त, D5 ( also in marg ) T1 2 G3 सहित, Cv r m g as in text ( for सहित ) Ś1 Ñ1 D11 प्रश्रि( D11 °हृ )त हेतुसंमि( Ñ1 °यु, D11 °हृ )त, D1–3 प्रसृत हेतुसंयु( D2 °ज्ञि, D3 °म )त —c) Ś1 D10 देव्या, D2 तस्या, D3 सीता ( for शेष )

32 a) D8 देव D1–4 8–11 G3 M1 हर्यक्ष- ( for हर्यृक्ष- ) —b) Ś1 D4 10 प्लवगोत्तम ( for °तां वर ) —c) D4 6 7–9 T3 सत्य- ( for सत्त्व- ) T2 सुग्रीव सत्यसंवश्च —d) Ś1 त्वदर्थे ( for तवार्थे ) —After 32, D10 ins

881* तवार्थे सत्त्वसम्पन्नो विनीत सत्यवाञ्शुचि ।

33 Ś1 om 33ab —b) D4 5 9 11 कोटिभिर् —d) Ś1 D10 11 निषूदन, Ñ1 D1–4 निषूदक ( for निबर्हण )

34 c) Ś1 -सपन्ना, D4 -सपात, D11 -सजाता ( for -सपाता )

35 a) Ś1 D4 10 11 तेषां —b) D3 न तिर्यग्वलन गते —d) D2 महत्स्वप्यति- ( for °मित- ) Ś1 D10 -विक्रमा ( for -तेजस ) D3 महत्स्वप्यमितौजस

36 a) D2 11 असकृतैर् ( for असकृत्तैर् ) —b) Ś1 D9 10 -वना( Ś1 °रा )वरा, Ck t as in text ( for -धराधरा ) —c) Ñ1 [अ]मीभि ( for भूमिर् ) —d) Ñ1 D1 2 11 सर्व- ( for वायु- ) Ś1 D3 10 -वेग, Ñ1 + ( for -मार्ग )

37 a) D10 तुणांश्च (sic) ( for तुल्याश्च ) Ñ1 वा ( for च ) —After 37ab, Ñ1 ins

882* बहवो वानरा देवि महान्तोऽतुलविक्रमा ।

—c) D10 स तु (sic) ( for मत्त ) —d) Ñ1 आस्ते ( for नास्ति )

38 b) T2 महौजस ( for महाबला ) —d) D1 2 11 प्रेष्य( D2 °ष्य )न्ते हीनतेजस, T2 प्रेष्यन्त इतरे जना

39 b) M1 व्यपोहतु ( for व्यपैतु ते ) Ś1 Ñ1 D1–4 10 देवि मन्युरपैतु ते, D11 न देवि पुनरैन्तु ते (sic) —c) D3 G1 2 M2 वे ( for ते ) —d) Ś1 Ñ1 D2 4 10 11 -पुङ्गवा ( for यूथपा )

G 5.00.0
B 5.39.41
L 5.36.40

मम पृष्ठगतौ तौ च चन्द्रसूर्याविवोदितौ ।
त्वत्सकाशं महासत्त्वौ नृसिंहावागमिष्यतः ॥ ४०

तौ हि वीरौ नरवरौ सहितौ रामलक्ष्मणौ ।
आगम्य नगरीं लङ्कां सायकैर्विधमिष्यतः ॥ ४१

सगणं रावणं हत्वा राघवो रघुनन्दनः ।
त्वामादाय वरारोहे स्वपुरं प्रतियास्यति ॥ ४२

तदाश्वसिहि भद्रं ते भव त्वं कालकाङ्क्षिणी ।
नचिराद्द्रक्ष्यसे रामं प्रज्वलन्तमिवानलम् ॥ ४३

निहते राक्षसेन्द्रे च सपुत्रामात्यबान्धवे ।
त्वं समेष्यसि रामेण शशाङ्केनेव रोहिणी ॥ ४४

क्षिप्रं त्वं देवि शोकस्य पारं यास्यसि मैथिलि ।
रावणं चैव रामेण निहतं द्रक्ष्यसेऽचिरात् ॥ ४५

एवमाश्वास्य वैदेहीं हनूमान्मारुतात्मजः ।
गमनाय मतिं कृत्वा वैदेहीं पुनरब्रवीत् ॥ ४६

तमरिघ्नं कृतात्मानं क्षिप्रं द्रक्ष्यसि राघवम् ।
लक्ष्मणं च धनुष्पाणिं लङ्काद्वारमुपस्थितम् ॥ ४७

नखदंष्ट्रायुधान्वीरान्सिंहशार्दूलविक्रमान् ।
वानरान्वारणेन्द्राभान्क्षिप्रं द्रक्ष्यसि संगतान् ॥ ४८

शैलाम्बुदनिकाशानां लङ्कामलयसानुषु ।
नर्दतां कपिमुख्यानामार्ये यूथान्यनेकशः ॥ ४९

---

40 $^{a}$) Ś1 D10 M1 तु, D11 हि (for च) —$^{b}$) Ñ1 सूर्यचन्द्राव् (by transp ) D1 चन्द्रसूर्यव्यवस्थितौ —$^{c}$) D1 2 सकाशे (for -सकाश) D1 7 9 महासत्वौ (D1 °सिंहाव्), D2 हि वैदेहि (for महासत्त्वौ) —$^{d}$) Ś1 Ñ1 D4 राजपुत्रान्निहं (D4 °वै)ष्यत , D1 2 इह (D2 तौ च) सिंहाविवैष्यत', D10 11 राजपुत्रान्निहंष्यत .

41 D2 om. 41 —$^{a}$) Ś1 Ñ1 D1 3 10 11 तौ च, D6 T1 3 G3 M2 ततो, T2 उभौ (for तौ हि) G1 -व्याघ्रौ (for -वरौ) D4 तौ च वीरामरवरौ —$^{c}$) Ś1 D4 10 आगत्य (for आगम्य) —$^{d}$) D11 विधमिष्यति (sic)

42 $^{a}$) Ñ1 सबल (for सगण) —$^{b}$) Ñ1 राघवौ रघुनन्दनौ —$^{d}$) Ñ1 T1 स्व (for स्व ). Ś1 D2 3 7 T1 G2 स्वपुरीं, D4 6–10 स्वां पुरीं (for स्वपुर) Ñ1 -यास्यत (for -यास्यति )

43 $^{a}$) G3 M2 समाश्वसिहि D10 11 तदाश्व (D11 °स्व)-मिह (sic) भद्र ते —$^{b}$) M1 परिकाङ्क्षिणी, Cr m g t as in text (for काल°) —$^{c}$) Ś1 D2 10 M2 अचिराद् —$^{d}$) Ś1 D1 2 10 ज्वलन्तमिव भास्कर —For 43$^{cd}$, Ñ1 D3 4 11 subst

883* अचिराद्द्रक्ष्यसि पतिं पतन्तमिव भास्करम् ।

[ D3 द्रक्ष्यामि राममचिराद् (for the prior half) D4 उदितम् (for पतन्तम्) D3 ज्वलन्तमिव पावक (for the post half) ]

44 $^{a}$) Ś1 D1–6 10 11 तु, M1 [ऽ]स्मिन् (for च) —$^{b}$) D11 G1 राघव (for बान्धवे) —After 44$^{a}$, D11 erroneously reads 45$^{d}$ and repeats 44$^{c}$ —$^{d}$) D2 6 9 [मृ]व (for [इ]व ) D11 शशाङ्कमिव रोहिणी

45 Ś om 45 —$^{a}$) D4 वैदेहि, D8 पश्यसि, G1 च देवि (for त्वं देवि) D10 क्षिप्रमेष्यसि वैदेहि —$^{b}$) Ñ1 D7 9 द्रक्ष्यसि, D3 पश्यसि, D10 कोपस्य (for यास्यसि) D8 पर पारं च मैथिलि —$^{c}$) Ñ1 D1–4 10 11 क्षिप्रं द्रक्ष्यसि रामेण —$^{d}$) Ñ1 D2 4 10 11 रावण रणे (for द्रक्ष्यसेऽचिरात्). D1 3 रावणं निहत युधि (D3 रणे) D7.9 द्रक्ष्यसे निहत बलात् .

46 $^{c}$) D3 मन (for मति) D1 चक्रे (for कृत्वा) —$^{d}$) D4 8 मैथिलीं (for वैदेहीं) Ś1 D10 इदम् (for पुनर्)

47 $^{a}$) Ś1 D2 4 10 11 महात्मान (Ś1 D10 °भाग) (for कृतात्मान) —$^{c}$) Ñ1 D1–4 10 11 स (D10 सु)सुग्रीव (for धनुष्पाणि) Ś1 लक्ष्मणं सहसुग्रीव· G1 लक्ष्मणेन सह भ्राता. —$^{d}$) Ñ1 D5 7 9 T2 G1 -[आ]गत (for -स्थितम्) —After 47, M1 ins

884* सुग्रीवसहितं शूर वानरैः परिवारितम् ।

48 Ś1 om 48–49 —$^{a}$) D2 4 10 भीमान् , D3 एतान् (for वीरान्) —$^{c}$) Ñ1 वानरेन्द्रं च, D1–4 11 T3 वानरैं (D4 पर्वते)न्द्राभान् , D8 वानरेन्द्रेण (for वारणेन्द्राभान्) —$^{d}$) D1 सवश , D2 सहतान् (for संगतान्)

49 Ś1 om 49 (cf v l 48) —$^{a}$) D2 शिला- (for शैल-) Ñ1 -समानाना, G3 °शाश्च (for निकाशाना) —$^{c}$) D10 नदता (for नर्दता) D1 हरिसैन्याना, D2–4 10 11 हरि°, G2 वानरेन्द्राणाम् (for कपिमुख्याना) Ñ1 नर्दता हरिमुख्याना —$^{d}$) D2 मार्ग, M1 मध्ये (for आर्ये) D1.3 6 10 T2 आर्ये श्रोष्यसि नि स्वन, D5 8 T1 2 G2 अचिराच्छ्रोष्यसि स्वन (D8 T1 ध्वनिं) ⁂ Cv नर्दतां कपिमुख्यानामार्ये यूथान्यनेकश इति । द्रक्ष्यसीत्येव क्रियापदम् ।, Cr नर्दतां वानरेन्द्राणामचिराच्छ्रोष्यसि स्वनमिति पाठ ⁂ —After 49, D1 3 ins.

885* त्वत्कृते च विशालाक्षि रामो राजीवलोचन ।
दु समास्ते महाभागश्चिन्तयानो दिवानिशम् ।

स तु मर्मणि घोरेण ताडितो मन्मथेषुणा ।
न शर्म लभते रामः सिंहार्दित इव द्विपः ॥ ५०
मा रुदो देवि शोकेन मा भूत्ते मनसोऽप्रियम् ।
शचीव पत्या शक्रेण भर्त्रा नाथवती ह्यसि ॥ ५१
रामाद्विशिष्टः कोऽन्योऽस्ति कश्चित्सौमित्रिणा समः ।
अग्निमारुतकल्पौ तौ भ्रातरौ तव संश्रयौ ॥ ५२
नास्मिंश्चिरं वत्स्यसि देवि देशे
रक्षोगणैरध्युषितेऽतिरौद्रे ।
न ते चिरादागमनं प्रियस्य
क्षमस्व मत्संगमकालमात्रम् ॥ ५३

G 5 0 0
B 5 29 51
L 5 36 53

इति श्रीरामायणे सुन्दरकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

50 [a]) Ñ1 हि (for तु) Ś1 D1 9 10 11 स हि मर्मसु (Ś1 °न्मथ- D11 °र्मेण) घोरेण, D2 4 स हि मर्मसु घोरेषु —[b]) Ñ1 मदनेषुणा

51 [a]) D6 7 9 T2 रुद मा, D6 अल ते, G1 रुदो मा (by transp), Cg as in text (for मा रुदो) G3 ते विशोकेन (for देवि शोकेन) Ś1 D1 4 10 11 मा शुचो देवि शोकार्हे (Ś1 D10 °र्ते), Ñ1 श्रुत्वा मा देवि शोकार्ते, D2 मा शोचीर्देवि शोकार्हे, D3 मा माशु देव्यशोकार्हे —[b]) Ś1 Ñ1 D1-4 10 11 मनसि (D2 °सा, D3 °स) क्रम (Ñ1 ज्वर), D6 7 9 T2 मनसो भय (for मनसोऽप्रियम्) —[c]) D7-9 भर्त्रा (for पत्या) Ś1 D10 शचीवेन्द्रेण सीते त्व, Ñ1 D1-4 11 वासिनी (D3 चकासे, D4 सहिता) श्रीरिवेन्द्रेण —[d]) D8 M1 पत्या (for भर्त्रा) D7 8 समागमेष्यसि शोभने

52 [a]) Ś1 D10 को विशिष्टो हि रामेण —[b]) Ś1 D10 को वा, D8 कश्चित्, T1 2 G1 2 M2 कश्च (for कश्चित्). G1 M1 सह (for सम) —For 52[ab], Ñ1 D1-4 11 subst

886* को विशिष्टस्तु रामेण सौमित्रेर्वापि क सम ।

[D1 लक्ष्मणेन च, D1 सौमित्रेणापि (for सौमित्रेर्वापि)]

—[c]) Ś1 Ñ1 D1 तु (for तौ) —[d]) Ñ1 संश्रय, D1 4 संश्रय (sic) (for संश्रयौ) D3 क्षाश्रयस्तव, D8 रणसंश्रयौ, D11 नात्र संशय, M2 रामलक्ष्मणौ (for तव संश्रयौ)

53 [a]) D2 4 G3 M2 वत्स्यति, D11 om (for वत्स्यसि) D7 (marg) चात्र (for देवि) —[b]) D8 M1 हि (for ऽति) —[c]) Ñ1 प्रियेति (for प्रियस्य) —[d]) Ś1 Ñ1 D1 2 4 10 11 तत्- (for मत्) D3 क्षमस्व तत्संगमनाय काल

Colophon Ñ2 V1 2 B D6 om —*Sarga name* Ś1 D1 2 4 10 11 सीताप्रत्याश्वासन (Ś1 D10 11 °न), Ñ1 सीतासमाश्वासन, D1 सीताश्वासन —*Sarga no* (figures, words or both) Ñ1 D1 2 4 10 11 om, Ś1 D5 7-9 | G M1 3 39, D9 41, M2 38 —After colophon, G concludes with श्रीरामाय नम

## ३८

G. 5.37.1
B. 5.40.1
L 5.37.1

श्रुत्वा तु वचनं तस्य वायुसूनोर्महात्मनः ।
उवाचात्महितं वाक्यं सीता सुरसुतोपमा ॥ १
त्वां दृष्ट्वा प्रियवक्तारं संप्रहृष्यामि वानर ।
अर्धसंजातसस्येव वृष्टिं प्राप्य वसुंधरा ॥ २
यथा तं पुरुषव्याघ्र गात्रैः शोकाभिकर्शितैः ।
संस्पृशेयं सकामाहं तथा कुरु दयां मयि ॥ ३
अभिज्ञानं च रामस्य दत्तं हरिगणोत्तम ।
क्षिप्तामिषीकां काकस्य कोपादेकाक्षिशातनीम् ॥ ४
मनःशिलायास्तिलको गण्डपार्श्वे निवेशितः ।
त्वया प्रनष्टे तिलके तं किल स्मर्तुमर्हसि ॥ ५
स वीर्यवान्कथं सीतां हृतां समनुमन्यसे ।
वसन्तीं रक्षसां मध्ये महेन्द्रवरुणोपम ॥ ६

## 38

M2 begins with श्रीरामाय नम

1 $^{b}$) G2 वानरस्य (for वायुसूनोर्) —For 1$^{ab}$, Ś1 Ñ V B D1–4 6 10 11 subst

887* एवमुक्ता हनुमता प्रिय वाक्य मनोहरम् ।

[Ś1 Ñ V B D1 2 4 6 उक्त्वा V2 B D6 हनूमन (for हनुमता) D6 प्रिय- Ś1 B4 D4 अनुत्तम V2 B1–3 D2 11 मनोरम (for मनोहरम्) ]

—D2 reads 1$^{cd}$ in marg —$^{c}$) B3 [अ]थ हित, B4 [अं]तर्हित, M1 [अ]भिमत, Cm k t as in text (for [आ]त्महित) Ś1 Ñ V1 B2–4 D1–4 6 10 11 सीता (for वाक्य) —$^{d}$) Ś1 Ñ V B D1–4 6 10 11 गमिष्यत प्लवगम

2 $^{a}$) D6 त्वा —$^{b}$) Ś1 Ñ2 V B D1 3 4 6 10 प्रहृष्यामि प्लवगम, Ñ1 D11 गमिष्यामि परा मुद, D2 प्रहृष्यति प्लवगमा —D4 om 2$^{c}$–4 T1 damaged for 2$^{c}$–3$^{b}$ —$^{d}$) Ś1 Ñ1 D1 2 10 11 प्राप्य वृष्टि (by transp), Ñ2 V B D6 तोय प्राप्य (for वृष्टिं प्राप्य) —After 2, D3 ins

888* सत्समाश्वासिता चास्मि वातया राघवस्य हि ।
एवमुक्तस्तु वचन जानक्या सुमनोहरम् ।
उवाच प्राञ्जलिर्वीर पुनर्वाक्य विभीतवत् ।

—Thereafter D3 reads 17–18 (including 894*)

3 D3 4 om 3 (for D4, cf v l 2) T1 damaged for 3$^{ab}$ (cf v l 2) —$^{a}$) D6 च, G2 [अ]ह (for त) —$^{b}$) D6 7 9 -कपिन —For 3$^{ab}$, Ś1 Ñ V B D1 2 6 10 11 subst

889* अन्य रामात्र पुरुष गात्रमेतिमता वर ।

[Ś1 Ñ1 D1 2 10 11 पुमास राघवादन्य (for the prior half) D6 गात्र (for गात्रं) V गतिमता (for मतिमता) Ñ1 वर ]

—$^{c}$) Ś1 Ñ1 D10 न स्पृशेय(Ś1 °ह), D1 2 11 स्पृशेय न, M2 सस्पर्शेयं (for संस्पृशेयं) B3 महाकाय, D2 11 सकामापि(D11 °मा चे), D8 समामक्ता (for सकामाह) —$^{d}$) D6 transp कुरु and मयि Ś1 Ñ1 D1 2 10 11 व्रतमेतत्पर (D1 °त्पुरा) मम, Ñ2 V B1–3 D6 वर एव वृतो मया, B4 व्रत वे तत्कृत मया

4 Ś1 reads 4–5$^{ab}$ in marg —$^{a}$) Ś1 Ñ2 V2 B D1–4 6 10 11 तु, Ñ1 G3 हि (for च) Ś1 Ñ2 V B D6 10 M1 रामाय (for रामस्य) —$^{b}$) D5 तथा, D7 9 Cg t दत्वा, D8 G2 M2 3 दत्वा, Cv k as in text (for दत्त) T2 G2 M1 -गणेश्वर (for -गणोत्तम) Ś1 Ñ V B D1–4 6 10 11 दद्यास्त्वं हरिपुगव —$^{c}$) B4 क्षिप्तेषीका तु, D1 G2(after corr as in text) 3 M3 क्षिप्त्वा त्विषीका, M1 इषीका गृह्य (for क्षिप्तामिषीका) Ś1 D6 10 काकाय V2 क्षिप्ता तामिषिका काके —$^{d}$) D7 9 -नाशिनीं (for शातनीम्) Ś1 Ñ1 D1–4 10 11 एकाक्षिनाशिनीं Ñ2 V B D6 रोषादेकागता(B3 °पा)तनीं

5 Ś1 reads 5 in marg (cf v l 4) —$^{b}$) B3 गतदेशे (for गण्डपार्श्वे) D3 निवेशित (for निवेशित) —$^{c}$) D6 T1 2 G M1 3 Cr प्रणष्टे Ś1 D2 4 10 11 त्वया प्रहृष्टेन मम(D2 4 स मे), Ñ1 त्वया प्रमृष्टस्तिलकस्, Ñ2 V B D3 6 त्वया प्रमृ( V2 B2 3 D3 6 °सृ [sic])ष्ट न च मे, D1 त्वया प्रहृष्टतिलकस् —$^{d}$) Ś1 D10 तत्पुन , Ñ V1 B1–3 D3 6 तच्च म (Ñ1 त्व), V2 B4 त च म, D2 तिलक, D4 त पुन , D6 तत्किल, D11 T2 G3 त्व किल, Cm k t as in text (for त किल) D8 स्मर्तुमर्हसि वीर्यवान्

6 Ś1 reads 6 in marg (cf. v l 4) —$^{ab}$) Ś1 D10 इमा, Ñ1 D3 4 11 हि मा, D1 हि सन , D2 हित (sic) (for कथ) D3 4 नीता (for सीता) T3 G1 तामनु-, G3 M1 मामनु- (for समनु-) T1 2 -मन्यते Ś1 Ñ1 D1–1 10 11 कथ त्व समुपेक्षसे(D2 °सि) (for $^{b}$) Ñ2 V B2–4 D6 कि रावणगृहे सीतामुपेक्षसि(V °क्षेथा, B4 °क्षिता [sic]) परतप, D8 रावणेन हृता सीता कथ मामनुमन्यसे —$^{c}$) Ñ2 V B D6 राक्षसावासे, G1 राक्षसीमध्ये (for रक्षसा मध्ये)· —$^{d}$) Ś1 V2 D4 6 10 11 T2 G1 M3 वरुणोपम —After 6, Ñ2 V B D6 ins

890* भूयाश्चैव हरिश्रेष्ठ मम कान्त रघूत्तमम् ।
[B1–3 भूयाचैव(B3 °व) ]

४५

G 5 42.1
B 5 47 1
L 5 43 1

सेनापतीन्पञ्च स तु प्रमापिता-
न्हनूमता सानुचरान्सवाहनान् ।
समीक्ष्य राजा समरोद्धतोन्मुखं
कुमारमक्षं प्रसमैक्षताक्षतम् ॥ १

स तस्य दृष्ट्यर्पणसंप्रचोदितः
प्रतापवान्काञ्चनचित्रकार्मुकः ।
समुत्पपाताथ सदस्युदीरितो
द्विजातिमुख्यैर्हविषेव पावकः ॥ २

ततो महद्बालदिवाकरप्रभं
प्रतप्तजाम्बूनदजालसंततम् ।
रथं समास्थाय ययौ स वीर्यवान्
महाहरिं तं प्रति नैरृतर्षभः ॥ ३

ततस्तपःसंग्रहसंचयार्जितं
प्रतप्तजाम्बूनदजालशोभितम् ।
पताकिनं रत्नविभूषितध्वजं
मनोजवाष्टाश्ववरैः सुयोजितम् ॥ ४

Ñ2 प्लवग, V B2 4 D6 बलवान् (for सबलान्) Ś1 सराक्षसान्, V2 B1 2 सबाधवान, D3 महारथान् (for सवाहनान) B3 निहत्य वीराविनदश्च घोर —$^c$) D7–9 तथैव, T2 जगाम, M3 समीक्ष्य (for तदेव) Ś1 D10 धीर, Ñ1 D1–4 11 तस्थौ (for धीर) Ñ2 V B D6 T1 M1 [ऽ]भिजगाम, D3 प्रतिपद्य, D5 G1 प्रतिगृह्य, T2 पुनरेव, Cm t as in text (for परिगृह्य) —$^d$) Ñ1 D3 कृतक्षय, D11 °क्षण (for °क्षण) Ś1 D10 क्षये(D10 °य) यथा (for प्रजाक्षये)

Colophon —*Sarga name* Ś1 पचसेनाग्रगराक्षसवध, Ñ1 B3 D2 4 11 सेनापतिवध, Ñ2 V B1 2 4 D1 3 6 पचसेनापतिवध, D10 हनुमद्युद्धे पचसेनाग्रगराक्षसवध —*Sarga no* (figures, words or both) Ñ1 D1 2 4 10 11 om, Ś1 M2 45, Ñ2 V D6 43, B1–3 41, B4 D5 7–9 T G M1 3 46, D3 47.—After colophon, G concludes with श्रीरामाय नम

## 45

M2 begins with श्रीरामाय नम Cv is missing for 1–38 (cf v l 5 44 2)

1 $^a$) Ś1 D10 स तान्, D2 तु स-, D8 तु सु- (for स तु) Ś1 D1 2 4 10 11 प्रम(D2 °मा)र्दितान्, Ñ1 प्रवीरान्, D8 T3 G1 3 प्रमाथितान, Cr m k t as in text (for प्रमापितान) Ñ2 V B1 2 4 D6 स पच सेनाधिकृतान्निपातितान् (V1 B2 °तान्हनूमता), B3 पचाधिसेनापतिकान्रणेषु, D3 स पच सेनाधिपतीन्प्रमापितान —$^b$) B2 हतान्रणे (for हनूमता) Ñ1 वानुचरान् Ś1 Ñ2 B1 2 D2 6 10 सबाधवान्, B3 विपक्षान्, B4 महाबलान (for सवाहनान) —$^c$) Ś1 Ñ V B D2–4 6–11 Cm t निश(B4 °शा)म्य, Cr g as in text (for समीक्ष्य) Ś1 Ñ1 D1–4 10 11 -[उ]द्धत तत, Ñ2 V1 B1 2 4 D6 -[उ]त्सवोत्सुक, V2 -[उ]त्सुक तत, M1 -[उ]न्मुखोद्धक (sic) (for -[उ]द्धतोन्मुख) B3 समरे महोत्सुक —D11 om 1$^d$–2$^b$ —$^d$) D2 3 10 कुमारमुग्र(D2 °मग्र्य) D3 च (for प्र) Ñ2 V B D6 [अ]थ वै, D2–4 7 9 T2 Cm t [अ]क्ष, D5 M3 [अ]प्र, D3 [अ]प्रे, M1 [अ]क्षणा (for [अ]क्षतम्) Ś1 D10 प्रसमीक्ष्य तस्थौ, Ñ1 °मीक्ष्य चाश्रुत, D1 °मीक्ष्णताजमा, G1 °मीक्ष्यताक्ष, G3 °मीक्षत क्षण, G3 °मीक्ष्यत क्षम (for °मैक्षताक्षतम्)

2 D11 om 2$^{ab}$ (cf v l 1) —$^a$) Ñ2 V B1–3 D6 दृष्ट्वा(V2 °ष्ट्या) प्रसभ, D5 दृष्ट्या रणम, D8 M3 दृष्ट्या र्पणस- (for दृष्ट्यर्पणम) B1 D3 प्रणोदित, B3 प्रदेशित (for -प्रचोदित) Ñ1 स तस्य दृष्टिप्रणिपातदेशित, B4 स तस्य वै दृष्टिनिपातचोदित, D1 स तस्य दृष्ट्यर्पणमात्रचोदित, D2 4 स तस्य दृष्टिप्रतिपातचो(D4 °नो)दित, D10 स तस्य दृष्टिन्यणमगचोदित (sic) —Ś1 D10 om (hapl ?) 2$^b$–3$^a$. —$^b$) B3 कुडल (for कार्मुक).—$^c$) V2 B D4 G2 3 [आ]शु (for [अ]थ) B3 दशास्यवर्धितो (for सदस्युदीरितो) —$^d$) Ñ2 V B D6 इव हव्यवाहन (for हविषेव पावक)

3 Ś1 D10 om 3$^a$ (cf v l 2) Ñ2 V B1–3 D6 om 3 —$^a$) Ñ1 D7–9 M1 Ct महान्, Cr m g as in text (for महद्-) —$^b$) D3 om. (hapl) जाम्बूनद Ś1 B4 D1–10 -सवृत, Ñ1 D3 4 11 -भूषित, D9 -सतत, T2 3 -शोभित, Ck t as in text (for संततम्) —T3 om (hapl) 3$^c$–4$^b$.—$^c$) Ś1 D10 महारथो (for स वीर्यवान्).—$^d$) M3 -कपि (for -हरि) Ś1 Ñ1 B4 D1–4 10 11 महारथस्त(Ś1 D10 °बल त) प्रति वानरर्षभं

4 T3 om 4$^{ab}$ (cf v l 3) —$^a$) D11 तत (sic) (for तप-) Ś1 Ñ V B1–3 D1 2 10 M1 transp -संग्रह- and संचय B1 D11 [अ]र्चित (for -[अ]र्जित). D3 -सचयाद्धृत —$^b$) Ś1 Ñ1 B4 D1–4 10 11 -चित्रकार्मुक, Ñ2 V B1 2 D6 -जाल(B1 D6 °त)चन्द्रक, B3 -चंद्रजालक, D7–9 °चित्रित, T2 °सवृत (for -जालशोभितम्) —$^c$) B1 चन्द्र- (for रत्न) T2 -विभूषण —B3 om 4$^d$ —$^d$) D11 -[अ]श्वाष्टवरै (by transp), T2 -[अ]श्ववरै, G1 -[अ]श्ववरै (for -[अ]ष्टाश्व°) Ñ1 मनोजवैश्चाश्ववरै प्रयोजित, Ñ2 V B1 2 D6 महाजवाष्टाश्वसमाधिसवृत, B4 मनोजवैरश्ववरैश्च योजित

सुरासुराधृष्यमसंगचारिणं
रविप्रभं व्योमचरं समाहितम् ।
सतूणमष्टासिनिबद्धबन्धुरं
यथाक्रमावेशितशक्तितोमरम् ॥ ५
विराजमानं प्रतिपूर्णवस्तुना
सहेमदाम्ना शशिसूर्यवर्चसा ।
दिवाकराभं रथमास्थितस्ततः
स निर्जगामामरतुल्यविक्रमः ॥ ६
स पूरयन्खं च महीं च साचलां
तुरंगमातंगमहारथस्वनैः ।
बलैः समेतैः स हि तोरणस्थितं
समर्थमासीनमुपागमत्कपिम् ॥ ७
स तं समासाद्य हरिं हरीक्षणो
युगान्तकालाग्निमिव प्रजाक्षये ।
अवस्थितं विस्मितजातसंभ्रमः
समैक्षताक्षो बहुमानचक्षुषा ॥ ८
स तस्य वेगं च कपेर्महात्मनः
पराक्रमं चारिषु पार्थिवात्मजः ।
विचारयन्स्वं च बलं महाबलो
हिमक्षये सूर्य इवाभिवर्धते ॥ ९
स जातमन्युः प्रसमीक्ष्यविक्रमं
स्थिरः स्थितः संयति दुर्निवारणम् ।
समाहितात्मा हनुमन्तमाहवे
प्रचोदयामास शरैस्त्रिभिः शितैः ॥ १० G. 5 42 0 B 5 47 10 L 5 43 10

---

5 [a]) B3 4 अशक्रचारिण, D8 असगकारिण (sic) —[b]) B1 D7-9 तडित्प्रभ. D3 समीकृत (for समाहितम्) —B1 om 5[cd] —[c]) V1 illeg for तूणमष्टा G1 सतूर्णम् (sic) D6 अस्र (for अष्ट-) Ñ2 V B2 D6 -सग्रह (for -बन्धुर) Ś1 D10 सु(D10 स)सुदर स्वक्षविधानकूबर, Ñ1 D11 सवधुर चक्र(Ñ1 om)विधानकूबर, B3 सशूलमस्त्राशनिबद्धसग्रह, B4 सतूर्यशस्त्रासिनिबद्धसग्रह, D1-4 सुबधुर स्वक्षविता(D2 3 °धा)नकूबर —[d]) D1 4 समावेशित- (for क्रमावेशित) Ś1 Ñ2 V2 D6 तोरण (for -तोमरम्)

6 [a]) D5 T2 Cr m परि-, Cg k t as in text (for प्रति-) Ś1 Ñ1 D1 3 4 11 -चद्रक (for वस्तुना) Ñ2 V B D2 6 10 परिपूर्णचद्रक —[b]) Ś1 D10 सुहेम- Ñ V B D1-4 6 11 जाल (for -दाम्ना) D2 च स, T3 प्रति- (for शशि-) [Ś1 Ñ V B D1-6 8 10 11 वर्चस —[c]) D3 दिवाकराभो D3 स्थिर, T2 G2 3 तदा (for तत) Ś1 Ñ1 D1.4 10 11 सुरथ समास्थित (for रथमास्थितस्तत) Ñ2 V B1 D2 6 स(V2 D2 सु) बद्धतूण (B1 °ण) स(D2 6 सु-)-रथं समास्थित, B2 4 स(B4 सु) बद्धतूण स्व(B4 °ण सु)रथ व्यवस्थित, B3 सुख समासाद्य रथ व्यवस्थित ❀ Cr दिवाकराभ दिवाकरसदृशम् । तत्सादृश्य व्योमचरत्वसाम्याद् । अतो रविप्रभमिति न पुनरुक्ति ।, Cm दिवाकराभमित्यादि पुनर्वचन रविप्रभमित्यस्यानुसरणार्थम् ।, Cg प्रतिपूर्णमस्तिनेति पाठे अस्तिना धनेनेत्यर्थ । हेमदाम्ना हेममयाश्वादिबन्धनरज्जुना । शशिसूर्यवर्चसा दामसु किंचित्सितवर्ण किंचित्सूर्यवत्पीतवर्णमित्यर्थ । प्रतिपूर्णवस्तुना शशिसूर्यवर्चसा हेमदाम्ना च विराजमानमित्यन्वय । यद्वा क्वचिच्छशिवर्चसा क्वचित्सूर्यवर्चसा च विराजमानमित्यन्वय । वितानादिषु शशिवर्चसा हेममयरथाङ्गेषु सूर्यवर्चसा । दिवाकराभमित्याकाशचारित्वे दृष्टान्त । अतो न रविप्रभमित्यनेन पुनरुक्ति । तच्छब्दद्वय च पूर्वानुसरणार्थम् ❀

7 Ñ2 V B D6 om 7-10 —[a]) Ñ1 D1-4 आ(D3 स)पूरयन् —[b]) D4 9 om (hapl) मातग —[c]) Ś1 D10 अपि, D3 5 7 9 T1 3 M1 सह (for स हि) D1 2 4 तोरणे स्थित —[d]) Ś1 Ñ1 D1 2 4 10 11 स(Ś1 D10 सु-, D2 स) दृसम्, D3 रामार्थम् (for समर्थम्)

8 Ñ2 V B D6 om 8 (cf v l 7) —[a]) Ś1 D2 10 T3 हरीक्षण, Cr m g k t as in text (for हरीक्षणो) —[c]) Ś1 D10 विस्मृतवीर-, D3 T2 M1 विस्मयजात, Cg k as in text (for विस्मितजात-). D5 7-9 G Ct -सभ्रम Ñ1 D1 4 11 -वीतसभ्रम, Cg k as in text (for -जातसभ्रम) —[d]) D2 अवैक्षत, D8 11 समीक्ष्य(D8 °क्ष)त (for समैक्षत)

9 Ñ2 V B D6 om 9 (cf v l 7) —[a]) G1 वेगेन (for वेग च) —[b]) Ñ1 D7 9 T1 रावणात्मज (for पार्थिवा°) —[c]) Ś1 M3 Cg विधारयन्, Cr gp विचारयन् (as in text) D4 om च Ś1 Ñ1 D1-4 10 11 निशाचरो, M1 महाबलोत्कटो (unmetric) (for महाबलो) —[d]) D3 हिमात्यये, D7-9 T1 युगक्षये. Ś1 [अ]प्यवर्धत, D1-4 [अ]भ्यवर्धत, D7 9 [अ]भिवर्धित, D8 °र्धत, D10 व्यवर्धत, Cm as in text (for [अ]भिवर्धते) ❀ Ct अभिवर्धते तेजसा अभ्यवर्धतेत्यर्थ ❀

10 Ñ2 V B D6 om 10 (cf v l 7) —[a]) D2 प्र- (for स) Ñ1 च क्रम, D11 त द्रुत (for -विक्रम) Ś1 D1-4 10 प्रसमीक्षितक्रम (D2 °द्रुम) (for प्रसमीक्ष्यविक्रमं) ❀ Cm प्रसमीक्ष्यविक्रम दर्शनीयपराक्रमम् । so also Ct ❀ —[b]) D2 स्थित, D10 G2 3 M3 स्थिर, D11 स्मित, T2 चिर (for स्थिर). Ñ1 स्थित ..., D1 4 स्थितस्तत, D3 ... स्थिर, D7 8 स्थित स्थिर (by transp), D9 स्थित स्थिर, T3 M1 2 स्थिरस्थित, G1 स्थिर स्थितं, Ct as in

G 5 42 6
P 5 47 11
L 5 43 11

ततः कपिं तं प्रसमीक्ष्य गर्वितं
जितश्रमं शत्रुपराजयोर्जितम् ।
अवैक्षताक्षः समुदीर्णमानसः
सबाणपाणिः प्रगृहीतकार्मुकः ॥ ११

स हेमनिष्काङ्गदचारुकुण्डलः
समाससादाशुपराक्रमः कपिम् ।
तयोर्बभूवाप्रतिमः समागमः
सुरासुराणामपि संभ्रमप्रदः ॥ १२

ररास भूमिर्न तताप भानुमा-
न्ववौ न वायुः प्रचचाल चाचलः ।
कपेः कुमारस्य च वीक्ष्य संयुगं
ननाद च द्यौरुदधिश्च चुक्षुभे ॥ १३

ततः स वीरः सुमुखान्पतत्रिणः
सुवर्णपुङ्खान्सविषानिवोरगान् ।
समाधिसंयोगविमोक्षतत्त्ववि-
च्छरानथ त्रीन्कपिमूर्ध्न्यपातयत् ॥ १४

स तैः शरैर्मूर्ध्नि समं निपातितैः
क्षरन्नसृग्दिग्धविवृत्तलोचनः ।
नवोदितादित्यनिभः शरांशुमा-
न्व्यराजतादित्य इवांशुमालिकः ॥ १५

text (for स्थिर स्थित) Ś1 Ñ1 D1-4 10 11 दुर्जयाकृति, M2 दुर्निरीक्षण, Ct as in text (for दुर्निवारणम्) —D4 om 10$^{cd}$ —$^{d}$) Ñ1 स देश . .स, D1-3 10 11 प्रतो(D2 10 प्रणो, D11 स चो)दयामास Ś1 त्रिभि शित शरै (by transp.), Ñ1 D1-3 10 11 G1 2 M2 शितैस्त्रिभि शरै (by transp.), D7-9 शितै शरैस्त्रिभि (by transp.) (for शरैस्त्रिभि शितै)

11 $^{a}$) Ñ2 D6 कपीन्द्र, V1 B1 2 4 हरि त, V2 B3 हरीन्द्र (for कपि त) D9 समास्तत (for तत कपिं त) Ñ1 D1 4 समवेक्ष्य Ñ1 गर्वितो, Ñ2 V B1 2 4 D6 सो(B4 चो)र्जित (for गर्वित) —$^{b}$) Ñ2 V2 B D6 गत (for जित-) Ś1 D10 क्रम, D2 3 श्रिय (for श्रम) D2 पराक्रम (for -पराजय) Ś1 -[उ]दित, Ñ1 D1 3 4 11 -[उ]द्यत, V1 B D2 5 7-9 T2 G1 2 M1 2 -[उ]चित, D10 -[उ]द्भुत (for [ऊ]र्जितम्) —$^{c}$) Ñ2 V B1 2 4 D6 अवेक्ष्य (B1 2 °क्ष)माण, B3 स रोषमाण, D3 कुमारमक्ष (for अवैक्षताक्ष) Ñ1 D3 5 7-9 G1 2 M1 2 मानस —$^{d}$) D7 9 -चाप- (for -बाण-) D1 T2 -पाणि D3 4 T2 कार्मुक Ñ2 V B D6 विचित्रबाण(B3 °त स [sic]) जगृहे तदा(B3 महद्-) धनु

12 Ñ2 V B D6 om 12-13 —$^{a}$) D1 4 -चारुकुंडल, T2 हेमकुंडल —$^{b}$) D5 G3 त(G3 स)मासमास G3 -पराक्रम, Cm t as in text (for पराक्रम) D3 पराक्रमा-स्तपि —$^{c}$) Ñ1 ततोविभूतप्रतिम —$^{d}$) Ś1 Ñ1 D1-4 10 11 इव संभ्रमो(Ś1 D11 सगमो, D10 मस्तमो [sic]) महान, Ct as in text (for अपि संभ्रमप्रद)

13 Ñ2 V B D6 om 13 (cf v l 12) —$^{a}$) Ś1 Ñ1 D2 3 10 11 चचाल, D5 ररज (for ररास) D1 चचाल (for तताप) Ś1 Ñ1 D1-4 10 11 भास्करो, T2 भानुर् —$^{b}$) T2 न भाति (sic) (for ववौ न) Ś1 Ñ1 D1-4 10 11 मंदर (for चाचल) —$^{c}$) D7 9 G3 Ck t च वीर्य-, M1 समीक्ष्य (for च वीक्ष्य) Ś1 Ñ1 D1-4 10 11 कुमारमक्ष प्रसमीक्ष्य संयुगे —$^{d}$) D4 वा (for first च)

14 $^{a}$) G3 damaged up to सु Ś1 Ñ1 D2 3 5 7-11 M2 स(D3 ए) तस्य, T1 तत सु- (for ततः स) D3 11 समुखान्, G1 प्रमु° (for सुमु°) D2 M2 स(M2 सु) पत्रिण (for पत°) Ñ2 V B D6 स तस्य वीर कपिसत्तम (V1 °कुंजर)स्य, D1 4 स तस्य वीर प्रमुखान्स पत्रिण —$^{b}$) D11 [उ]रग (sic) (for °गान्) —$^{c}$) Ś1 Ñ1 D1-4 10 -विमोक्षणायकान्, D11 °तधिक (sic) (for °तत्त्ववित्). —D11 om 14$^{d}$ —$^{d}$) D7 9 [अ]ताडयत् (for [अ]पात°) Ś1 Ñ1 D1-4 10 शरान्महद्गून्(Ñ1 स्थिरांस्तु त्रीन्नू, D1 3 4 शरांस्तु त्रीन्मू)र्ध्नि कपेन्यपातयत् —For 14$^{cd}$, Ñ2 V B D6 subst

997* शरानथो मूर्ध्नि समाहितस्तदा
निवेशयामास निशाचरात्मज ।

[(l 1) B3 शरीरेपि (for अथो मूर्ध्नि)]

15 For 15-21, Ñ2 V B D6 subst 998* —$^{a}$) Ś1 D1 2 शितै, D8 तत (for स तैः) D11 तान्बहून् (for तैः शरैर्) Ś1 Ñ1 स सन्निपातितै —$^{b}$) T2 G3 चरन् (for क्षरन्) G3 damaged from ग्ध up to लोचन D3 -विदु- (for -दिग्ध) Cm t असृग्दिग्धश्चासौ विवृत्तनेत्रश्च । विवृत्तलोचन इति पाठे अवसरोवितचक्षुरित्यर्थ । so also Ck —$^{c}$) Ś1 Ñ1 D10 -निभान्शरान्शितान —$^{d}$) D6 11 विराजि(D11 °ज)त- (sic), G1 2 M1 व्यरोचत, Cm t व्यराजत (as in text) Ś1 D10 11 [उ]दग(D11 [अ]शु)रश्मिभि, D2 3 स्व(D3 अ)त्र रश्मिभि, T2 [अ]शुमालिन, T3 °लया, Cg as in text, Ck °लक (for [अं]शुमालिक) D1 4 रराज चान्त्य इव स्वरश्मिभि —After 15, D4 wrongly ins नवोदितादित्यनिभ

ततः स पिङ्गाधिपमन्त्रिसत्तमः
समीक्ष्य तं राजवरात्मजं रणे ।
उदग्रचित्रायुधचित्रकार्मुकं
जहर्ष चापूर्यत चाहवोन्मुखः ॥ १६

स मन्दराग्रस्थ इवांशुमाली
विवृद्धकोपो बलवीर्यसंयुतः ।
कुमारमक्षं सबलं सवाहनं
ददाह नेत्राग्निमरीचिभिस्तदा ॥ १७

ततः स बाणासनशक्रकार्मुकः
शरप्रवर्षो युधि राक्षसाम्बुदः ।
शरान्मुमोचाशु हरीश्वराचले
बलाहको वृष्टिमिवाचलोत्तमे ॥ १८

ततः कपिस्तं रणचण्डविक्रमं
विवृद्धतेजोबलवीर्यसायकम् ।
कुमारमक्षं प्रसमीक्ष्य संयुगे
ननाद हर्षाद्घनतुल्यविक्रमः ॥ १९

स बालभावाद्युधि वीर्यदर्पितः
प्रवृद्धमन्युः क्षतजोपमेक्षणः ।
समाससादाप्रतिमं रणे कपिं
गजो महाकूपमिवावृतं तृणैः ॥ २०

G 5 42 0
B 5 47 20
L 5 43 20

---

**16** For subst in Ṅ2 V B D6, cf v l 15 and 21 —$^{a}$) D7–9 प्लवगाधिप- (for स पिङ्गा°) D4 (*sup lin* also) -वरश्च (for -सत्तम ) —$^{b}$) Ś1 राजमहागज ( for °वरात्मज ) —$^{c}$) T2 रथ च (for उदग्र-) D2 -कार्मुक बली, D4 चित्रकार्मुक —$^{d}$) G3 damaged for जहर्ष चापूर्य D5 चापूर्जित (sic), D8 चावर्धत (for चापूर्यत) D3 11 वा ( for second च ) Ś1 Ṅ1 D1 4 10 -[उ]त्सुक (for [उ]न्मुख )

**17** For subst in Ṅ2 V B D6, cf v l 15 and 21 —$^{a}$) Ś1 D10 [अ]शुमान्कपिर्, Ṅ1 [अ]तर स्फुरद्, D1–4 11 [अ]शुमान्पतद्, D5 8 G1 2 M1 3 [अ]शुमालिनो (for [अ]शुमाली ) —$^{b}$) G3 प्रवृद्ध- —D4 om (hapl ) from बल up to क्ष स in $^{c}$ Ś1 D10 -दर्पित , D1–3 11 -विक्रम (D2 3 °मे ), D7–9 -सवृत (for सयुत ) Ṅ1 विवृद्धकोपातुलवीरविक्रम —Ṅ1 om (hapl ) 17$^{c}$–19$^{b}$ —$^{d}$) Ś1 D1–4 10 11 मरीचिरश्मिभि (for °भिस्तदा)

**18** For subst in Ṅ2 V B D6, cf v l 15 and 21 Ṅ1 om 18 (cf v l 17) —$^{a}$) D3 5 8 M2 3 Cr m g चित्र , Cr *p* m*p* चक्र , Ck t as in text (for -शक्र-) Ś1 D10 बाणासिवि(D10 °मिव [sic])चित्र , D1 2 4 11 बाणा( D2 चडा)शनिचित्र- (for °मनशक्र ) —$^{b}$) D1–4 11 -प्रवर्षायुध- (for -प्रवर्षो युधि ) D10 राक्षसाबुज (sic) —$^{c}$) D2 8 [अ]थ (for [आ]शु ) Ś1 D1 4 10 हरीक्षणाचले

**19** For subst in Ṅ2 V B D6, cf v l 15 and 21 Ṅ1 om 19$^{ab}$ (cf v l 17) —$^{a}$) D7–9 transp तत and कपिस् M2 -विक्रम —$^{b}$) Ś1 D7–10 T Ct प्रवृद्ध- M1 -कोपो (for -तेजो-) Ś1 D2 10 विक्रम, D5 T2 G1 2 M3 -सयुत, Ct as in text (for सायकम् ) —$^{d}$) D4 न तु (sic) (for घन-) Ś1 D1 2 4 8 T1 2 G1 ( before corr as in text) -निस्वन , D3 5 7 9–11 T3 (also) G2 3 M1 2 -निस्वन (for -विक्रम )

**20** For subst in Ṅ2 V B D6, cf v l 15 and 21 Ś1 om (hapl ) 20–21$^{b}$ —$^{a}$) D1–4 11 अति-, D10 बल- (for युधि ) D2 -गर्वित (for -दर्पित ) —$^{c}$) G1 [अ]प्रतिमो D10 महा- ( for रणे ) M3 transp रणे and कपि —$^{d}$) D11 यथा कक्षम् , T2 महान्कूपम् (for महाकूपम्) D10 गज महामत्तमिव D3 [आ]दृत (for [आ]वृत)

**21** Ś1 om 21$^{ab}$ (cf v l 20) G2 reads 21$^{ab}$ after 25$^{ab}$ —$^{a}$) D4 समस- (for प्रसभ ) D3 निपीडितैश्च. —$^{b}$) D2 3 -मेघ- (for -नाद-) D2 7 9 S Cm निस्वन , D3 11 -नि (D11 नि)स्वन, Ct नि स्वन (as in text) —$^{c}$) D7 9 समुत्सहेन (for °त्पपात ) M1 [अ]थ (for [आ]शु ) Ś1 D10 समुच्चरन् , D5 7 9 समारजन् (for स मारुतिर् ) Ṅ1 D1–4 11 समुत्प( D2 4 °द्य )तश्चाशु नभ समाचरन् ꣸ Ct समुत्सहेन समुत्साहेन ह्रस्व आर्षं ꣸ —$^{d}$) D1–4 11 भुजाति- (D1 4 °द्रि-) (for भुजोरु ) D3 विक्रम , D11 -दर्शनं (sic) (for -दर्शन ) Ś1 D10 सजातकोपारुणघोरदर्शन . —For 15–21, Ṅ2 V B D6 subst

998* स तै शरैर्मूर्ध्नि सुसंनिपातितै-
श्चकार नाद घननादसंनिभम् ।
महाकपि सयति राक्षसार्दित
क्षण क्षरच्छोणितदिग्धलोचन ।
नवोदितादित्यनिभ स खे चर
न्भुजोरुविक्षेपसुघोरदर्शन ।
समुत्पपाताशु नभो महाकपि-
र्भुजोरुवेगै परितर्जयन्निव ।

[(l 1) Ṅ2 V2 B1 3 D6 मूर्धनि (for मूर्ध्नि सु-) B4 मूर्धनि पातितैस्तदा —(l 3) V2 रक्षसार्दित —(l 5) V2 नभ- (for नव-) Ṅ2 V2 D6 सत्ये, B3 खेचरो (for खे चरन्) —(l 6) B4 -निक्षिप्त (for -विक्षेप-) —(l 7) D6 [अ]थ (for [आ]शु ) V1 नग्न् (for नभो ).]

G 5 42 0
B 5 47 21
L 5 43 21

स तेन बाणैः प्रसभं निपातितै-
श्चकार नादं घननादनिःस्वनः ।
समुत्पपाताशु नभः स मारुति-
र्भुजोरुविक्षेपणघोरदर्शनः ॥ २१
समुत्पतन्तं समभिद्रवद्बली
स राक्षसानां प्रवरः प्रतापवान् ।
रथी रथश्रेष्ठतमः किरञ्शरैः
पयोधरः शैलमिवाश्मवृष्टिभिः ॥ २२
स ताञ्शरांस्तस्य विमोक्षयन्कपि-
श्चचार वीरः पथि वायुसेविते ।
शरान्तरे मारुतवद्विनिष्पत-
न्मनोजवः संयति चण्डविक्रमः ॥ २३
तमात्तबाणासनमाहवोन्मुखं
खमास्तृणन्तं विविधैः शरोत्तमैः ।
अवैक्षताक्षं बहुमानचक्षुषा
जगाम चिन्तां च स मारुतात्मजः ॥ २४
ततः शरैर्भिन्नभुजान्तरः कपिः
कुमारवर्येण महात्मना नदन् ।
महाभुजः कर्मविशेषतत्त्ववि-
द्विचिन्तयामास रणे पराक्रमम् ॥ २५
अबालवद्बालदिवाकरप्रभः
करोत्ययं कर्म महन्महाबलः ।
न चास्य सर्वाहवकर्मशोभिनः
प्रमापणे मे मतिरत्र जायते ॥ २६
अयं महात्मा च महांश्च वीर्यतः
समाहितश्चातिसहश्च संयुगे ।
असंशयं कर्मगुणोदयादयं
सनागयक्षैर्मुनिभिश्च पूजितः ॥ २७

22 $^{a}$) Ś1 Ñ V1 D3 7 8 तमुत्पतत Ś1 B2 तमभिद्रवद्, B3 D2 समभिद्रुत( D2 °तो ), D1 4 10 समु( D10 तमु )पा°, D6 नभसि द्र°, Ct as in text ( for समभिद्रवद् ) D2 बलात् —$^{b}$) Ñ2 V B D6 राक्षसेन्द्रस्य सुत ( for °साना प्रवर ) —$^{c}$) V2 तथा, D2 महा- ( for रथी ) Ñ1 D8 T1 M3 रथि- ( for रथ- ) Ś1 Ñ2 V B1 2 4 D3 6 10 11 T2 हरि ( D11 रथ, 12 कपि )श्रेष्ठतम, D7 9 रथि( D9 °थी )श्रेष्ठतर, G2 °गत ( for रथश्रेष्ठतम ) B3 G3 रथ( B3 हरि )श्रेष्ठमवा-किरन् ( for °तम किरञ् ) D6 क्षते ( for शरै ) —$^{d}$) D6 10 पयोधरा D2 शैल( sic ) ( for °लम् ) Ś1 D1 3 4 10 11 [ उ ]ग्र-, B2 [ आ ]शु, B3 [ अ ]बु- ( for [ अ ]श्म- ).

23 G2 शिताञ् ( for स ताञ् ) T2 रणे ( for कपिश् ) Ñ1 D1–5 7–9 11 G3 M3 हरिर्विमोक्षयञ्, Ñ2 D6 M1 कपि-र्विमोक्षयञ् ( by transp ), V B कपिर्विमोच( V2 °मोह, B3 °लोक )यञ् ( for विमोक्षयन्कपिञ् ) —$^{b}$) G3 damaged from थि up to विते. —$^{c}$) V2 B1 2 4 D6 शरांतरैर्, D11 स चांतरे ( for शरान्तरे ) Ñ1 D1 2 4 11 विनिपतन्, Ñ2 V B मनोजवश् ( for विनिष्पतन् ) Ś1 D10 मारुतिरेप निष्पतन् —$^{d}$) Ñ2 V B1 2 4 चलाचल, B3 चचाल से ( for मनोजव ) D1 3 4 G3 M1 2 चेन्द्र-, D7–9 भीम-, D11 चित्त ( for चण्ड- )

24 $^{a}$) Ñ2 V1 B1 2 4 D2 6 -प्रिय ( for -[ उ ]न्मुख ) B3 -[ अ ]शनिपातविप्रिय ( for -[ आ ]सनमाहवोन्मुख ) Ñ1 तमातुराणां स हरीश्वर ·· , V2 तमातुराणां मनसाहव-प्रिय —$^{b}$) Ñ1 D4 स( D4 ख )मापतत, D1 11 समाचरत. T1 3 M3 Cr विशिखै, M2 Crp निशितै ( for विविधै ). D5 T1 3 M2 शरोत्करै ( for °त्तमै ). Ś1 D10 समावरत निशितैं शरोत्तमैं, Ñ2 V B D2 3 6 समापतत ( Ñ2 D6 °मर्दयत, B3 °मापतद्भिर्, D2 °मर्चयत ) निशितै ( D3 विशिखे ) शरोत्तमै —$^{c}$) D3 4 समं( D4 प्रव )क्षताक्ष ( for अवै° ) Ñ2 V B D6 अवेक्ष्य सोक्ष( B4 मोह [ sic ] ) मनसा स( B1 च ) चक्षुषा —$^{d}$) D10 जगा ·· Ñ2 V B D2 6 अथ, D3 6 7–9 स च ( by transp ) D1 4 अपरास मारुति ( for च स मारुतात्मज )

25 Ñ2 V B D6 om 25 —$^{a}$) T3 शितै ( for ततः ) Ś1 Ñ1 D1–4 10 11 -भुजातरच्छवि —$^{b}$) Ś1 Ñ1 D1–4 10 11 कपि कुमारेण, D5 M3 कुमारवीर्ये( M3 °रे )ण D3 समात्मना ( for महा° ) G3 कुमार ·· D11 तदा ( for नदन् ) —After 25$^{ab}$, G2 reads 21$^{ab}$ —$^{d}$) Ś1 Ñ1 D1–4 10 11 विचित( D1 4 °शेष )यन्तस्य, Ct as in text ( for °यामास )

26 $^{a}$) V2 स वानरो ( sic ) ( for अबालवद् ) Ñ2 V B [ उ ]पम ( for -प्रभ ) D6 प्रबालवद्वामदिवाकरोपम ( sic ) —$^{b}$) Ñ2 V1 B1 3 D2 3 7 8 T3 G3 M2 महान् ( for महन् ) Ñ2 B2 D6 महामति·, V1 °मना, V2 B1 3 महात्मा, B4 °त्मना ( for महाबल ) D9 म· ·हाबल —$^{c}$) Ś1 Ñ V B D1–4 6 8 10 11 तावदस्य ( for चास्य सर्व- ) D1 7–9 T1 Ct शालिन ( for शोभिन ) —$^{d}$) Ś1 D10 प्रसारणे, Ñ2 V B1 2 4 D6 प्रया( V1 B1.4 °पा, B3 °शा )तने G3 मारुतिर् ( for मे मतिर् ) Ś1 Ñ V B1 2 4 D1–4 6 10 11 आशु, M1 अद्य ( for अत्र ) B3 प्रयातुमग्रे मतिरस्य जायते ❀ Ct 'प्रमापणे मारुतिरत्र जायते' इति पाठे 'अत्र जन·' इतिवरस्यैव हनुमता मारुतिरिति निर्देश ❀

27 Ñ2 V B D6 om 27$^{ab}$ —$^{a}$) D1 4 न ( for

पराक्रमोत्साहविवृद्धमानसः
समीक्षते मां प्रमुखागतः स्थितः ।
पराक्रमो ह्यस्य मनांसि कम्पये-
त्सुरासुराणामपि शीघ्रकारिणः ॥ २८
न खल्वयं नाभिभवेदुपेक्षितः
पराक्रमो ह्यस्य रणे विवर्धते ।
प्रमापणं त्वेव ममास्य रोचते
न वर्धमानोऽग्निरुपेक्षितुं क्षमः ॥ २९
इति प्रवेगं तु परस्य तर्कय-
न्स्वकर्मयोगं च विधाय वीर्यवान् ।
चकार वेगं तु महाबलस्तदा
मतिं च चक्रेऽस्य वधे महाकपिः ॥ ३०
स तस्य तानष्ट हयान्महाजवा-
न्समाहितान्भारसहान्विवर्तने ।
जघान वीरः पथि वायुसेविते
तलप्रहारैः पवनात्मजः कपिः ॥ ३१
ततस्तलेनाभिहतो महारथः
स तस्य पिङ्गाधिपमन्त्रिनिर्जितः ।
स भग्ननीडः परिमुक्तकूबरः
पपात भूमौ हतवाजिरम्बरात् ॥ ३२ G 5 42 16 B 5 47 32 L 5 43 33

first च ) Ś1 D1 4 10 11 M2 वीर्यवान् ( for °त ) —$^{b}$) Ś1 D1–4 10 11 [ क्षा ]शुग( D1 4 °म )तिश्, Ñ1 [ आ ]शु शरैश् ( for [ अ ]तिसहश् ) —After $27^{ab}$, Ś1 Ñ1 D1–4 10 11 T2 ins

999* महच्च कर्माप्रतिम समीहते
न बालभाव समरेऽनुवर्तते ।

[ (l 1) T2 महाश्च ( for महच्च ) D11 महत्त्वकर्मा समर समीहते (sic) —T2 om from l 2 up to $27^{c}$ —(l 2) D2 तु, D3 च, D11 नि- ( for ऽनु- ) ]

—$^{c}$) Ś1 Ñ1 -गुणोदयोदय, Ñ2 V B D6 करोत्यय महत्, D3 °य महत् ( for गुणोदयाद्य ) —$^{d}$) Ś1 Ñ1 D1–4 10 11 मुनिभि सवायुभि , N2 V B D6 बहु( B3 वसु )-भिश्च( V2 B1 4 °भि सु ) दुष्कर ( for मुनिभिश्च पूजित )

28 $^{ab}$) Ñ2 B D6 -समृद्ध-, V2 -प्रवृद्ध- ( for -विवृद्ध-) D5 7 समीक्ष्यते ( for °क्षते ). Ñ2 V1 B1.2 4 समराग्रमास्थित( V1 °त ) D7 9 प्रमुखोग्रत स्थित , G1 प्रमुख ग° ( for प्रमुखागत स्थित ) Ś1 D10 समीक्षते स्म प्रमुखे व्यवस्थित , N1 समीक्षते सप्रमुखैर्गणै स्थित , V2 स वीक्षते मा समरेग्रत स्थित, D1 3 4 समीक्ष्यते मत्प्रमुखाग्रत स्थित( D3 °त ), D2 समीक्षते मत्समराग्रमास्थित , D6 समीक्ष्यते मा समराग मा स्थित (sic), D11 समीक्षते इन्द्र इवागत स्थित ( for $^{b}$) B3 -मानिन[illegible] समग्रमास्थित —After $28^{ab}$, B3 ins

1000* विचिन्तयामास निपूदनार्थं
तदा कपीना प्रवरो विरोपित ।

—D11 T3 om ( hapl ) $28^{c}$–$29^{a}$ Ñ2 V B D6 om $28^{cd}$ —$^{c}$) D3 यस्य ( for ह्यस्य ) —$^{d}$) D3 सुरा[illegible]णाम् (om hapl ) Ñ1 शीघ्ररूपिण , M3 °गामिन ( for °कारिण )

29 D11 T3 om $29^{a}$ ( cf v l 28 ) D3 om from भवेद् in $29^{a}$ up to इति प्र in $30^{a}$ —$^{a}$) Ś1 D10 [ क्ष ]पि ( for [ अ ]भि- ) —$^{b}$) B3 यस्य ( for ह्यस्य ) D1 2 4 G1 M1 [ ऽ ]भिवर्धते, D11 प्र° ( for वि° ) —$^{c}$) Ś1 प्रस्थापण Ñ2 चेह, V1 illeg , V2 नैव, B2 त्वद्य, B3 चास्य, D6 चेदि (sic), D7–9 ह्यस्य, T2 G2 चैव, T3 त्वेह ( for त्वेव ) D2 प्रमापणे तेन ( for °ण त्वेव ) Ś1 मयास्य, Ñ V B2 3 D7–9 ममाद्य, D11 ममा[illegible] B1 प्रमापण त्वस्य रणेद्य ( before corr त्वद्य ममेह ) रोचते, B4 प्रमार्जन त्वस्य ममाद्य रोचते

30 D3 om इति प्र (cf v l 29) Ñ2 V B D6 om 30–31 —$^{a}$) Ñ1 D1 2 4 10 11 च ( for तु ) D3 परमस्य ( for तु परस्य ) Ś1 Ñ1 D1–4 10 11 कीर्तयन् , T3 कर्तयन्, Cg as in text ( for तर्क° ) —$^{b}$) M2 स, Cr m g k t as in text ( for स्व- ) D3 -वेग ( for -योग ) D1 4 कीर्तिमान् , D11 कीर्तयन् (sic) ( for वीर्यवान् ) —$^{c}$) G1 वीर्यं ( for वेग ) Ś1 Ñ1 D1–4 10 11 वधे कुमारस्य ( for चकार वेग तु ) Ñ1 D1 4 -कपिस् ( for बलस् ) D5 तथा —$^{d}$) D5 7 9 T1 3 G1 2 M1 तदानीं, D8 दुरात्मन ( for महाकपि ) Ś1 Ñ1 D1–4 10 11 चकार बुद्धिं हनुमान्महाबल ( Ś1 D2 10 °कपि )

31 Ñ2 V B D6 om 31 (cf v l 30) —$^{a}$) D8 अष्ट बलान्, D3 अश्ववरान् ( for अष्ट हयान् ) D5 7–9 G3 M1 2 वरान्महाहयान, T2 °बलान् ( for हयान्महाजवान् ) Ś1 D10 स तस्य तानुग्रजवान्महाबलान्, D1 4 स तस्य नागाश्च-बलो महाबल —$^{b}$) Ś1 D2 10 11 -समाधिवर्तिन , Ñ1 -सहाभिवर्धिन , D1 3 4 -सहान्सुवर्चस , Cr m g k t as in text ( for -सहान्विवर्तने ) G3 समाहतान्भारसहानुवर्तने —For $31^{cd}$, Ś1 Ñ1 D1–4 10 11 subst

1001* रथे नियुक्तान्निजवान वाजिन-
स्तलैश्च तालैश्च कपिर्महाबल ।

[ D3 om l 2 —(l. 2) Ñ1 तलप्रहारे स, D10 सालैश्च तालैश्च Ś1 transp कपिर् and महाबल D1 4 तलैश्च जघ्न स कपिर्महामति ]

32 $^{a}$) G1 महान् ( for महा- ) D10 11 -बल ( for

G 5 47 17
B 5 47 33
L 5 43 33

स तं परित्यज्य महारथो रथं
सकार्मुकः खड्गधरः खमुत्पतत् ।
तपोभियोगादृषिरुग्रवीर्यवा-
न्विहाय देहं मरुतामिवालयम् ॥ ३३
ततः कपिस्तं विचरन्तमम्बरे
पतत्रिराजानिलसिद्धसेविते ।
समेत्य तं मारुतवेगविक्रमः
क्रमेण जग्राह च पादयोर्दृढम् ॥ ३४
स तं समाविध्य सहस्रशः कपि-
र्महोरगं गृह्य इवाण्डजेश्वरः ।
मुमोच वेगात्पितृतुल्यविक्रमो
महीतले संयति वानरोत्तमः ॥ ३५
स भग्नबाहूरुकटीशिरोधरः
क्षरन्नसृङ्निर्मथितास्थिलोचनः ।
स भिन्नसंधिः प्रविकीर्णबन्धनो
हतः क्षितौ वायुसुतेन राक्षसः ॥ ३६
महाकपिर्भूमितले निपीड्य तं
चकार रक्षोऽधिपतेर्महद्भयम् ॥ ३७

-रथ ) Ñ2 V B D6 -जघान तद्रथ (for -हतो महारथ ) —[b]) D2 3 मन्त्रिणा भृश, D8 T1 7 G3 मन्त्रिणस्तदा (for °निर्जित ) Ś1 Ñ1 D1 4 10 11 स तेन( Ñ1 D11 तत स ) पिगाधिपमन्त्रिणा भृश, Ñ2 V B D6 तदा( B1 तत , B2 तथा, B4 वीर ) प्लवगाधिपमन्त्रिसत्तम , T2 स तस्य पिगाधिपतेर्महात्मन —[c]) T2 G M1 3 प्र (for स ) B1 चक्र (for -नीड ) D5 प्रभग्नकील Ñ2 V1 B2–4 D6 समवाक्ष-, D7 9 T1 G1 2 M3 परिवृत्त- (M3 °युक्त-) (for परिमुक्त-) Ś1 Ñ1 D1–4 10 11 प्र( Ñ1 स, D3 वि )भग्ननीडेपु( Ś1 D3 10 °ड स ) युगाक्षकूबर, V2 B1 स भग्ननीडे स( V2 °क्ष )गवाक्ष-कूबर —[d]) D1 4 निजवाजिनो (for हतवाजिर्) Ś1 D10 -वाजिनो रथात्, Ñ2 V B D2 6 -वाजिसारथि , D7 11 -वाजिकोधरात (for -वाजिरम्बरात्) ✻ Crg हतवाजि ( Cg वाजिरिति ) इकारान्तत्वमार्पम् ✻

33 [a]) Ñ2 परित्यज्य (sic) (for °त्यज्य ) —[b]) D11 G3 M1 सकार्मुक Ś1 D2 3 10 11 [ऽ]भि( D11 हि )पुप्लुवे, Ñ1 D1 4 [ऽ]भिदुद्रुवे, D5 7 9 T1 2 G M2 3 Cmgt स ( D5 G1 स )मुत्पतन् (for समुत्पतत् ) Ñ2 V B D6 समुत्पपातासिधर ( B1 °थ नभ ) सकार्मुक ( B4 प्रतापवान् ) —[c]) B3 तपोर्मि-, D7 9 T तपोभि- (for तपोऽभि-) Ñ1 D1 4 -भिपगाद् (for -भियो° ) Ś1 Ñ1 D2 3 10 ऋपिरप्रवि ( Ñ1 D3 °स )ग्रहो, Ñ2 V B D6 °रुग्र( V2 °ग्र )मयमो, D1 4 °रुग्रमद्भुतो, D11 अविनुग्रहेते रा (sic), G2 °रुग्रतेजा (for °रुग्रवीर्यवान् ) —[d]) D1 4 [आ]लये, D2 [अ]जय (sic) (for [आ]लयम् ) D11 मरुतो दिवालय

34 [a]) D7 9 transp तत and कपिस् D6 अंबर —[b]) Ñ2 V B D6 -मार्गचारिणि (for -सिद्धसेविते ) —[c]) D5 8 T2 3 G2 M3 -तुल्य- (for -वेग- ) G1 -विक्रम Ś1 Ñ1 B4 D2 3 10 स( Ñ1 त ) मारुतिर्मारुतवेगवान्तदा( Ñ1 B4 °वान्रणे, D2 °वेगवान् ), Ñ2 D6 प्रमाथयन्मारुतसूनुराहवे, V B1–3 समाप्लुव( B1 °पत )न्मारुतसूनुराहवे, D1 4 समाप्लुत मारुतवेगवान्कपि , D11 तमाप्लुत वेगबलेन वेगवान् —[d]) Ś1 Ñ V B D1–6 8 10 11 G2 M2 करेण (for क्रमेण ) Ś1 sup lin , B2 M3 स (for च ) B1 सुपादप (for च पादयोर् ). Ñ1 D1 4 11 भृश, D2 द्वयो .

35 [b]) Note hiatus between गृह्य and इव Ś1 Ñ V B D2 3 6 10 खुद्ध, D1 4 11 खगम् (for गृह्य ) ✻ Cmt गृह्य इव । असन्धिरार्षः । गृहीत्वेत्यर्थः । , so also Cg k —For 35[cd], Ś1 Ñ V B D1–4 6 10 11 subst

1002* कुमारमक्ष प्रविकीर्णभूषण
विनिष्पिपेषाशुगतिर्महीतले ।

[(L 1) D2 om (hapl ) from प्रवि up to सवि in 36[c] B3 सविकीर्ण , B4 प्रकीर्ण- B2(m, as above) शोभन, D10 -भूषिण (for -भूषण ) —(L 2) Ñ1 D1 3 4 11 विनिष्पिपत्र, D6 विनिष्पपेश (corrupt) Ś1 Ñ1 D10 -गति-, Ñ2 D6 कपिर्, V2 -गतिर् (for -गतिर् ) Ñ2 V1 B1 3 4 D3 सनातल , B3 सनातला (for महीतले ) ]

36 D2 om up to सवि in [c] (cf. v l 35) —[a]) B प्रभिन्न- Ñ2 V B D6 -वक्ष- (for -बाहु- ) D7 9 -पयोधर —[b]) G2 क्षरन्स्वसन (for क्षरन्नसृङ् ) Ñ2 V B D6 विलन( B3 °नष्ट, B4 °नग्न )बाहुर्मथितास्थिबन्धन ( B4 °कन्धर ) —[c]) Ś1 Ñ1 D1 3 4 10 11 विमुक्त-, D7 G1 2 M1 3 प्र( D7 M2 स )भिन्न-, T M1 स भग्न- (for स भिन्न- ) G3 -सन्धि (for -सधि ) G1 2 M1 -विशीर्ण- (for -विकीर्ण- ) Ñ2 V B1 2 4 D6 विमुक्तबाहुस्तवगन्कन्धरो( B1[ marg after corr °कसमु ] 4 °कन्धरो )क्षितो, B3 विमुक्तवासा गलिताग्रमासको —[d]) D6 मृत (for हत ) D1 4 11 मयुगे (for राक्षस )

37 Ñ2 V B D6 om 37 —[a]) D3 महाबलो (for °कपिर् ) Ś1 Ñ1 D1 4 10 निपात्य त, D2 निमथ्य त, D3 विनिष्पतद्य, D11 निपद्य (corrupt) (for निपीड्य त) —[b]) D6 महाभय

महर्षिभिश्चक्रचरैर्महाव्रतैः
समेत्य भूतैश्च सयक्षपन्नगैः ।
सुरैश्च सेन्द्रैर्भृशजातविस्मयै-
र्हते कुमारे स कपिर्निरीक्षितः ॥ ३८

निहत्य तं वज्रिसुतोपमप्रभं
कुमारमक्षं क्षतजोपमेक्षणम् ।
तदेव वीरोऽभिजगाम तोरणं
कृतक्षणः काल इव प्रजाक्षये ॥ ३९ G 5 43 2 B 5 48 2 L. 5 44 2

इति श्रीरामायणे सुन्दरकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

# ४६

ततस्तु रक्षोधिपतिर्महात्मा
हनूमताक्षे निहते कुमारे ।
मनः समाधाय तदेन्द्रकल्पं
समादिदेशेन्द्रजितं स रोषात् ॥ १

त्वमस्त्रविच्छस्त्रभृतां वरिष्ठः
सुरासुराणामपि शोकदाता ।
सुरेषु सेन्द्रेषु च दृष्टकर्मा
पितामहाराधनसंचितास्त्रः ॥ २

38 [a]) Ñ2 V1 B D1–4 6 9 11 चक्र( D3 चित्र )धरैर् Ñ2 D6 महारथै , D7 9 G3 Cr k t समागतै (for महाव्रतै ) T2 महर्षिभिश्च प्रवरैरभिष्टुत —[b]) Ñ2 D6 सह (for च स-) Ś1 D10 यक्षैश्च सभूत- (for भूतैश्च सयक्ष-) —[d]) Ñ2 V B D3 6 प्रपूजित (for निरीक्षित )

39 [a]) T2 निर्जित्य (for निहत्य) D5 7 9 T G1 M2 Ct -सुतोपम रणे( G1 क्षणात् ) (for °मप्रभ ) Ś1 Ñ V B D2 6 10 स त निहत्याम( D2 °सु )रवीरदुर्जय( Ñ2 D6 °सूदन, V B °मर्दन ), D1 3 4 11 स त निहत्वा परवीरदुर्जय, G3 निहत्य त सुरपतिसूनुसप्रभ ❀ Cv "निहत्य त वज्रिसुतोपमप्रभम्" इति पाठ ❀ —[b]) Ś1 Ñ1 D1 3 4 10 क्षतजेक्षण कपि , B3 °जोपसेवित, D11 जलजेक्षण कपि (for क्षतजोपमेक्षणम् ) —[c]) G1 M2 3 तम् (for तद् ) Ś1 D10 प्रतिगृह्य, Ñ1 D1 4 11 [ ऽ ]थ जगाम (for ऽभिजगाम) —[d]) B4 कृत क्षण (sic), D3 कृतक्षय (for कृतक्षण )

Colophon —*Sarga name* Ś1 Ñ2 B D6 10 अक्षकुमारवध , Ñ1 D1 3 4 कुमाराक्षवध , V1 illeg , V2 D2 9 11 अक्षवध —*Sarga no* (figures, words or both) Ñ1 D1 2 4 10 11 om , Ś1 M2 46, Ñ2 V1 D6 44, V2 34, B1 2 42, B3 43, B4 D5 7–9 T G M1 3 47, D8 48 —After colophon, D2 concludes with राम, G with श्रीरामाय नम.

## 46

M2 begins with श्रीरामाय नम

1 Cv missing for 1–2 —[a]) Ñ2 V B D3 6 T1 3 G1 2 M1 3 स, Cg k as in text (for तु) —[c]) Ś1 Ñ1 D1 4 10 11 T1 तमि( Ñ1 D1 4 °द्रि, T1 °थे )द्रकल्प( Ñ1 D11 °ल्प ), Ñ2 V B D6 निवृत्तशोक , D2 विनृद्धरोष , D3 M1 महेन्द्रकल्प, D7 9 स देवकल्प (for तदेन्द्रकल्प ) —[d]) Ś1 D3 7 9 10 G2 सरोष , Ñ2 V1 B D2 6 रणाय, V2 (after corr as in V1) समाहित , D5 8 G1 M2 3 सरोष (for स रोषात )

2 [a]) V B1 3 D3 T2 G1 3 अस्त्रभृच् , Cg अस्त्रविच् (as in text ) Ś1 B4 D1 2 4 10 11 T3 M3 शा( Ś1 B4 D10 चा )स्त्रविदा (for शस्त्रभृता) —[b]) Ś1 Ñ V B D1–4 6 10 11 प्रसन्नबुद्धि समरेषु शक्त (Ś1 D10 °रे प्रधृष्य , B1 °रे प्रशक्त , D2 °रेष्व दृष्य , D8 °रेषु सक्त ) —[c]) Ñ2 V B1 2 4 D6 दै( B2 चै )त्येषु देवेषु, B3 युद्धेषु कार्येषु, D4 सुरेन्द्रसेन्द्रेषु (sic), D11 G3 सुरेषु चेन्द्रेषु (for सुरेषु सेन्द्रेषु) D8 [ अ ]पि (for च) D2 काम (for -कर्मा) —[d]) Ñ1 D6 T -सजित- , Cr m g k t as in text (for -संचित-)

G 5 43 3
B 5 48 3
L 5 44 3

तत्रास्त्रबलमासाद्य नासुरा न मरुद्गणाः ।
न कश्चित्त्रिषु लोकेषु संयुगे न गतश्रमः ॥ ३
भुजवीर्याभिगुप्तश्च तपसा चाभिरक्षितः ।
देशकालविभागज्ञस्त्वमेव मतिसत्तमः ॥ ४
न तेऽस्त्यशक्यं समरेषु कर्मणा
न तेऽस्त्यकार्यं मतिपूर्वमन्त्रणे ।
न सोऽस्ति कश्चित्त्रिषु संग्रहेषु वै
न वेद यस्तेऽस्त्रबलं बलं च ते ॥ ५
ममानुरूपं तपसो बलं च ते
पराक्रमश्चास्त्रबलं च संयुगे ।
न त्वां समासाद्य रणावमर्दे
मनः श्रमं गच्छति निश्चितार्थम् ॥ ६

3 $^{a}$) D7 9 त्वद्- (for तत्र) —$^{b}$) Ś1 Ñ1 D7 9 10 मसुरा, V B2 D11 न सुरा, B3 विबुधा, D2 T2 सासुरा (for नासुरा) Ś1 Ñ1 B2-4 D1 2 4 7 9-11 T2 स- (for न) —After 3$^{ab}$, D7-9 T G1 2 M ins

1003* शेकुर्हि समरे स्थातु सुरेश्वरसमाश्रिता ।
[All except M2 नशेकु M1 -समाश्रिता]

—$^{cd}$) Ś1 Ñ1 D2 अन्येषु D1 4 10 11 अन्ये च, T1 3 न केचित् (for न कश्चित्) D2 त्रिष लोकेषु G1 3 M1 2 सयुगेषु, Cv k t as in text (for सयुगे न). D11 गतश्रम (sic), T1 3 हृतश्रिय, T2 कृतश्रम, Cv k t as in text (for गतश्रम) Ś1 D1 2 4 10 सयुगेभि(D1 °गेषु, D4 °गे च)गता श्रम(Ś1 श्रिय, D10 श्रम), Ñ1 सयुगेषु निर्जिता सम (hypm) (for $^{d}$) D3 पर्याप्ता प्रमुखे स्थातु न च लोका- स्त्रयोपि वा ⁂ Cv सयुगे न गतश्रम न कश्चित्। सर्वे श्रान्ता भवन्तीत्यर्थ । न केचित्त्रिषु लोकेषु सयुगे न गतश्रिय इति च पाठ ।, Cr सयुगे कश्चिदपि न गतश्रमो न सर्वे प्राप्तश्रमा इत्यर्थ । न शेकुरित्याहार्याभावपाठे तत्रास्त्रबलमासाद्य असुरो न न गतश्रम । मरुद्गणा न न गतश्रमा । त्रिषु लोकेषु कश्चिदपि न न गतश्रम । न गतश्रमा नेति योजना। केपुचित्कोशेषु न सयुगे न गतश्रम इति पाठ ।, Cm कश्चिदपि न गतश्रमो न । सर्वे प्राप्तश्रमा इत्यर्थ ।, so also Cg ⁂ —For 3$^{cd}$, Ñ2 V B D6 subst

1004* समर्था समरे स्थातु त्रैलोक्यमपि चानघ।
[B3 न समर्था मे (for समर्था समरे) B4 स्तु (for स्थातु)]

4 $^{ab}$) B2 तप्तश्च, B4 मुक्तश्च (for -गुप्तश्च) D3 त्व, T1 3 तु, Ct as in text (for first च) D11 चापि, M2 चाभि-, Ct as in text (for चाभि-) B1 त्वया तु रक्षसा सर्वो भुजवीर्याभिरक्षित —V2 om 4$^{cd}$ —$^{c}$) Ś1 Ñ1 D5 7-10 G1 3 M2 Ct -प्रधानश्च, Ñ2 B D3 6 -नयज्ञश्च, V1 मनज्ञश्च (sic), D1 4 11 -[उ]पपन्नश्च D2 -विधिज्ञश्च, T2 -विधानश्च (for विभागज्ञस्) —$^{d}$) Ñ2 V1 B D6 मतिमान्वर (B3 °अन), D9 रिपुसूदन, T2 G2 Cr मतिसत्तम, Cg k t मतिसत्तम (as in text)

5 $^{a}$) B2 [ऽ]स्तु, B3 हि (for ऽस्ति) Ś1 Ñ2 V1 B D2-4 6 10 11 [अ]साध्य, D1 [अ]कार्यं (for [अ]शक्य) Ś1 D3 7 9 10 G3 Ck t कर्मणा, Ñ2 V1 B D6 कर्म, T1 2 कर्मणो, Cr m g as in text (for कर्मणा) Ñ1 न तेस्त्य॰ समरे॰ कर्म॰ (illeg), V2 स्वकर्मणा तेन महाकपीश्वरो (sic) ⁂ Ck न तेऽस्त्यशक्य समरेषु कर्मणामिति पाठ । समरेषु कर्तव्याना कर्मणा मध्ये तेऽशक्य नास्ति, Ct also adds 'कर्मणा' (?) इत्येव पाठ साम्प्रदायिक इति कतक ⁂ —$^{b}$) D5 कार्यं (for [अ]कार्यं) D8 प्रति- (for मति-) Ś1 D10 -दृष्टपूर्वं, D1 4 11 पूर्वदृष्ट, D5 T1 G3 -पूर्वमन्त्रिणे, D7 9 रूपमन्त्रणे, Cr m g k t as in text (for पूर्वमन्त्रणे). Ñ V B1-3 4(marg. also) D2 3 6 न तेस्ति तुल्यो(D3 °ल्य) म(B4 [orig ]ग)तिदर्शनेषु(Ñ1 °नेन, D3 °नेषु च).—$^{c}$) Ś1 D1 4 10 11 G2 3 तेस्ति, Ñ1 तेषु, D2 चापि, D3 चास्ति, Cv as in text (for सोऽस्ति) Ś1 Ñ1 D1-5 7-10 T1 2 M1 om, D11 वा (for वै) Ñ2 V B D6 न चापि(B3 °हि) कश्चिद्विपता विनिग्रहे —$^{d}$) Ñ2 V B D2 6 व्यतिक्रमेद् (for न वेद यस्ते) Ś1 D10 वा (for च) Ś1 D2 3 5 7 9 10 T1 om (second) ते B4 च ते जन, Cv as in text (for बल च ते) Ñ1 D1 4 11 सहेत वेग तु(D11 च) त(Ñ1 य)था बल च

6 B3 om (hapl) 6$^{a}$ —$^{a}$) Ñ1 समान :(for ममानु-) Ñ2 V B1 2 4 D2 6 सुमहद्, D5 T3 तपसा (for तपसो) Ś1 D1-5 10 11 om च B2 4 om ते —$^{b}$) T2 M2 पराक्रम D5 G3 [अ]त्र, D8 [अ]ति- (for [अ]स्त्र) Ñ2 V B D1 3 4 6 चास्त्र(Ñ2 V1 B1 2 4 चाथ, V2 चास्त्र, B3 चार्थ, D6 चार्थ)परिग्रहश्च, D2 चार्थपराक्रमश्च (for चास्त्र- बल च सयुगे) Ś1 Ñ1 D10 11 पराक्रम चास्त्र(D11 °स्र)परि- ग्रह[श्]च —After 6$^{ab}$, Ñ2 V B D6 ins, while Ś1 D2 10 11 ins after 6

1005* सर्वेषु कार्येषु समर्थयुक्ता
बुद्धिस्तवाद्येह महानुभाव ।

[(l 1) Ś1 D10 निवर्तनीया, B3 समधता च, D2 11 समर्तनीया (for समर्थयुक्ता) —(l 2) V1 तवास्ते च, B2 तवास्त्येव, B3 तवार्यो हि, D2 त्वयार्थेर, D6 तवाद्येह, D11 त्वदीयेह (for तवाद्येह) Ś1 D10 11 महा(D10 °मा)नुभावात् (D11 °वा)]

—Thereafter D2 repeats (var) 6$^{cd}$ B3 om 6$^{c}$ —$^{c}$) Ś1 D10 11 न त्वेवमासाद्य, Ñ2 V B1 2 4 D2(second time) 6 न च त्वमासाद्य, D1 तत्त्व समासाद्य Ñ2 B1 2 4 D2(second time) 6 11 -[अ]वमर्दे, V D2(first time) 8 T2 M1 -[अ]वमर्दन(D8 T2 M1 °ने), D1 4 -[अ]भिमर्द, G1 2 °मर्दिन, Cv as in text (for -[अ]वमर्दे) D3 भवतमासाद्य न मेरिमर्दने —$^{d}$) Ś1 Ñ1 D1 4 10 11 मन॰

निहताः किंकराः सर्वे जम्बुमाली च राक्षसः ।
अमात्यपुत्रा वीराश्च पञ्च सेनाग्रयायिनः ॥ ७
सहोदरस्ते दयितः कुमारोऽक्षश्च सूदितः ।
न तु तेष्वेव मे सारो यस्त्वय्यरिनिषूदन ॥ ८
इदं हि दृष्ट्वा मतिमन्महद्बलं
कपेः प्रभावं च पराक्रमं च ।
त्वमात्मनश्चापि समीक्ष्य सारं
कुरुष्व वेगं स्वबलानुरूपम् ॥ ९
बलावमर्दस्त्वयि संनिकृष्टे
यथा गते शाम्यति शान्तशत्रौ ।
तथा समीक्ष्यात्मबलं परं च
समारभस्वास्त्रविदां वरिष्ठ ॥ १० G 5 43 11 B 5 48 10 L 5 44 11

श्रम, D1 श्रम मनो ( by transp ), Cv as in text ( for मन श्रम ) Ñ2 V B D2( second time ) 6 परिश्रम( B3 रणाजिर ) गच्छसि निश्चितार्थं, D2 ( first time ) श्रम न गच्छति विनिश्चितार्थं —After 6, D3 ins

1006* निहत्य रक्षांसि बहूनि सयुगे
कुमारमक्षं च विनाश्य वानर ।
अभीतवद्गर्जति तस्य निग्रहे
त्वया नु रक्षोवर सविधीयताम् ।

7 b) B1 स ( for च ) —c) D11 सामात्यप्रवरपुत्रा —d) Ś1 D10 -[अ]ग्रगा हता, Ñ V B D1-4 6 11 -[अ]ग्रगास्तथा, D7 9 °गामिन, D8 G1 3 M1 °नायका ( for -[अ]ग्रयायिन ) —After 7, D5 7-9 S ins, while D3 ins after l 1 of 1009*

1007* बलानि सुसमृद्धानि साश्वनागरथानि च ।
[ D3 च ( for सु- ) ]

8 a) D7 9 महोदरश्च शयित —b) T2 निपातित, G1 च सायक, G3 निषूदित ( for च सूदित ) —c) D5 8 G2 M3 हि ( for तु ) M1 मे मनस ( for तेष्वेव मे ) T3 सारो मे ( by transp ) —After 8c, M1 ins.

1008* यस्त्वय शत्रुसूदन ।
निहतेष्वेषु समरे

—For 8, Ś1 Ñ V B D1-4 6 10 11 subst

1009* अक्ष कुमारोऽतिबलो दुर्धर्षश्च महाबल ।
न च ते समरे कश्चित्तुल्योऽस्ति रिपुसूदन ।
न च मे सारता तेषु यथा त्वयि महाद्युते ।

[ V2 om l 1 —(l 1) Ñ2 D6 दुर्धर्षो, V1 B निहतो ( for ऽतिबलो ) Ñ1 D1-4 10 11 दुधरश्च, Ñ2 D6 निहतश्च ( for दुर्धर्षश्च ) D1 4 11 निपातित, D3 [अ]तिवीर्यवान् ( for महाबल ) —After l 1, D3 ins 1007* —(l 2) D10 मे ( for ते ) Ś1 हि ( for ऽस्ति ) Ś1 D2 4 11 रिपुसूदन Ñ2 V B D6 न च मेन्यो( Ñ2 D6 मे सो )ऽस्ति समरे( B3 °स्ते सम कश्चित् [ sic ] ) त्वया तुल्योरि( V2 °ल्यो रिपु[ hypm ] )सूदन ( B2 °मर्दन, B3 4 °सूदन ) —(l 3) Ś1 D10 [ए]व, Ñ1 D11 ते, D1 4 वै ( for मे ) Ś1 D10 मार तत् ( for सारता ) Ñ1 महामते ( for °द्युते ). ]

—Thereafter all the above MSS. cont

1010* तस्माद्गच्छाशु पुत्र त्व युद्धाय विजयाय च ।

[ Ś1 D10 [अ]द्य ( for [आ]शु ) Ñ1 D1-4 11 [अ]त्र व पुत्र ( for [आ]शु पुत्र त्व ) D6 विक्रमाय ( for विजयाय ) ]

9 a) D7-9 च, T2 G3 तु ( for हि ) D7-9 निहत, M1 [अ]प्रतिम, Cr m g as in text ( for मतिमन् ) D5 G1 M2 बल महत् ( by transp ), T2 G2 3 M1 महाकपेर् ( for महद्बल ) Ś1 D1 4 10 11 इम ह्यदृश्य परम बलेपु, Ñ V B2 D2 6 अय हि कष्ट ( Ñ1 D2 ह्यदृश्य ) परमो( V2 °म ) बलेपु, B1 3 4 अय हि कष्ट परम बलेपु( B1 [ m after corr ] °मश्च लोके ), D3 इम हि दृष्ट्वाप्रतिम बलेपु —b) D2 कपि, T2 G2 3 M1 बल ( for कपे ) Ñ2 V B D2 6 प्रभावश्च पराक्रमश्च —c) D3 माम् ( for त्वम् ) Ñ1 D1 2 4 11 [ए]व ( for [अ]पि ) D5 7-9 निरीक्ष्य, G3 कुरुष्व ( for समीक्ष्य ) Ñ1 D1 2 4 11 सत्त्व ( for सार ) Ś1 B3 D10 त्वमात्मना चै प्र( B3 °जश्चैव )समीक्ष्य सर्वं( B3 °स्व ), Ñ2 V B1 2 4 D6 ममा( Ñ2 °हा )त्मजश्चैव( B4 °श्चासि ) तथैव स त्व —d) Ś1 Ñ1 D10 कार्यं, B3 वीर, D1 2 4 11 वीर्यं ( for वेग ) Ś1 Ñ V1 2( marg also as in text ) B D1 2 4 6 10 स्वगुण, D11 च गुण ( for स्वबल- ).

10 a) B4 रण ( for बल ) Ś1 D1 2 4 -[अ]वमर्द ( D2 °र्दि ) ( sic ), D7 9 G3 M1 Ck t °मर्दस्, Cv r m g as in text ( for -[अ]वमर्दस् ) Ś1 Ñ1 D11 सनिकृष्टो, Ñ2 V B D2 6 10 सनिविष्टो( D2 10 °ष्टे ) ( for सनिकृष्टे ) —b) D7 9 T1 Ck t शातशत्रु, Cv r.m g as in text ( for °शत्रौ ) Ś1 Ñ V B D1 2 4 6 10 11 यथा न गच्छेयुरुदार-सत्त्वा, D3 यथा न मे स्यादिह शातशत्रो ❀ Cm शान्त-शत्रौ त्वयि गते इतो निर्गते सनिकृष्टे हनुमत्समीप प्राप्ते सति बलावमर्द सेनानाशो यथा शाम्यति सेनाक्षयो यथा न स्यात् तथा आत्मबल पर च समीक्ष्य समारभस्व ।, so also Cg, Ck शान्तशत्रुरिति पाठ । गते निर्गते त्वयि सनिकृष्टे सति । 'बलावमर्दैरे'व पाठ । अनेकबलप्रमथनैर्हेतुभि शान्तशत्रु उपशान्तबलवेग ।, so also Ct ❀ —c) D2 11 [अ]स्त्र- ( for [आ]त्म- ) D11 G2 बल ( for पर ) —d) D5 7-9 T2 G3 M1 [अ]स्त्रभृता, Cr m as in text ( for °विदा ) D9 वरिष्ट Ś1 D2 10 11 प्रजाकृत( D2 11 °कृत ) कर्म समारभ ( D2 °चर )स्व, Ñ V B D1 4 6 प्रजाहव( D1 4 पराक्रम ) कर्म समारभ( B4 °हर )स्व —After 10, D3 5 7-9 S ins

G 5 43 12
B 5 48 13
L 5 44 12

न खल्वियं मतिः श्रेष्ठा यत्त्वां संप्रेषयाम्यहम् ।
इयं च राजधर्माणां क्षत्रस्य च मतिर्मता ॥ ११
नानाशस्त्रैश्च संग्रामे वैशारद्यमरिंदम ।
अवश्यमेव योद्धव्यं काम्यश्च विजयो रणे ॥ १२
ततः पितुस्तद्वचनं निशम्य
प्रदक्षिणं दक्षसुतप्रभावः ।
चकार भर्तारमदीनसत्त्वो
रणाय वीरः प्रतिपन्नबुद्धिः ॥ १३
ततस्तैः स्वगणैरिष्टैरिन्द्रजित्प्रतिपूजितः ।
युद्धोद्धतकृतोत्साहः संग्रामं प्रतिपद्यत ॥ १४
श्रीमान्पद्मपलाशाक्षो राक्षसाधिपतेः सुतः ।
निर्जगाम महातेजाः समुद्र इव पर्वसु ॥ १५

---

1011* न वीर सेना गणशो च्यवन्ति
न वज्रमादाय विशालसारम् ।
न मारुतस्यास्ति गतिप्रमाणं
न चाग्निकल्पः करणेन हन्तुम् ।
तमेवमर्थं प्रसमीक्ष्य सम्यक्
स्वकर्मसाम्याद्धि समाहितात्मा ।
स्मरश्च दिव्यं धनुषोऽस्य वीर्यं
व्रजाक्षतं कर्म समारभस्व ।

[ (l 1) D3 वीरा (for सेना) and भवति (for च्यवन्ति) —(l 2) D3 नास्त्यायुधं वज्रसमानसार ❀ Cv g गणशोच्चि गण-(Cg गणाना)शोचयितरि।, Cr m गणशोचि (Cr शोचने क्वयन्तात् क्विन्तमिदं रूपम्।) गणान् शोचयतीति गणशो(Cr °शु)क् हनुमान्, तस्मिन्निमित्ते सेना नावन्ति न रक्षन्ति। (Cm गणशोऽप्यवन्तीति पाठे सवशोऽपि नावन्ति तत्र हेतुर्नेति)।, Ck गणशोच्यवन्तीत्यादि सर्वेन पाद्ः। अद्यापि रोरुत्त छान्दसम्। हे वीर, सेना न सेना मा भूवन्, तन्महायावलम्बन मास्तु। उत गणश सघशः च्यवन्त्येव पलायन्ते नश्यन्ति वा। तस्मान्नैव तथा। । अत्रान्य आहु —गणान् शोचयतीति गणशोक तस्मिन् गणशोचि हनुमति सेना नावन्तीति। मन्दमेतत् अवते स्तायत्यर्थत्वात्, गणशोक इति पदस्यैव भाव्यत्वात्। तथा विशालसार मित्यत्र विशेषिते छित्वा अल्पसार कुण्ठसारमित्यप्याहु। नास्त्यलशब्द एव तावत्। अन्यत्र खलमित्येव। तस्य कुण्ठाधवाचिता तु दूरे।, so also Ct ❀ —(l 3) M3 [अ]स्य (for [अ]स्ति). D3 गति, T2 M3 Cm t गते, Cv r g k as above (for गति) —(l 4) D3 नाग्ने परोन्यो दहनेनेति हेतु —(l 5) D3 तद्, G1 त्वम् (for तम्) —(l 6) D3 चापेक्ष्य, T1 3 -सामर्थ्य-, T2 -सार च, Cv as above (for साम्याद्धि) —(l 7) D3 [ऽ]न्यवाय, T2 M3 Cr m g k [ऽ]स्तीय, M1 च वीर्यं, Ct as above (for ऽस्य वीर्यं) —(l 8) D3 T G3 M1.2 व्रजाक्षत, Cr m t as above (for व्रजाक्षत) ]

11 [a]) N2 V B D6 [ए]षा (for [इ]य) Ś1 Ñ V B D2 6 10 11 मतिर्मेता, D1 4 मतिसंस्थिता, D7 9 G3 M1 Ck t मतिश्रेष्ठ, Cr m g as in text (for मति श्रेष्ठा) ❀ Ck मतिश्रेष्ठेति सर्वत्र पाद्ः। हे मतिश्रेष्ठ प्रशस्तबुद्धे! अहं त्वामतिसकटे प्रिय पुत्र प्रेषयामीति यत्। इय न खलु, एव प्रेषणा नोचिता खलु।, so also Ct ❀ —[b]) Ñ1 D3 न त्वा (sic), V2 D7 9 य त्वा, D2 8 T2 G2 यस्त्वा, D5 M1 2 यत्त्वा, D6 यस्त्वा, D11 यथा, Cr.m g k t as in text (for यत्त्वा) —[c]) N1 D8 इद (sic) (for इय) Ñ1 B1-3 D4 6 11 तु, D1 नु (for च) B2 राज्ञा (sic) (for राज-) B4 पुत्राणा (for -धर्माणा) —[d]) D11 तु (for च) V2 B3 क्षा(B3 पु)त्रस्य च, D8 क्षत्रियस्य (for क्षत्रस्य च) Ñ2 V2 B D1 2 4 6 11 गतिर्मता, D3 गति परा, T2 (also as in text) G1 मतिर्मम, Cr m g k t as in text (for मतिर्मता) Ś1 D10 क्षत्रियाणा गतिर्मम, Ñ1 क्षत्रस्य गति-मिच्छता

12 [a]) Ś1 Ñ1 D1 4 10 11 -सर्वेश्च, D2 -शस्त्रे च, D3 G M1 -शास्त्रश्च, D7 9 Ck t -शास्त्रेषु, Cr m g as in text (for -शस्त्रैश्च) —[b]) V2 विशस्त्यैवम्, B1 युध्यस्व त्वम्, D8 गतशकम् (for वैशारद्यम्) —[c]) Ś1 Ñ V B D1 3 4 6 8 10 11 M3 Cr.m योद्धव्य, Cg k t as in text (for योद्धव्य) —[d]) Ñ2 V B1 2(marg also as in text) 3 4 D6 काम (for काम्यश्च) Ś1 कस्यचिद्विजये रणे

13 [a]) Ś1 सुतस् (for पितुस्) —[b]) Ñ2 D6 यक्षसुत-, B4 दक्षसम-, D3 शक्रसम- (for दक्षसुत) T3 -प्रभाव Ś1 D10 प्रदक्षिणीकृत्य च त महात्मा —[c]) D10 om (hapl ?) भर्तार Ñ2 V B D6 उदारसत्त्वो, D7 9 Ct अतित्वरेण (for अदीनसत्त्वो) —[d]) B2 प्रतियातबुद्धि

14 V2 B1 2 om 14–15 —[a]) Ś1 D10 तैर्गुणैर्, Ñ स गणैर्, B3 D1 4 6 T स्वगुणैर्, D3 11 च गुणैर्, Cm t as in text (for स्वगणैर्) G2 इष्ट, Cm as in text (for इष्टैर्) —B4 om 14[c]–15 —[c]) Ś1 D2 6 10 G2 युद्धोद्यत (Ś1 D10 °म-, G2 °त), D1 3 6 M1 3 युद्धोद्धत, D8 °द्धृत, Cr m k t as in text (for युद्धोद्धत-) D4 क्षतोत्साह (sic) ❀ Cr g युद्धोद्गत(Cg °त)कृतोत्साह इति पाठः ❀ —[d]) Ñ1 D1 3 4 10 G3 M3 प्रत्यपद्यत, Ñ2 B3 D2 6 11 T1 3 G1 2 M1 2 समपद्यत, V1 D7-9 Cm t सम्प्रपद्यत, D5 समपश्यत (for प्रतिपद्यत)

15 V2 B1 2 4 om 15 (cf v l 14) —[a]) Ñ1 D1 4 6 7 -विशालाक्ष (for पलाशाक्षो) —[b]) Ś1 Ñ1 B3 D1-4 10 11 स रक्षोविपते —[c]) Ñ1 V1 B3 D1 4 चुक्षोभ सु-(Ñ1 स), D2 चुक्षुभे सु- (for निर्जगाम) (Ś1 D10 महावीर, Ñ1 महाभाग, Ñ2 V1 B3 D1-4 6 11 महावेग —[d]) Ś1 Ñ2 V1 B3 D3 6-10 G3 Ct पर्वणि (for पर्वसु)

स पक्षिराजोपमतुल्यवेगै-
    र्व्यालैश्चतुर्भिः सिततीक्ष्णदंष्ट्रैः ।
रथं समायुक्तमसंगवेगं
    समारुरोहेन्द्रजिदिन्द्रकल्पः ॥ १६
स रथी धन्विनां श्रेष्ठः शस्त्रज्ञोऽस्त्रविदां वरः ।
रथेनाभिययौ क्षिप्रं हनूमान्यत्र सोऽभवत् ॥ १७
स तस्य रथनिर्घोषं ज्यास्वनं कार्मुकस्य च ।
निशम्य हरिवीरोऽसौ संप्रहृष्टतरोऽभवत् ॥ १८
सुमहच्चापमादाय शितशल्यांश्च सायकान् ।
हनूमन्तमभिप्रेत्य जगाम रणपण्डितः ॥ १९

तस्मिंस्ततः संयति जातहर्षे
    रणाय निर्गच्छति बाणपाणौ ।
दिशश्च सर्वाः कलुषा बभूवु-
    र्मृगाश्च रौद्रा बहुधा विनेदुः ॥ २०
समागतास्तत्र तु नागयक्षा
    महर्षयश्चक्रचराश्च सिद्धाः ।
नभः समावृत्य च पक्षिसंघा
    विनेदुरुच्चैः परमप्रहृष्टाः ॥ २१
आयान्तं सरथं दृष्ट्वा तूर्णमिन्द्रजितं कपिः ।
विननाद महानादं व्यवर्धत च वेगवान् ॥ २२    G 5 44. 3 B 5 48. 24 L 5 44. 23

16 B3 om 16 —a) Ś1 Ñ1 D1–4 10 11 -राजोत्तम-, T1 3 G1 -राजानिल-, Cv r m g t as in text (for राजोपम-) Ñ1 -तुल्यविक्रमैर्, Ñ2 V B1 2 4 D6 -भीमवेगो (B1 4 °गैर्), D1 4 -तुल्यवेगो (for -तुल्यवेगैर्) ❀ Cv पक्षिराजोपमतुल्यवेगै पक्षिराजोपमैः, अन्योन्यतुल्यवेगैश्च। अथवैशद्यार्थमेकार्थे शब्दद्वयप्रयोगो वा ❀ —b) Ś1 D3 10 सिंहैश्, D1 (m also as in Ś1) 2 4 11 व्याडैश्, Cv as in text (for व्यालैश्) Ñ1 V B1 2 4 D4 5 शित-, D7 9 G1 स तु (for सित-) —c) D7–9 असह्य- (for असग-) Ñ2 V B1 2 4 D6 समासक्तमसह्य-(B1 4 °क्त-) B1 D5 7 9 11 T1 3 M2 -वेग, D2 वेगं (for -वेग) —d) Ñ2 V2 B1 2 4 D6 अप्रधृष्य(B2 °ष्य) (for इन्द्रकल्प) G2 समारुरोहामरराजशत्रु —After 16, Ñ2 V B1 2 4 D6 read an addl colophon

[ *Sarga name* Ñ2 V B1 2 4 D6 इन्द्रजिन्निर्याण —*Sarga no* (figures, words or both) N2 V1 D6 45, V2 35, B1 2 43, B4 48 ]

17 a) B3 4 D3 रथी (D3 सर्व)रथिना —D10 om (hapl, see var) 17b – 18c —b) Ñ1 शस्त्रशास्त्र-, B1 शस्त्रज्ञोथ, B3 सर्वशस्त्र, D1 4 6 G2 शास्त्रज्ञोस्त्र- (for शस्त्रज्ञोऽस्त्र-) B1 3 D1 4 11 -विशारद (for -विदां वर) Ś1 D2 शूर (D2 °र)शस्त्रभृतां वर —cd) D3 [अ]पि (for [अ]भि) Ś1 Ñ V B D1–4 6 11 रथेनादित्यवर्णेन तं वानरमुपाद्रवत्(Ś1 Ñ1 °क्रमत्, D11 °गमत्)

18 D10 om 18abc(cf v l 17) —cd) Ś1 Ñ1 D1 4 11 तु हरिश्रेष्ठ, Ñ2 V B D2 6 कपि(D2 हरि)शार्दूल, D3 हनुमान्वीर (for हरिवीरोऽसौ) D9 reads *sup lin sec m* ऽसौ संप्रहृष्टतरो V1 B1 2 4 D6 G1 संप्रहृष्टस्ततो (G1 °करो), B3 संप्रहर्षयुतो, D4 स संहृष्टतरो (for संप्रहृष्टतरो) G3 संप्रहृष्टतनूरुह (for d) —After 18, D3 ins

1012* इन्द्रजित्तं कपिं दृष्ट्वा तोरणाजिव्यवस्थितम्।
विश्वस्तं सुखमासीनं राक्षसं क्षुभितोऽभवत्।

19 Ñ2 V2 B1 4 D6 om 19–23 B2 om 19–21 —a) Ś1 D4 10 स महच्, Ñ1 बृहच्च, V1 D2 11 महच्च, B3 महत्सु-, D7 9 इन्द्रजिच् (for सुमहच्) D3 स नमस्वापमादाय (sic) —b) Ś1 Ñ1 V1 B3 D1–4 10 11 शि(D1–4 11 सि)तपीतांश् (for शितशल्यांश्) —c) Ś1 B3 D1 3 4 10 11 अभिद्रु(Ś1 D10 °द्रु, B3 °सृ)त्य, D2 उपाद्रुत्य, D7–9 T3 G2 3 °प्रेक्ष्य (for अभिप्रेत्य) —d) Ś1 Ñ1 V1 B3 D1 2 4 10 युधि वानर, D3 बलिनां वर, D11 युधि मारुति (for रणपण्डित)

20 Ñ2 V2 B1 2 4 D6 om 20 (cf v l 19) —a) B3 ततस् (for तस्मिंस्) Ś1 Ñ1 B3 D1 3–5 10 11 G1 3 M1 सयुग, Cg t as in text (for संयति) —b) B3 चापपाणौ (for बाण°) —c) D9 M1 2 तु, Ct as in text (for च) Ś1 D10 प्रदिशश्च नेदुर्, B3 G2 कलुषीबभूवुर् (for कलुषा बभूवुर्) —d) Ñ1 V1 B3 D2 11 रौद्र (for रौद्रा)

21 Ñ2 V2 B D6 om 21 (for all except B3, cf v l 19) —ab) Ś1 Ñ1 D1 2 4 10 समाययुस्, D11 समीयतुस् (sic) (for समागतास्) Ś1 D2 10 11 च (for तु) Ś1 वृक्षा (sic), D11 -वशा (for -यक्षा) D4 8 10 11 चक्रधराश्, M2 व्योम्निचराश्, Cv m g k t as in text (for चक्रचराश्) D3 समीयुरत्यर्थकुतूहलाश्च सुरर्षिगंधर्वभुजगसंघा —c) Ś1 Ñ1 D1 2 4 10 11 तत (for नभ) and तु (for च) —d) D11 निर्लेदुर् (sic) (for विनेदुर्) D1 4 11 प्रसभ, D9 G1 3 M1 परम, Ck t as in text (for परम-) T3 प्रकृष्टा, Ck t as in text (for -प्रहृष्टा)

22 Ñ2 V2 B1 4 D6 om 22 (cf v l 19) —a) B2 3 D2 आयात D1 4 तं रथं, D2 सत्वर (for सरथ). —b) Ś1 Ñ1 V1 B2 3 D1–4 10 11 शूरम्, B (ed) पूर्णम् (for तूर्णम्) D7–9 Ct इन्द्रध्वज Ś1 Ñ1 V1 B2 D1–4 10

C 5 44 4 / D 5 48 25 / I 5 44 24 इन्द्रजित्तु रथं दिव्यमास्थितश्चित्रकार्मुकः ।
धनुर्विस्फारयामास तडिदूर्जितनिःस्वनम् ॥ २३

ततः समेतावतितीक्ष्णवेगौ
महाबलौ तौ रणनिर्विशङ्कौ ।
कपिश्च रक्षोधिपतेश्च पुत्रः
सुरासुरेन्द्राविव बद्धवैरौ ॥ २४

स तस्य वीरस्य महारथस्य
धनुष्मतः संयति संमतस्य ।
शरप्रवेगं व्यहनत्प्रवृद्ध-
श्चचार मार्गे पितुरप्रमेयः ॥ २५

ततः शरानायततीक्ष्णशल्या-
न्सुपत्रिणः काञ्चनचित्रपुङ्खान् ।
मुमोच वीरः परवीरहन्ता
सुसंततान्वज्रनिपातवेगान् ॥ २६

स तस्य तत्स्यन्दननिःस्वनं च
मृदङ्गभेरीपटहस्वनं च ।
विकृष्यमाणस्य च कार्मुकस्य
निशम्य घोषं पुनरुत्पपात ॥ २७

शराणामन्तरेष्वाशु व्यवर्तत महाकपिः ।
हरिस्तस्याभिलक्षस्य मोक्षयँल्लक्ष्यसंग्रहम् ॥ २८

हरि°, B3 युधि (for कपि) —[c]) Ś1 Ñ1 V1 B2 3 D1.2 4 5 7 9-11 T1 2 ननाद च (B2 3 T1 सु-), G2 त्रिनदत (for विननाद) D3 ननाद सुमहन्नाद —[d]) G3 स (for च) D11 व्यवर्धयत (for व्यवर्धत च) D3 G2 वीर्यवान्

23 Ñ2 V2 B1 4 D6 om 23 (cf v l 19). —[a]) D2 सुरथ, D7 9 T1 3 मरथ, M1 च रथ, Cr as in text (for तु रथ) —[b]) D7 9 आश्रितश् (for आस्थितश्) —[c]) B2 कार्मुकं स्फारयामास —[d]) Ś1 Ñ1 B2 D1 2 4 10 11 -स्फूर्जित-, D3 -विस्फूर्ज- (for ऊर्जित-) D3 4.7 9 11 T1 3 G M Cr m -निस्वन, T2 -निस्वन (sic), Cg t as in text (for -निःस्वनम्) B3 तस्मिन्नूर्जितविक्रम

24 [a]) Ñ2 V1 B D6 युधि तीव्र (V1 °क्ष्ण), D11 अभितीक्ष्ण-, G1 अतिशीघ्र- (for अतितीक्ष्ण) —[b]) B2 रणकर्कशावुभौ (marg also युधि निर्विशंकौ), B4 अतिनिर्विशकौ, D4 समजातवैरौ —D4 om (hapl) 24[cd]. —[c]) B3 स (for first च) D7 9 तनूज (for च पुत्र) —[d]) Ś1 D10 वृद्धवैरौ, D1 जातवैरौ

25 [a]) Ñ2 V B D6 तत स (V2 प्र-), D8 ततोस्य (for स तस्य) V महाबलस्य (for °रथस्य) —[b]) V2 B2 धनुर्भृत Ñ1 सयति विस्मितस्य, Ñ2 V B D6 शस्त्रभृता वरस्य, D3 सयति मगनश्च (for सयति समतस्य) —[c]) D10 शरप्रवेश (sic), T3 शतप्रवेग, G3 शरस्य वेग, Cg as in text (for शरप्रवेग) Ś1 Ñ1 D2 10 वितथ प्र(Ñ1 वि)वृद्ध, D1 4 विफल समृद्ध, D3 वितथ प्रकुर्वश्, D5 व्यहनत्प्रवृद्धश्, D11 विपुल प्रवृत्त, T1 3 विहमन्प्र°, G1 हनुमत्प्र° (sic), Cg k t as in text (for व्यहनत्प्रवृद्धश्) Ñ2 V B1-3 D6 शरप्रवेगानवि(Ñ2 °गान्, B3 °गाश्च वि)चितयन्स(Ñ2 V1 B1 D6 °यस्ताश्), B4 शरप्रवेगान्वितथान्प्रवृद्धाश् —[d]) B4 D1 2 3 10 11 चकार, Cg as in text (for चचार) D11 मार्गं (for मार्गे) D5 8 T2 M2 3 अप्रमेये

26 Ñ2 V2 B1 2 4 D6 om 26–28 —[a]) Ś1 D10 आपतत स-, M3 आयमतीक्ष्ण (for आयततीक्ष्ण-) D8 11 M1 -वेगान्, G2 तुल्यान् —[b]) B3 D1 4 11 पतत्रिण, Ñ1 सुपर्वण कल्पित (for सुपत्रिण काञ्चन-). B3 -चित्रशृगान्, D3 -पुङ्खचित्रान् (by transp). —[c]) D11 वीर (for वीर) —[d]) Ś1 Ñ1 V1 B3 D1 2 4 10 11 समततो, D3 G1 स सततान्, G2 M3 सुसनतान्, Ck t as in text (for सुसततान्) G2 वज्रि- V1 D5 7-9 समान- (for -निपात-)

27 Ñ2 V2 B1 2 4 D6 om. 27 (cf v l 26) —[a]) D7 9 तत स, M3 ततस्तु (for स तस्य) Ś1 Ñ1 D1-4 10 त (for तत्-) M1 स्यंदन च (hypm) (for स्यन्दन-) D3 4 8 S निस्वन (for निःस्वन) D11 स तस्य त निस्वनस्यन्दनस्य (sic) —[b]) D1 4 -पणव- (for -पटह-). Ś1 D10 -प्रणाद (for स्वन च) —[c]) D11 विकर्षमाणस्य. D5 स (for च) —[d]) Ś1 Ñ1 V1 B2 D1-4 10 11 शब्द, D7 9 M2 घोर (for घोष)

28 Ñ2 V2 B1 2 4 D6 om 28 (cf v l 26) D3 reads 28–29[b] in marg —[a]) B3 अंतरे पडे, D1 4 11 चातरेष्वाशु —[b]) Ś1 V1 D2 7 Ct व्यावर्तत, B3 D5 11 T2 3 व्यवर्धत (for व्यवर्तत) Ñ1 व्यपवर्तत वीर्यवान् ❀ Cr शराणामन्तरेष्वाशु व्यवर्तत महाकपिरिति पाठः ❀ —[cd]) Ś1 Ñ1 D10 11 [अ]तिवेग(D11 °लक्ष)स्य, V1 B3 D2.5 7-9 T3 G2 M3 Cv r m g t [अ]भि(B3 D2 [अ]ति)लक्ष्यस्य, D1 4 [अ]भिलापस्य (sic) (for [अ]भिलक्षस्य) Ś1 B3 D1 2 4 5 11 T3 Cmp मोहयल्, D8 T1 G1 2 M3 Cr m g मोचयल्, T2 घोषयल्, Ck t as in text (for मोक्षयॅल्) D1 4 11 T1 3 Cv लक्ष-, G3 मोक्ष-, Cr m g k t as in text (for लक्ष्य) M1 लक्ष्यसंग्रहमूहयन् (for [d]) D3 हनूमान्मोहयल्लक्ष्मारात्तस्य प्रतापवान्

G. 5.53 29
B. 5.56 22
L. 5.53.22

एवमाश्वास्य वैदेहीं हनूमान्मारुतात्मजः । गमनाय मतिं कृत्वा वैदेहीमभ्यवादयत् ॥ ८

येषां नोपरि नाधश्च न तिर्यक्सज्जते गतिः ।
न ते कर्मसु सीदन्ति महत्स्वमितविक्रमाः ।
नैकशस्तैर्महाभागे ससागरधराधरा ।
प्रदक्षिणीकृता भूमिर्वायुमार्गानुसारिभिः ।
मद्विशिष्टास्तथा तुल्याः सन्ति तत्र वनौकसः ।
मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसंनिधौ ।
अहं तावदिह प्राप्तः किं पुनस्ते महाबलाः ।
न हि प्रकृष्टान्प्रेष्यांश्च प्रेषयन्त्यवरावरान् ।
तदलं परितापेन देवि मन्युरपैतु ते ।
एकोत्पातेन ते लङ्कामेष्यन्ति हरिपुंगवाः ।
मम पृष्ठगतौ तौ च चन्द्रसूर्याविवोदितौ ।
त्वत्सकाशं महाभागौ नृसिंहावागमिष्यतः ।

[ l. 1— 14 = 5 37 34-40 —(l 1) B3 ऋद्धिमतो (for सत्त्ववन्तो) D3 मनोमारुतरंहस (for the post half). —D3 om l 2 —(l 2) D11 निवेशे (for निदेशे) D6 निदेशेऽस्य स्थिता (for the post half). —(l 3) V2 D3 नाधस्तान्, B3 धानश्च (meta) (for नाधश्च) Ñ2 B3 D6 तिर्यक्सज्जते गतिः (for the post half) —(l 4) D3 च (for ते) D3 तेजस (for -विक्रमा) —B3 om l 5-7. —(l 5) V2 B2 D11 नैकशतं (B2 °शस्ते) (for °शस्तैर्). V1 महानेगे (for °भागे) B4 एकशस्तैर्महावेगे, D3 असकृन्मनोत्साहे (for the prior half) Ñ2 D11 -धराधरौ (for °धरा) —(l 6) D3 सर्वा (for भूमिर्) B4 स्वर्ग- (for वायु) —(l 7) B4 तथा तन्ये, D3 च तुल्याश्च (for तथा तुल्या) —(l 9) D11 प्राप्ता (sic) (for प्राप्त). D3 वनौकस (for महाबला) —B3 om l 10 —(l 10) V1 ते, B1 तु (for च) D11 प्रेष्यस्तु (for प्रेष्यांश्च) Ñ2 [अ]महावरान्, B4 विपश्चित (for [अ]वरावरान्) V2 न ह्यत्र हृष्टान्प्रेष्यांस्ते प्रेषयति च वानरा, D3 न हि प्रकृष्टाः प्रेष्यन्ते * * प्रेष्य धराधरा —B1 transp l 11-12 and l 13-14 reading l 13-14 in marg —(l 11) Ñ2 V उपैतु (for अपैतु) B4 देवि सोऽस्त्वपैतु ते, D3 देवि मन्युरुपास्यता (for the post. half) —(l 12) B4 एकोत्पातेन लङ्कायाम् (for the prior half). D3 -यूथपा (for -पुंगवा) —V2 om l 14. —(l 14) B4 महाभागे, D3 अनयथागि (hypm) (for महाभागौ) ] —Thereafter Ñ2 V B D6 further cont, while Ś1 Ñ1 D1-4 7 8-11 cont after 1109*

1111* तौ च वीरौ नरवरौ सहितौ रामलक्ष्मणौ ।
आगम्य नगरीं लङ्कां सायकैर्विधमिष्यत ।
सगणं राक्षसं हत्वा नचिराद्रघुनन्दनः ।
त्वामादाय वरारोहे स्वां पुरीं प्रतियास्यति ।
समाश्वसिहि भद्रं ते भव त्वं कालकाङ्क्षिणी ।
क्षिप्रं द्रक्ष्यसि रामेण निहतं रावणं रणे ।
निहते राक्षसेन्द्रे च सपुत्रामात्यबान्धवे ।
त्वं समेष्यसि रामेण शशाङ्केनेव रोहिणी ।

[ l 1-8 = 5 37 41-44 B2 om (hapl) l 1 and 2. —(l 1) V -श्रेष्ठा (for -वरौ). Ñ2 V B1 3 4 D6 भ्रातरौ (for सहितौ) —(l 2) Ś1 D10 11 आगत्य (for आगम्य) V2 च पुरीं (for नगरीं) B4 आगत्य त्वां तौ धीरौ (for the prior half). —After l 2, D11 cont. 1110* —(l. 3) D1 4 रणे (for -गण) Ñ2 V B D3 6 रावणं (for राक्षसं) Ñ2 V B D6 राघवो (B3 वानरो) वरारोहेति (B1-3 °हीं) (for the post half). —(l. 4) D4 वरारोहा Ś1 स्व , B2 ता (for स्वां) B3 प्रतियास्यत, D2 3 अभियास्यति, D11 प्रतिगच्छति (for प्रतियास्यति) —B3 om l 5 —(l 5) Ñ V B1 2 4 D1-4, 6 तद् (for सम्-) D11 तदाश्वासय भद्रं ते (for the prior half). B4 देवि (for भव). —After l 5, D3 cont.

1111(A)* तानि दृष्ट्वा क्षमिष्यामि दानवोऽयं मदस्तव ।
क्षिप्रं द्रक्ष्यसि कल्याणि लङ्काद्वारि स्थितानि तु ।
मा विषादं विशालाक्षि कुरु द्रक्ष्यसि राघवम् ।
लक्ष्मणं च धनुष्मन्तं लङ्काद्वारमुपस्थितम् ।
सुग्रीवं च महात्मानं वानरेन्द्रमरिंदमम् ।
अनेकांश्च महाकायान्हरीन्हरिणलोचने ।
नगस्थायुधान्वीरान्सिंहशार्दूलविक्रमान् ।
वानरान्वानरेन्द्राभान्क्षिप्रं द्रक्ष्यसि संगतान् ।
महाम्बुदनिकाशानां लङ्कामभ्यागतान्पुरम् ।
नर्दतां कपिसैन्यानां क्षिप्रं श्रोष्यसि निःस्वनम् ।
निहतं च दशग्रीवं रामबाणैः समर्पितैः ।
भिन्नदेहतनुत्राणं क्षिप्रं द्रक्ष्यसि भामिनि ।

[ After l 2, D3 repeats l 1 and 2 of 1108* and then cont. 1110*.

—(l 6) Ñ1 V B1 D1 2 4 11 रावणं निहतं (by transp.). —(l 7) D2 3 तु (for च) B3 निहते रावणे चैव (for the prior half) Ś1 D10 -मित्र- (for -पुत्र). D11 -बान्धवैः —(l 8) Ñ2 D6 वीरेण (for रामेण). B4 मा त्वं यास्यति रामेण (for the prior half). —After the prior half of l 8, D10 wrongly repeats the post half of l 6 and the prior half of l 7 ]

—Ś1 Ñ V B D1-4, 6 10 11 om. $7^{cd}$ —$^{c}$) D5, 7 9 T1 3 विनिर्जित्य (for विजित्यारीन्).

8 D6 repeats $8^{cd}$ after $9^{ab}$. —$^{d}$) Ś1 Ñ2 V1 B D1 3 4 6 (first time) 10 11 जानकीम् (for वैदेहीम्). D5 अभ्यभाषयत् —After 8, Ś1 D2 10 ins

1112* असाध्या निश्चला लक्ष्मीस्तथा जयपराजयौ ।
दृष्टा हि सीता वैदेही श्रेयो मे गमनं स्थिरं ।

[ (l 1) D3 असाध्यानि च युद्धानि, D10 असाध्यानि त * * (for the prior half) —(l 2) D3 च (for हि) D3 वै (for मे) ],

While D3 ins after 8:

ततः स कपिशार्दूलः स्वामिसंदर्शनोत्सुकः ।
आरुरोह गिरिश्रेष्ठमरिष्टमरिमर्दनः ॥ ९

तुङ्गपद्मकजुष्टाभिर्नीलाभिर्वनराजिभिः ।
सालतालाश्वकर्णैश्च वंशैश्च बहुभिर्वृतम् ॥ १०

G. 5. 54. 3
B 5 56 34
L. 5 54 4

1113* हनूमता वाग्भिरदीनभाषिणा
मनोनुकूलाभिरभिप्रसादिता ।
हनूमतश्चाभिमुखी विदेहजा
मुदा कृतार्थेव बभूव वाबला ।

—Ś1 D2 10 after 1112*, D3 after 1113*, whereas Ñ V1 B D1 4 6 11 after 8, read an addl colophon

[*Sarga name* Ś1 D10 हनुमता सीताश्वासन, Ñ1 D2 सीताप्रत्याश्वासन, Ñ2 B1 2 4 D1 4 6 11 सीताश्वासन (D1 4 11 °न ), V1 सीतासमाश्वासन, B3 जानक्याश्वासन, D3 सीतासमाश्वासने हनुमत्प्रस्थान —*Sarga no* (figures, words or both) Ñ1 D1-4 10 11 om , Ś1 Ñ2 V1 D6 55 , B1 2 53 , B3 51 , B4 58 , D3 59 —After colophon, D2 concludes with राम ]

9 Before 9, Ś1 Ñ1 D1-4 7 9-11 (D11 repeats cf v l 1) T2 ins only l 1 of 1102* and then cont , while Ñ2 V1 B D6 ins. before 9

1114* समाश्वास्य च वैदेहीं दर्शयित्वा परं बलम् ।
नगरीमाकुलां कृत्वा वञ्चयित्वा च रावणम् ।
दर्शयित्वा बलं घोरं वैदेहीमभिवाद्य च ।
प्रत्यागन्तुं मनश्चक्रे पुनर्मध्येन सागरम् ।

[ Ś1 Ñ2 V1 B D6 om l. 1 D2 10 transp l 1 and 2 —(l 1) D2 10 पुनर्दृष्ट्वा (for समाश्वास्य) Ñ1 D1 3 धा(Ñ1 वा)रयित्वा, D4 दर्शयिष्यति ( hypm ), T2 पातयित्वा (for दर्शयित्वा ) D2 10 व्यथयित्वा च रावण, D11 भक्त्वा काननमुत्तम (for the post half) —(l. 2) Ñ1 व्याकुलां Ñ2 V1 B D6 आकुलां नगरीं ( by transp ) B D3 6 व्य(B3 क)थयित्वा (for वञ्च°) Ś1 D10 हत्वा च प्रवर बल, D2 वारयित्वा पुरं बलं (for the post half) —Ś1 om l 3 —(l 3) D2 मैथिलीम् ( for वैदेहीम् ) Ñ2 V1 B D6 अभिवाद्य(Ñ2 V1 D6 समाश्वास्य) च मैथिलीं (for the post half) —Ñ2 V1 B D6 om l 4 —(l 4) D7 9 प्रतिगन्तु D3 पुनश्च ( for मनश्च ). D3 कपिर् (for पुनर्) Ś1 मध्ये च (for मध्येन) ], whereas D8 ins before 9

1115* प्रदक्षिणं परिक्रम्य गगनं चोत्पपात ह ।

V2 om 9-26, Ñ2 om 9$^{a}$ —$^{a}$) B3 G2 च, G3 तु (for स ). —$^{b}$) B3 स्वामिदर्शन उत्सुक , B4 स्वामिन (sic) दर्शनोत्सुक —After 9$^{ab}$, D1 repeats 8$^{cd}$ —$^{cd}$) Ś1 Ñ V1 B1 2 4 D2 10 11 गिरिं मुख्यम् , B3 गिरिं सह्यम् (for गिरिश्रेष्ठम्) D3 सुवेलम् , G1 हनूमान , Cv as in text (for अरिष्टम्) Ś1 Ñ V1 B D2 9 10 11 अरि(Ñ1 B रिपु D10 निनि [sic] )सूदन (for अरिमर्दन ) D6 स तदा आरोह * गिरिमुख्यमरिसूदन

10 V1 B3 om 10 (for V2, cf v l 9) —$^{a}$) Ñ1 D1-4 11 -पर्वत , Cv as in text (for -पद्मक-) Ś1 D10 शीतमारुतजुष्टाभिर् , T2 स तुगपद्मजुष्टाभिर् —After 10$^{ab}$, D3 (ins only l 1 [ followed by 1116(A)* ] after 13 ) 5 7-9 S ins

1116* सोत्तरीयमिवाम्भोदैः शृङ्गान्तरविलम्बिभिः ।
बोध्यमानमिव प्रीत्या दिवाकरकरैः शुभैः ।
उन्मिषन्तमिवोद्धूतैर्लोचनैरिव धातुभिः ।
तोयौघनिःस्वनैर्मन्द्रैः प्राधीतमिव सर्वतः ।
प्रगीतमिव विस्पष्टं नानाप्रस्रवणस्वनैः । [5]
देवदारुभिरुद्धूतैरूर्ध्वबाहुमिव स्थितम् ।
प्रपातजलनिर्घोषैः प्राक्रुष्टमिव सर्वतः ।
वेपमानमिव श्यामैः कम्पमानैः शरद्घनैः ।
वेणुभिर्मारुतोद्धूतैः कूजन्तमिव कीचकैः ।
निःश्वसन्तमिवामर्षाद्घोरैराशीविषोत्तमैः । [10]
नीहारकृतगम्भीरैर्ध्यायन्तमिव गह्वरैः ।
मेघपादनिभैः पादैः प्रक्रान्तमिव सर्वतः ।
जृम्भमाणमिवाकाशे शिखरैरभ्रमालिभिः ।
कूटैश्च बहुधाकीर्णं शोभितं बहुकन्दरैः ।

[After l 1, D3 ins

1116(A)* परिधानमिवाधस्तान्नानातरुलतावृतम् ।

—(l 2) T1 2 G1 3 M1 Cr शुभे , Cg as above (for शुभैः). —(l 3) D8 [उ]द्भूतैर् (for [उ]द्धूतैर्) D3 नयनैर् (for लोचनैर्) —(l 4) D6 G M निस्वनैर् D5 G3 M2 मन्त्रैः , Cv g as above (for मन्द्रैः ) D3 तोयोपलस्वनैर्मन्द्रैः (for the prior half ) D3 5 9 T2 प्रधी(D3 °गी)तम् , Cr m g k t as above (for प्राधीतम्) T2 सवशः , G2 M3 पर्वत (for सर्वत ) —D3 transp l 5 and 6 —(l 5) D8 सम्पृष्ट, G2 M3 विस्प(M3 °स्पृ)ष्टैर् (for विस्पष्ट) D3 वाध्यतमिव विस्फोटैर् , T1 प्रगीतमिव सुस्पष्ट (for the prior half). —After l. 5, D3 ins

1116(B)* आगच्छन्तमिवाम्भोदैः रत्नशैलैश्शिलाचलैः ।
विस्तीर्णोपलजिह्वाग्रं द्विजिह्वमिव पन्नगम् ।

—(l 6) T G2 3 M1 3 अत्युच्चैर् (for उद्धूतैर्). —After l 6, D3 ins

1116(C)* प्रस्रवणजलप्रपातैर्वर्षन्तमिव सर्वत । (hypm )

—D3 transp l 7 and 8 —(l 7) T2 प्रपतज् , Cv as above (for प्रपात-) D3 प्रपातजलनिस्फोटैः (for the prior half) D3 प्रोत्सृष्टम् , M1 प्रावृष्टम् , Cr m g k t as above (for प्राक्रुष्टम्) T2 सर्वशः , G2 पवन (for सर्वत ). —After l. 7, D3 ins

1116(D)* आलिखन्तमिवाक्ष्यो-यैर्गण्डशैले शिलाचलैः ।
विस्तीर्णकरबाहूरु सशरीरमिवाचलम् ।

G. 5. 54 4
B. 5. 56 34
L. 5. 54. 5

लतावितानैर्विततैः पुष्पवद्भिरलंकृतम् ।
नानामृगगणाकीर्णं धातुनिष्यन्दभूषितम् ॥ ११

बहुप्रस्रवणोपेतं शिलासंचयसंकटम् ।
महर्षियक्षगन्धर्वकिंनरोरगसेवितम् ॥ १२

लतापादपसंबाधं सिंहाकुलितकन्दरम् ।
व्याघ्रसंघसमाकीर्णं स्वादुमूलफलद्रुमम् ॥ १३

तमारुरोहातिबलः पर्वतं प्लवगोत्तमः ।
रामदर्शनशीघ्रेण प्रहर्षेणाभिचोदितः ॥ १४

तेन पादतलाक्रान्ता रम्येषु गिरिसानुषु ।
सघोषाः समशीर्यन्त शिलाश्चूर्णीकृतास्ततः ॥ १५

—(l 8) G1 कम्पमानम् D5 T1 3 G1 3 M1 शरद्भैः D3 स्फथ-मात्रं गिलोच्चय (for the post. half) M3 वेपमानमिवाकाशे शिखरैरभ्रमालिभि ※ Cv शरद्भन, शरद्वानिति यथा कृपाचार्य-जनकस्य शरस्तम्बजात इत्यतो हेतोस्तन्नामवन्तीति ।, Cr k शरद्भैः (Ck इति पाठः)। शिखरलीनैरिति शेष ।, Cm t शरद्भैः सप्तपर्णादिशारदवृक्षसंघैः ।, Cg शरदि ये घना भवन्ति ते शरद्घना । शरत्कालपुष्पिण सप्तच्छदादयस्तैः शुभ्रीभूतंजया कम्पमानमिव स्थित-मिलर्थः । शरद्भैरिति पाठे बहुवार्षिकवृक्षरित्यर्थः । शरवणैरिति वार्थः । तत्रारातोऽप्यस्ति । शरवणे जातस्य कृपाचार्यस्य शारद्वत इति नाम-दर्शनात् ※ —M2 om l 9–14 —(l 9) D5 reads मिव कीचके in marg —(l 10) D7–9 T3 G M1 3 निश्वसतम् D3 -[उ]त्स्वणैः, D5 8 G -[उ]पम, T2 -[अ]निलं, Cg as above (for -[उ]त्तम) —(l. 11) T2 -[आ]वृत-, G2 -[आ]वृत्ति, G3 वृत-, Cv as above (for -कृत-) D3 नीहारमिव गभीरं (for the prior half) D5 कदरैः (for गह्वरैः) —(l 12) D3 -राजि-, D5 -पान, T2 M1 -जाल-, Cv as above (for -पान-) G1 मेघवातनिभैर्वातैः (for the prior half) D3 प्रक्षुब्धम् (for प्रक्रान्तम्) G1 M3 पर्वतम् (for सर्वतः) —T1 illeg for l 13 —(l 13) T3 -जालिभि, G3 Cr k -शालिभि, Cm g t as above (for -मालिभि) —After l 13, D3 ins

1116(E)* गुहान्तरगतैः सिंहैर्गर्जन्तमिव धिष्ठितैः ।
लतागृहसमाकीर्णं कुडिलैर्बहुभिरावृतम् ।

—(l. 14) D5 M3 Cg [आ]कीर्ण, Ck as above (for °र्णं). D3 निकुञ्जविविधाकारं (for the prior half) D8 -कुञ्जं (for कन्दरं) —After l 14, D3 ins

1116(F)* बहुभूर्जकपारैश्च चन्दनैश्च समावृतम् । ]

—c) B1 D1–4 6 शाल- (for माल) D 6 11 -तालैश् (for ताल-) V1 D5 7 9–11 च (for -[अ]श्व-) Ñ1 सालतालाश्व कर्णैश्च —d) Ś1 D1 2 4 10 11 वन्यैश्; Ñ V1 B1 2 4 D6 द्रुमैश् (for वशैश्) M1 विविधैर् (for बहुभिर्)

11 V2 om 11 (cf v l 9). —a) Ś1 Ñ1 D10 11 बहुभि, Ñ2 V1 B D1–4 6 विविधै, D5 वितत (for विततैः) —B1 om (hapl) $11^{d}$–$13^{c}$, D8 om (hapl ?) $11^{cd}$ G1 M1 transp $11^{d}$ and $13^{d}$ —d) B1 D1 4 9 -निस्यद-, D3 -निस्पद-, D6 7 -निष्पद-, D11 -विस्फर-, M1 -विष्यद-, Cr m g t as in text (for -निष्यन्द-) Ś1 Ñ D5 10 -शोभित (for -भूषितम्) V1 सान्द्रस्पन्दनभूषित, B2 3 धातु-वृन्दविभूषित, T2 स्वादुमूलफलद्रुम(= $13^{d}$) ※ Cv धातु-विष्यन्दभूषितमिति पाठ ※

12 V2 B4 om. 12 (cf v l 9 and 11). —b) Ñ2 D6 M3 -सकुल, M2 कटम्, Cm t as in text (for सकटम्) Ś1 शिलाभिश्च सुसकट —d) D5 -भूषित (for सेवितम्)

13 V2 om 13, B4 om $13^{abc}$ (cf v l 9 and 11), B3 om $13^{ab}$ —a) B2 नाना- (for लता) D3 M3 Cg सघातं, D10 -सवाद, D11 -सवाध (sic), Ct as in text (for -संबाध) —b) Ñ2 V1 B1 -[आ]शुलित- (sic), D5 7–9 T2 -[अ]धिष्ठित-, T1 3 M3 -[अ]स्युषित-, G1 M1 2 -[आ]लुलित-, G2 3 -[आ]लोलित- (for -[आ]कुलित-). Ś1 D10 11 सिद्ध(Ś1 मुनि)सेवितकदरं, D1 4 सिंहमह्(D1 °ह)-तकदर —c) Ś1 Ñ V1 B2 3 D6 10 -सिंह-, D1 -द्वीपि; D2–4 -द्विप-, G2 -सघै. (for -संघ-) B1 सिंहव्याघ्र, D5 7–9 T2 व्याघ्रादिभि· (for व्याघ्रसंघ-) D11 व्याघ्रसिंहसमायुक्त. —G1 M1 transp $11^{d}$ and $13^{d}$ —d) D2 चारु (for स्वादु-) T1 3 G2 3 -फलोदक (for फलद्रुमम्) D8 धातु-निष्पदभूषित —After 13, D8 ins only l 1 (followed by 1116(A)*) of 1116*

14 V2 om 14 (cf v l 9). —a) Ś1 D3,10 सम्- (for तम्) B2 3 विपुल, D1 4 [अ]तिचल, T1 3 G2 M3 हनुमान् (for [अ]तिबल) D5 7–9 T2 G1 3 M1 2 आररोहानिलसुत. —b) D1 4 वानरोत्तम; T1 3 G2 M3 पवनात्मज (for प्लवगोत्तम). —c) G2 -शौर्येण, Cr m t as in text (for -शीघ्रेण). D11 रामदर्शनमासाद्य —d) V1 B1–3 D2 11 प्रचो(V1 °नो, D11 °मो)दित, D6 च चोदित· (for [अ]भिचोदित) Ś1 B4 D10 म हर्षेण(B4 हर्षेण च) प्रचोदित·, Ñ1 स हर्षेणाथ देशित, D1 4 पौरुषेण प्रणोदित; D3 5 M2 हर्षेणा(D3 मनसा)भिप्रचोदित.

15 V2 om 15 (cf v l 9). —a) D2 कपि (for तेन) Ñ2 G1 2 M2 -क्रान्ता, B2 -क्लिष्टा (for -[आ]क्रान्ता). —b) D4 रमणीयेषु(hypm) (for रम्येषु) —cd) Ñ B D6 सनिनादम् (for सघोषा· सम्-) M1 ममकीर्यंत Ś1 D1 2 4 10 11 सघोषमव(Ś1 D10 °+य)शीर्यंत (for c) Ś1 धूली, B2 D6 चूर्णा (for चूर्णी-). D1 2 4 G2 M1 तदा; D5 11 तथा, Ck as in text (for तत) D3 सघोषमिव शीर्यंत शिलाश्चोपलसकटा

स तमारुह्य शैलेन्द्रं व्यवर्धत महाकपिः ।
दक्षिणादुत्तरं पारं प्रार्थयँल्लवणाम्भसः ॥ १६

अधिरुह्य ततो वीरः पर्वतं पवनात्मजः ।
ददर्श सागरं भीमं मीनोरगनिषेवितम् ॥ १७

स मारुत इवाकाशं मारुतस्यात्मसंभवः ।
प्रपेदे हरिशार्दूलो दक्षिणादुत्तरां दिशम् ॥ १८

स तदा पीडितस्तेन कपिना पर्वतोत्तमः ।
ररास सह तैर्भूतैः प्राविशद्वसुधातलम् ।
कम्पमानैश्च शिखरैः पतद्भिरपि च द्रुमैः ॥ १९

तस्योरुवेगोन्मथिताः पादपाः पुष्पशालिनः ।
निपेतुर्भूतले रुग्णाः शक्रायुधहता इव ॥ २०

कन्दरोदरसंस्थानां पीडितानां महौजसाम् ।
सिंहानां निनदो भीमो नभो भिन्दन्स शुश्रुवे ॥ २१

स्रस्तव्याविद्धवसना व्याकुलीकृतभूषणा ।
विद्याधर्यः समुत्पेतुः सहसा धरणीधरात् ॥ २२

अतिप्रमाणा बलिनो दीप्तजिह्वा महाविषाः ।
निपीडितशिरोग्रीवा व्यवेष्टन्त महाहयः ॥ २३ G 5. 54 17 B 5 50 47 L. 5 54 19

---

16 V2 om 16 (cf v l 9) —[c]) N2 B4 D2 3 6 तीर (for पार) —[d]) Ś1 D10 पर्यटँल्ल, Ñ1 समीक्ष्य, Ñ2 V1 B D3 6 गमिष्यँल् (for प्रार्थयँल्ल) D2 11 लवणाभसि

17 V2 om 17 (cf v l 9) —[a]) B3 अभि-, D11 अव (for अधि-) —[c]) Ñ V1 B D6 घोर (for भीम) —[d]) B1 D4 7 9 भीम-, D3 महा- (for मीन-) Ñ1 विभूषित (for निषेवितम्) D2 भीमनक्रनिषेवित

18 V2 om 18 (cf v l 9) —[a]) Ś1 Ñ V1 B D1 2 4 6 10 11 [आ]काशे —[b]) Ś1 Ñ V1 B D1–4 6 10 11 [औ]रस सुत (for [आ]त्मसंभव). —[d]) Ś1 Ñ V1 B D1–4 6 10 11 पितु पथानमुत्तम

19 V2 om 19 (cf v l 9) —[a]) Ś1 D1 4 10 11 M1 स तथा, Ñ V1 B2 3 D2 6 तत स, B1 4 D3 तत (B4 °त्र) स (for स तदा) —[cd]) D4 रराज, D11 चचाल (for ररास) Ñ V1 B2–4 D3 6 सहितै (Ñ1 °त) सर्वै (B2 D3 °र्वै), B1 D2 सह तै· सर्वै (D2 °र्वै), D1 4 सवृतो वृक्षै, D7–9 T2 G3 M2 विविधैर्भूतैं, D11 सवृतैर्वृक्ष, Cg as in text (for सह तैर्भूतै) Ñ2 V1 B1 2 D1 4 6 8 G3 M3 प्र(M3 प्रा)विशन्(B1 °द्), D11 प्रविष्टश् (for प्राविशद्) Ñ1 D1 2 4 11 च महीतल (for वसुधा°) D3 विशन्निव महीतल (for [d]) Ś1 D10 सर्वैश्च सहित सत्त्वे प्रविवेश महीतल —B3 om 19[ef] —[f]) G3 इव (for अपि) Ś1 Ñ1 D1 2 4 10 11 पतद्भिश्चाचलोप(Ś1 Ñ1 D11 °त्त)मै, Ñ2 B1 2 4 D6 प्र(B2 नि)पतद्भिस्तथापरै, V1 . . . . . नद्रमै (illeg), D3 पतद्भिश्च तथापरे —After 19, Ś1 Ñ V1 B1 2 4 D1–4 6 10 11 ins

1117* स गिरि क्षोभितस्तेन प्रनृत्त इव लक्ष्यते।

[B4 प्रनृत्य (sic), D1 4 प्रनृत्यन्, D3 10 11 प्रवृत्त (for प्रनृत्त) Ś1 D10 दृश्यते, B1 लक्ष्ये(sic) (for लक्ष्यते)]

20 V2 om 20 (cf v l 9) —[a]) B D5 -वेगान् (for वेग) Ñ D6 -मथिता (for -[उ]न्म°) Ś1 D10 तस्योरुवेगमाश्रित्य —[b]) Ś1 D3 10 शोभित, Ñ V1 B D1 2 4 6 11 -शोभिता (for -शालिन) —[c]) Ś1 Ñ V1 B D1–4 6–11 भग्ना· (for रुग्णा) —[d]) Ś1 Ñ V1 B D1–4 6 10 11 शक्रवज्र-(Ś1 °ज्रा), G2 शक्राशनि-, Cg t as in text (for शक्रायुध-)

21 V2 om 21 (cf v l 9) Ñ1 om 21[ab] —[a]) Ś1 Ñ2 V1 B1 2 4 D1–4 10 11 T1 3 M3 -[अं]तर- (for -[उ]दर-) B3 D6 कन्दरान्तरसक्ता(D6 °सस्था)ना —[b]) Ś1 D1 2 4 10 11 महात्मना (for महौजसाम्) —[c]) Ñ V1 B D1 4 6 11 घोरो (for भीमो) D8 महास्तु निनदो भूयो —[d]) D7–9 हि, T2 G2 प्र- (for स) Ś1 Ñ V1 B D1–4 6 10 11 G1 मेघानामिव शुश्रुवे

22 V2 om 22 (cf v l 9) —[a]) D7–9 Ct त्रस्त-, M1 हस्त-, Cr g k as in text (for स्रस्त-) Ś1 D10 11 -प्रवृद्ध-, B2 D6 व्याकृष्ट-, D1 4 प्रविद्ध, M3 व्यावृत्त-, Cr m g t as in text (for -व्याविद्ध-) Ñ V1 B1 3 स्र(Ñ1 त्र)स्तव्याकु(B1 °ह्न)ष्टवसना, B4 त्रस्तविक्षिप्तवसना, D2 स्रस्तप्रवृद्धरशना, T1 3 G2 स्रस्तव्यावृत्त(G2 °विद्ध)-रशना ॐ Cm t (Cm त्रस्तव्याविद्धवसना इति पाठ ।) त्रस्तेन त्रासेन(Ct त्रस्ता·, अत एव) व्याविद्धानि व्यत्यस्तानि वसनानि यासा ता ॐ —[b]) D10 -भूषिण (sic) (for -भूषणा) —After 22[ab], D1 reads 24 —[c]) Ś1 D10 प्रपेतुश्चागनास्त्रस्ता, Ñ2 V1 B D2 स(D2 स)मुत्पेतुर (D2 °श्चा)प्सरस, D1 4 पेतुश्चाप्सरसस्त्रस्ता, D11 प्रपेतुश्चामरास्त्रस्ता —[d]) Ñ1 B1 4 D10 -तलात्(D10 °ले) (for -धरात्)

23 V2 om 23 (cf v l 9) Ś1 Ñ V1 B D2–4 6 10 11 transp 23 and 24 (including 1118*) —[a]) D1 4 प्रति- (for अति-) D1 G1 M1 प्रमाण (for -प्रमाणा) Ñ V1 B1–3 D6 बहवो, M2 विपुलो (for बलिनो) B4 अप्रमाणाश्च बहवो —[b]) D1 4 दीर्घजघा, D3 G2 M2 दीर्घजिह्वा (for दीप्तजिह्वा) —[c]) D8 नि पीडित- B4 -भुज- (for -शिरो) —[d]) G2 व्यावेष्टत Ś1 D10 T2 G महोरगा, T1 3 गुहाशया (for महाहय) Ñ V1 B D6 व्यचेष्ट(Ñ1

G. 5 54 16
B 5 56 48
L. 5 54 18

किंनरोरगगन्धर्वयक्षविद्याधरास्तथा ।
पीडितं तं नगवरं त्यक्त्वा गगनमास्थिताः ॥ २४
स च भूमिधरः श्रीमान्बलिना तेन पीडितः ।
सवृक्षशिखरोदग्रः प्रविवेश रसातलम् ॥ २५
दशयोजनविस्तारस्त्रिंशद्योजनमुच्छ्रितः ।
धरण्यां समतां यातः स बभूव धराधरः ॥ २६

इति श्रीरामायणे सुन्दरकाण्डे चतुःपञ्चाशः सर्गः ॥ ५४ ॥

°चर )त भुजगमा , D1–4 8 व्य( D2 त्रि[ sic ] )चेष्टत महोरगा , D11 निविष्टातमहोरगा . ❀ Cmt व्यवेष्टन्त कुण्डलीकृतशरीरा अजायन्त । व्यचेष्टन्तेति पाठे पीडया अलुण्ठन्नित्यर्थः . ❀ —After 23, Ś1 Ñ V1 B D1–4 6 10 11 ins

1118* क्वचित्सुस्राव सलिलं क्वचिद्गर्जति स्वनम् ।
धातूनन्यांश्च विविधान्महाप्लवगपीडित ।

[ (l 1) Ñ V1 B1 4 D1–4 6 11 सु( B1 D1–3 11 शु )श्राव (sic) (for सुस्राव) Ñ B3 D3 4 6 -नि ( Ñ1 -स, Ñ2 B3 -नि )-स्व( D3 °श्र )व, V1 -निस्वन, B1 4 D2 -विश्र( D2 °स्र )व, D11 -मिश्रः (corrupt) (for -ति स्वनम्). B2 क्वचिच्च रजनस्त्र (for the post half) —B3 om l. 2 —(l 2) Ñ2 B2 D3 6 अन्यत्र (for अन्यांश्च) V1 B1 धातून्यत्र निविधान् (for the prior half) Ś1 -पीडिता , D11 -पीडितान् (for -पीडित ). B4 महापावरपीडितान् (for the post half) ]

24 V2 om 24 (cf v l 9) Ś1 Ñ V1 B D2–4 6 10 11 transp 23 and 24 (including 1118*) D1 reads 24 after 22[ab] —[a]) Ś1 V1 D1–4 10 11 M1 -गधर्वा —[b]) Ś1 यक्षा (for -यक्ष ) T2 G2 3 M3 तदा (for तथा) —[c]) Ñ V1 B D6 पीडितम् (for पीडित) D6 ते (for त). Ś1 D10 गिरिवर, B3 °द्वार (for नगवर) —[d]) B3 आश्रिता (for आस्थिता )

25 V2 om 25 (cf v l 9) —[a]) Ñ V1 B D1 6 तु (for च) Ś1 D10 स चापि पर्वत श्रीमान् —[b]) D1 4 11 स( D11 [ज] )नि प्रपीडित , D2 प्रतिपीडित .—[c]) Ś1 D10 समृद्ध- (for स वृक्ष ) Ñ1 स च वृक्षशिरोदग्र., D3 °शिखर. सर्व , D4 °शिरोदग्र . —[d]) D1 4 महीतल (for रसा° ).

26 V2 om. 26 (cf v l 9) —[a]) B3 D8 11 -विस्तीर्ण , G1 -विस्तारं (for -विस्तारस्). Ñ1 दशयोजनमायात —[b]) G1 आयत, G2 आयत (for उच्छ्रित ) Ś1 D1 4 10 11 त्रिंशदुच्छ्रित( Ś1 D10 °च्छ्राय )योजन , Ñ V1 B D6 शतयोजनमायत ( Ñ1 °विस्तर ). —[cd]) Ś1 धरण्या ; D3 °णी , T3 °ण्या (for धरण्या) D2 प्राप्तो (for यात ). B4 धराधिप (for °धर ). D2 3 बभूव स (by transp ). Ś1 D10 बभूव स महीधर ; Ñ V1 B1–3 D1–4 6 बभूव वसुधा( D1 4 धरणी )धर (for [d]) D11 धरण्या शिशुता यात सवेगो धरणीधर —After 26, D2 ins राम, D5 7–9 S ins

1119* स लिलङ्घयिषुर्भीमं सलीलं लवणार्णवम् ।
कल्लोलास्फालवेलान्तमुत्पपात नभो हरिः ।

[ (l 1) D5 सलिलं लङ्घयन्भीम (for the prior half). D7 8 G1 M1 सलिल (for सलील) D5 G1 M1 2 सलिल- (for लवण ) —(l. 2) D9 -वेगान्तम् (for -वेलान्तम्). D8 गिरे (for हरि ). ]

Colophon —*Sarga name* Ś1 D10 अरिष्टसूदन, Ñ V B D1 4 6 11 अरिष्टारोहण( Ñ2 D1 4 11 °ण ), D2 अभिप्लवन , D3 हनुमत्त्रिकूटारोहण . —*Sarga no* (figures, words or both) N1 D1 2 4 10.11 om , Ś1 N2 V1 D5–9 T G M1 3 56, V2 45, B1.2 54 (as in text); B3 52, B4 59, D3 60, M2 55 —After colophon, G M1.3 conclude with श्रीरामाय नम (M3 also शुभमस्तु ).

# ५५

सचन्द्रकुमुदं रम्यं सार्ककारण्डवं शुभम् ।
तिष्यश्रवणकादम्बमभ्रशैवलशाद्वलम् ॥ १
पुनर्वसुमहामीनं लोहिताङ्गमहाग्रहम् ।
ऐरावतमहाद्वीपं स्वातीहंसविलोडितम् ॥ २
वातसंघातजातोर्मिं चन्द्रांशुशिशिराम्बुमत् ।
भुजंगयक्षगन्धर्वप्रबुद्धकमलोत्पलम् ।
अपारमपरिश्रान्तः पुप्लुवे गगनार्णवम् ॥ ३
ग्रसमान इवाकाशं ताराधिपमिवालिखन् ।
हरन्निव सनक्षत्रं गगनं सार्कमण्डलम् ॥ ४
मारुतस्यालयं श्रीमान्कपिर्व्योमचरो महान् ।
हनूमान्मेघजालानि विकर्षन्निव गच्छति ॥ ५

G 5 55 14
B 5 57 6
L 5 53 14

## 55

Before 1, D1 4 ins, while D3 ins. after 1$^{ab}$

1120* सचुक्रोच कपि कर्णौ बाहुभ्या परिपीडितौ ।
स निरुध्य हृदि प्राणानुत्पपात महाबल ।
देवराजध्वजाकार कपिल रोममिश्रितम् ।
विपरिक्षिप्य लाङ्गूलमम्बान महद्दास्थित ।

[(l 1) D3 सकोच्य च (for सचुक्रोच) D3 परिपीड्य गां, D4 परिपीडित —(l 2) D1 सनिरुध्य (for स नि°) D3 प्राणम् (for प्राणान्) —(l 3) D3 लोमभिश्र् (for रोमभिश्र्) ]
—Thereafter D1.4 cont, Ś1 V B4 D2 10 11 ins before 1, while D7–9 ins before 3$^{cd}$

1121* आप्लुत्य च महावेग पक्षवानिव पर्वत ।

—After 1120*, D3 cont..

1122* स लब्ध्वा महाघोर दक्षिण सागरोत्तमम् ।
जगद्व्याप्य जगचैव ननाद व्यथयन्कपि ।

1 Before 1, D7–9 read 3$^{cd}$ (preceded by 1121*) —$^{a}$) V2 सचित्र (for सचन्द्र-) Ś1 B4 -कुसुम, D11 मुकुट (for -कुमुद) —$^{b}$) Ś1 B4 D1–4 10 11 सूर्य- (for सार्क-) —$^{c}$) Ś1 Ñ V B D1–4 6 10 11 पुष्य- (for तिष्य) Ñ2 कादर्थम् (sic), T2 -कारडम् (for -कादम्बम्) —$^{d}$) B4 मेघ- (for अभ्र-) B4 D2 5 8 T2 G2 3 M1 3 Cg -शैवाल-, V2 -शैलश्च, D10 -शेवल-, Ct as in text (for -शैवल-) D2 4 6–9 T2 G M1 2 -शाड्वल, D11 -शाड्वलै, Cg t -शाद्वल (as in text)

2 $^{a}$) D2 6 11 -महाभीम (D6 °मा [sic]) (for °मीनं) —$^{b}$) B1 G1 लोहिताग, Cr m g t as in text (for °ताङ्ग) Ś1 D1–4 10 11 रक्ताग (Ś1 D10 चक्राग, D11 रक्ताक्ष) ग्राहभीषण —$^{d}$) Ś1 Ñ V2 B1 4 D1–6 10 11 स्वाति- (for स्वाती) Ś1 V2 D1 4 8 10 11 Cg विलोलि (Ś1 °हि, D4 °भि]त, Ñ1 D7 9 -विलासित, T1 3 G M -विलोळित, Ct as in text (for -विलोडितम्)

3 B3 om 3$^{ab}$ —$^{a}$) Ś1 वायु- (for वात-) D3 -सजात (for सघात-) Ś1 D1 3 4 10 11 -भीनोर्मि (Ś1 D10 °र्मि), Ñ1 D5 8 Ct -जालोर्मि- (Ct °र्मि), Ñ2 V B1 2 4 D6 -घोरोर्मि, D2 -यातोर्मि, D7 9 -ज्वालोर्मि-, T1 3 G1 M Cg -जातोर्मि, Ck as in text (for -जातोर्मि) —$^{b}$) D11 -शिखर- (for -शिशिर-) Ś1 D1–4 10 11 -[अं]बुद, Ñ2 V B1 2 4 D6 -[उ]द्रक, D5 -[अं]बुवत् (for -[अ]म्बुमत्) ❀ Ct मतुनार्प ❀ —D7–9 read 3$^{cd}$ (preceded by 1121*) before 1. —$^{d}$) Ś1 Ñ1 D1 2 4 10 11 -समृद्ध-(Ñ1 °द्ध), Ñ2 D6 -विशुद्ध-, V B2 3 -विवृद्ध-, B1 D3 -विबुद्ध, B4 -विहग- (for -प्रबुद्ध-) —After 3$^{cd}$, D5 T G M3 ins, while D8 M2 ins after 3$^{ab}$

1123* हनूमान्मारुतगतिर्महानौरिव सागरम् ।

—Ś1 D1 2 4 10 11 read 3$^{ef}$ and 8$^{ab}$ after 4 —$^{e}$) B4 अपानम्, D7 9 हनूमान् (for अपारम्) B1 अपरिश्रात —$^{f}$) T2 लवण- (for गगन-). Ś1 D1–4 10 सा (Ś1 चा)-बुधि सम (Ś1 D3 10 स ह्य) गाहत, Ñ1 V1 B1–3 सोवगाह्नभ सर (B3 °ह हनूमत), Ñ2 V2 B4 D6 सोगाहत नभ-सर, D11 खातु विशमगाहत (sic) —After 3 D3 reads 5$^{ab}$

4 D6 om 4–5$^{ab}$ Ñ V B om 4 —$^{a}$) D3 प्रजातश्च महातेजास् —$^{b}$) D3 7–9 G2 3 M3 Cm t [उ]ल्लिखन् (D8 °खत्), D5 [आ]लिखत् (for [आ]लिखन्) Ś1 D1 2 4 10 11 तारापतिमि (D1 2 4 °रि) वोल्लिखन्, T3 ताराविपतिमालिखन् —After 4, Ś1 D1 2 4 10 11 read 3$^{ef}$ and 8$^{ab}$

5 D6 om 5$^{ab}$ (cf v l 4) Ñ V B D6 transp 5–7 (D6 5$^{c}$–7) and 8$^{c}$–9 and only with 10 read (including star passages) after 16 (preceded by 1132*) D1 4 11 read 17$^{ab}$, 9 and 5 (including star passages) after 10 D10 repeats 5–7 (including star passages) after 9 G1 repeats 5 after l 5 of 1131* Ś1 repeats 5$^{ab}$ (followed by 1124*) after 9, while D3 reads 5$^{ab}$ after 3 —$^{ab}$) Ś1 Ñ2 V2 D1 2 4 8 10 (Ś1 D10 both times) T G2 M1 3 [आ]त्मज, B4 सुत, Ck as in text (for [आ]लय) B3 राजन् (for श्रीमान्) D3 स मारुतात्मज श्रीमान् (for $^{a}$) Ś1 D10 (both first time) कपिर्वायुसमो जवे (for

5 55 15 पाण्डुरारुणवर्णानि नीलमाञ्जिष्ठकानि च ।
5 7 7 हरितारुणवर्णानि महाभ्राणि चकाशिरे ॥ ६
5 55 16 प्रविशन्नभ्रजालानि निष्क्रमंश्च पुनः पुनः ।
प्रच्छन्नश्च प्रकाशश्च चन्द्रमा इव लक्ष्यते ॥ ७

नदन्नादेन महता मेघस्वनमहास्वनः ।
आजगाम महातेजाः पुनर्मध्येन सागरम् ॥ ८
पर्वतेन्द्रं सुनाभं च समुपस्पृश्य वीर्यवान् ।
ज्यामुक्त इव नाराचो महावेगोऽभ्युपागतः ॥ ९

—$^b$) D7 9 अपारमपरिश्रान्तश्चाम्बुधिं समगाहत —After $5^{ab}$, Ś1 Ñ V B D1 2 4 10 11 ins

1124* सप्रस्फालेव गगनं कर्षन्निव दिशो दश ।

[Ś1 D10 (both first time) स(D10 स)प्रकम्पेव and (second time) सप्रच्छाद्येव, Ñ V2 B1 3 सप्रयाते(V2 B3 °णे)न, B2 D2 सप्रयाते(D2 °काल्ये)व, B4 सपपातोरु (for सप्रस्फालेव) V1 मपातयन्निव व्योम (for the prior half) D2 एव (for इव) ]

—D3 om $5^{cd}$–8 —$^d$) D10 (second time) विकिरन्, T2 प्राकर्षन्, G3 प्रकर्षन् (for विकर्षन्) —After 5, Ś1 Ñ V B D1 2 4 6 10 11 ins

1125* बाहुभ्यामन्तरे सक्तं मेघजालं च पाण्डुरम् ।

[Ś1 D1 4 10 (first time) 11 भुजयोर् (for बाहुभ्याम्) D2 भुजयोरन्तरासक्त (for the prior half) D1 om (hapl) from the post half up to the prior half of 1126* Ś1 D2 4 10 (first time) 11 सु(D2 10 स)पाण्डुर (for च पाण्डुरम्) ]

—Thereafter Ś1 Ñ1 D1 2 4 10 11 cont

1126* उत्तरीयमिवासक्तमासीत्तस्य महाकपेः ।
[D1 om. महा- ]

6 For sequence in Ñ V B D6, cf v l 5 D3 om while D10 repeats 6 (cf v l 5) —$^a$) T1 G M पाण्डुर —$^b$) Ś1 Ñ V B D1 2 4 6 10 (both times) 11 -लोहितकानि (for -माञ्जिष्ठकानि). —G transp $6^{cd}$ and 7 M1 transp. $6^{cd}$ and $7^{ab}$ repeating $6^{cd}$ after l 1 of 1127* —$^c$) Ś1 Ñ V B D1 2 4 6 10 (both times) 11 कपिनाकृ(D11 °ह)ष्यमाणानि —$^d$) B3 महार्हाणि (for महाभ्राणि) ❀ Cv पाण्डुरारुणेत्यादिश्लोकस्योत्तरार्धं हरितारुणेत्यादि । प्रविशन्नित्यादेः श्लोकस्योपरि लेखकप्रमादैस्तलिखितम् ।, Cg पाण्डरेति । व्यक्ताव्यक्तवाचित्वेन अरुणशब्दयोः कथंचित्पौनरुक्त्यमुन्नेयम् । यद्वा "अरुण कृष्णलोहित" इत्यमरशेषः ❀

7 For sequence in Ñ V B D6, cf v l 5 D3 om while D10 repeats 7 (cf v l 5) G transp $6^{cd}$ and 7 —$^a$) Ś1 Ñ V B D1 2 4 6 10 (both times) 11 चालयन्मेघवृन्दा(V B1 °जाला, D11 °वर्णा)नि. —$^b$) Ś1 Ñ1 D10 (first time) निपतंश्, Ñ2 V B D1 4 6 11 उत्पतंश्, D2 T3 G2 M1 2 निष्पतंश्, D7–9 T1 G1 3 निष्कामंश् (for निष्क्रमंश्). D10 (second time) लङ्घयंश्च पुनः पुनः.—After $7^{ab}$, M1 reads $6^{cd}$ repeating it after l 1 of 1127* —$^c$) B2 3 प्रसन्नश् (for प्रच्छन्नश्) V2 om first च D7 9 प्रकाशश्चाप्रकाशश्च —$^d$) D4 लक्ष्यसे (sic), D7 9 दृश्यते (for लक्ष्यते) —After 7, Ś1 D10 read 11–16 (including star passage) —After 7, D2 ins 1132*, while D5 7–9 S ins

1127* विविधाभ्रघनापन्नगोचरो धवलाम्बरः ।
दृश्यादृश्यतनुर्वीरस्तदा चन्द्रायतेऽम्बरे ।
तार्क्ष्यायमाणो गगने बभासे वायुनन्दनः ।
दारयन्मेघवृन्दानि निष्पतंश्च पुनः पुनः ।

[(l. 1) D9 -[आ]पन्न, G2 -[आ]सन्न-, Cv as above (for -[आ]पन्न) —(l 2) M1 -वपुर्, Cv m.g t as above (for -तनुर्) D7 9 तथा (for तदा) ❀ Ct अयं श्लोकः प्रक्षिप्त इति भाति ❀ —(l 3) D9 गमने (for गगने) D7 9 स बभौ (for बभासे) —(l 4) D8 T2 G3 -जालानि (for -वृन्दानि).]

8 D3 om 8 (cf v l 5). Ś1 D1 2 4 10 11 read $3^{ef}$ and $8^{ab}$ after 4 D5 7–9 S repeat $8^{ab}$ after l 1 of 1131*.—$^a$) Ś1 D1 2 4 10 11 दिशो (for नदन्). D6 G1 M1 (all second time) हनुमान् (for महता). —$^b$) Ñ1 illeg for मेघस्वन- B3 -महास्वन, D6 -समस्वन (for -महास्वनः) Ś1 D1 2 4 10 11 पूरयन्मेघनिःस्वनैः, B1 मेघस्वनमिव स्वनं, G2 (both times) हनूमान्मेघनिःस्वनः —After $8^{ab}$, T2 ins

1128* ननाद विविधं नादं रोदसी पूरयन्निव ।

—Thereafter T2 cont, while D5 7–9 T1 3 G M ins after $8^{ab}$

1129* प्रवरान्राक्षसान्हत्वा नाम विश्राव्य चात्मनः ।
आकुलां नगरीं कृत्वा व्यथयित्वा च रावणम् ।
अर्दयित्वा बलं घोरं वैदेहीमभिवाद्य च ।

[(l 1) G1 Ck प्रवीरान् —(l 2) D8 दर्शयित्वा (for व्यथयित्वा) —(l 3) D8 दर्शयित्वा (for अर्द°) D7 9 महावीरान्, G3 बलं सर्वम् (for बलं घोरं). G2 3 अभिवाद्य च मैथिलीं (for the post half) ]

—For sequence in Ñ V B D6, cf. v l. 5 D1 4 11 read $8^{cd}$ (preceded by 1132*) after 16. —$^c$) D10 महावेगा (for °तेजाः) —$^d$) B4 तरन् (for पुनर्).

9 For sequence in Ñ V B D1 4 11, cf v l. 5 —$^b$) B4 समस्पृश्य च, D1 2 4 11 स तु संस्पृश्य (for समुपस्पृश्य). Ś1 Ñ V B D1 2 4 6 10 11 पाणिना

स किंचिदनुसंप्राप्तः समालोक्य महागिरिम् ।
महेन्द्रमेघसंकाशं ननाद हरिपुंगवः ॥ १०
निशम्य नदतो नादं वानरास्ते समन्ततः ।
बभूवुरुत्सुकाः सर्वे सुहृद्दर्शनकाङ्क्षिणः ॥ ११
जाम्बवान्स हरिश्रेष्ठः प्रीतिसंहृष्टमानसः ।
उपामन्त्र्य हरीन्सर्वानिदं वचनमब्रवीत् ॥ १२
सर्वथा कृतकार्योऽसौ हनूमान्नात्र संशयः ।
न ह्यस्याकृतकार्यस्य नाद एवंविधो भवेत् ॥ १३
तस्य बाहूरुवेगं च निनादं च महात्मनः ।
निशम्य हरयो हृष्टाः समुत्पेतुस्ततस्ततः ॥ १४

G 5 55 8
B 5 57 21
L 5 55 9

(for वीर्यवान् ) —$^{c}$) D3 व्यासुक्त (for व्यामुक्त) —$^{d}$) D3 7–9 [ S ]भ्युपागमत् (for °गत ) Ś1 Ñ1 B D1 4 10 महावेगमुपागमत् ( B3 °द्रवत् ), Ñ2 V D2 6 11 महावेग उपा( D11 द्रा )गमत् —After 9, Ś1 repeats $5^{ab}$ (followed by 1124*), while D10 repeats 5–7 (including star passages)

10 For sequence in Ñ V B D6, cf v l 5 B3 om 10 —$^{a}$) V1 अस्ति, D3 इव, D7–9 आरात्, G3 damaged (for अनु ) Ś1 Ñ2 V1 D6 10 -सप्राप्त, B2 -सप्राप्य (for -सप्राप्त ) —$^{b}$) D5 समालोच्य —B4 om $10^{cd}$ —$^{c}$) D3 सत्य, D6 7 8 G M महेद्र (for महेन्द्र-) T2 -मेरु- (for -मेघ-) D7 9 सकाशो Ś1 व्यनदद्भुसनाद, Ñ1 D2 ननाद सुमहानाद, Ñ2 V B1 2 D1 4 6 10 11 व्यनदद्धनुमान्नाद —$^{d}$) D7 ननर्द (for ननाद ) D7 9 स महाकपि , G1 3 हरियूथप (for हरिपुगव·) Ś1 Ñ1 V B1 3 D1 2 4 10 11 मेघनादसम( D1 4 °मिव )स्वन( Ñ1 D2 °न ), Ñ2 D6 मेघस्वने म( D6 °नस )मस्वन —After 10, Ś1 Ñ1 D2 10 ins

1130* स दृष्ट्वा पर्वतश्रेष्ठ सुहृद्दर्शनहर्षित ।
प्रहर्षमतुल लेभे हनूमान्मारुतात्मज ।
ते तस्य निनद श्रुत्वा सर्वे एव वनौकस ।
आसन्सहृष्टमनस सुहृद्दर्शनकाङ्क्षिण ।

[Ś1 om l 1–2 —(l 1)Ñ1 illeg for सुहृद्दर्शन- —(l 2) Ñ1 मधुर (for अतुल) —D2 om l 3–4 —(l 3) Ñ1 त श्रुत्वा निनद घोर वानरास्ते हनूमत —(l 4) Ñ1 लालस (for -काङ्क्षिण ) ]

—After 10, D1 4 11 read $17^{ab}$, 9 and 5 (including star passages), while D6 7–9 S ins, whereas D3 ins only l 10–11 after 10

1131* स पूरयामास कपिर्दिशो दश समन्तत ।
स त देशमनुप्राप्त सुहृद्दर्शनलालस ।
ननाद हरिशार्दूलो लाङ्गूल चाप्यकम्पयत् ।
तस्य नानद्यमानस्य सुपर्णाचरिते पथि ।
फलतीवास्य घोषेण गगन सार्कमण्डलम् । [5]
ये तु तत्रोत्तरे तीरे समुद्रस्य महाबला ।
पूर्वं सविष्ठिता शूरा वायुपुत्रदिदृक्षव ।
महतो वायुनुन्नस्य तोयदस्येव गर्जितम् ।
शुश्रुवुस्ते तदा घोषमूरुवेग हनूमत ।
ते दीनवदना सर्वे शुश्रुवु काननौकस । [10]
वानरेन्द्रस्य निर्घोष पर्जन्यनिनदोपमम् ।

[(l 1) G1 हरिर् (for कपिर् ) —After l 1, D6 7–9 S repeat $8^{ab}$ —(l 3) D7 9 सु( D9 स )महानाद (for हरिशार्दूलो ) —(l 4) D5 M -चरिते (for -[ आ ]चरिते ) —(l 5) T2 चलति (for फलति ) —After l 5, G1 repeats 5 —(l 6) D6 7–9 T1 3 G1 M2 कूले (for तीरे ) —(l 7) D9 पूर्व, Cm as above Ct पूर्व- (for पूर्वं ) T1 तु, T3 सु, Cm t as above (for स ) D8 Ct -पुत्र (for -पुत्र- ) —(l 8) D5 G1 M1 2 वात- (for वायु ) T3 G3 -पुन्नस्य, Cg as above (for -नुन्नस्य ) T2 महावातेन नुन्नस्य (for the prior half) D6 7–9 Cm t नि( Ct नि )स्वन (for गर्जितम् ) —(l 9) D5 तथा, M2 Cr महा (for तदा ) G2 M1 शब्दम् , Cm g k t as above (for घोषम् ) T1 3 G2 M1 -वेगाद् , Cr m g k t as above (for -वेग ) —G1 3 om l 10–11 —(l. 10) D6 7–9 T2 M3 Cg -मनस (for -वदना ) D3 तत प्रहृष्टमनस (for the prior half) D3 तुष्टुवु (for शुश्रुवु ) ]

11 Ś1 D10 read 11–16 (including star passage) after 7 —$^{ab}$) D3 G3 निनद घोर (for नदतो नाद ) Ś1 Ñ V B D1 4 6 10 11 त श्रु( B1 D6 तच्छ्रु )त्वा निनद घोर (for $^{a}$) D3 वानरेन्द्रा (for वानरास्ते ) Ś1 Ñ V B D1 3 4 6 10 11 हनूमत (for समन्तत ) D2 तत्तस्य निनद श्रुत्वा सर्वे एव वनौकस —$^{c}$) Ś1 D1 2 4 10 11 आसन्स( D11 °न्सु )हृष्टमनस , Ñ V B D6 बभूवुर्हृष्टमनस —$^{d}$) Ś1 D1 4 10 11 -लालसा (for -काङ्क्षिण )

12 For sequence in Ś1 D10, cf v l 11 —$^{a}$) D1–3 जाम्बवाश् Ś1 Ñ V B D1 2 4 6 10 11 च, D9 G2 3 तु (for स) —$^{b}$) B4 प्रीत , D2 5 प्रीत- (for प्रीति-). Ś1 D10 सप्रहृष्टतनूरुह —$^{d}$) Ś1 Ñ V B D1–4 6 10 11 सागदाम्त्रा( B3 अगद वा )क्यम् (for इद वचनम् )

13 For sequence in Ś1 D10, cf v l 11 —$^{a}$) D3 -कृत्यो (for -कार्यो ) —$^{c}$) Ñ2 V B D2 6 -कृत्यस्य (for -कार्यस्य ) —$^{d}$) Ś1 Ñ V B D1 2 4 6 10 11 वेग (for नाद )

14 For sequence in Ś1 D10, cf v l 11 —$^{a}$) Ś1 D10 -वेगेन (for -वेग च ) —$^{b}$) Ś1 Ñ V1 B1–3 D1 2 4 6 10 निनद (for निनाद ) D3 हनूमत (for महात्मन ) —$^{c}$) Ś1 Ñ V B D1–4 10 11 सश्रुत्य, D6 सश्रुत्वा (for निशम्य ) D7 श्रेष्ठा (for हृष्टा ) —$^{d}$) D6 समुत्पेतु

G 5 55 9
B 5 57.25
L 5 55 10

ते नगाग्रान्नगाग्राणि शिखराच्छिखराणि च ।
प्रहृष्टाः समपद्यन्त हनूमन्तं दिदृक्षवः ॥ १५
ते प्रीताः पादपाग्रेषु गृह्य शाखाः सुपुष्पिताः ।
वासांसीव प्रकाशानि समाविध्यन्त वानराः ॥ १६
तमभ्रघनसंकाशमापतन्तं महाकपिम् ।
दृष्ट्वा ते वानराः सर्वे तस्थुः प्राञ्जलयस्तदा ॥ १७
ततस्तु वेगवांस्तस्य गिरेर्गिरिनिभः कपिः ।
निपपात महेन्द्रस्य शिखरे पादपाकुले ॥ १८
ततस्ते प्रीतमनसः सर्वे वानरपुंगवाः ।
हनूमन्तं महात्मानं परिवार्योपतस्थिरे ॥ १९
परिवार्य च ते सर्वे परां प्रीतिमुपागताः ।
प्रहृष्टवदनाः सर्वे तमरोगमुपागतम् ॥ २०

(for समुत्पेतुस्) Ś1 Ñ V B D1-4 6 10 11 I1 3 G3 समतत, D7-9 यतस्तत (for ततस्तत)

15 For sequence in Ś1 D10, cf v l 11 B1 om 15 —a) D2 नगात्तु (for नगाग्रान्) D9 ... णि (for नगाग्राणि) —D3 reads from पद्यन्त in c up to तम in 17a in marg —c) D2 समपद्यते Ñ1 समायतु प्रहृष्टान्ते, G3 हृष्टा समभिपद्यते —d) Ś1 D10 दिदृक्षया (for °क्षव)

16 For sequence in Ś1 D10, cf v l 11 D3 reads 16 in marg (cf v l 15) —a) Ś1 D10 स्थित्वा, Ñ1 D1 3 4 8 11 I2 G3 M1 स्थिता, B4 प्राप्ता, Cg as in text (for प्रीता) Ñ1 B1 D3 पर्वत (for पादप-) Ñ2 V B D2 6 -[अ]ग्राणि (for -[अ]ग्रेषु) —b) Ś1 Ñ V B D2 3 6 10 द्रुम- (for गृह्य) D7-9 M2 Ct शाखाम् (for शाखा) Ś1 सपुष्पिता, Ñ2 V B1-3 D2 3 6 च पुष्पिता, D5 M2 3 सु(M2 प्र)निष्ठिता, D7-9 अवस्थिता (for सुपुष्पिता) D1 4 11 द्रुमशाखासु वानरा (D1 4 वेगिता) —c) Ś1 Ñ V B1-3 D6-10 M1 Cv च, D3 वि- (for [इ]व) D3 -प्रकाश ते, D5 T1 G1 M2 प्रशाखानि, D8 T2 G3 M1 महाग्रीवा, G2 M3 Cm g प्रशाखाश्च, Ct as in text (for प्रकाशानि) B4 D1 4 11 वासासि चीरवृन्दानि ❀ Ck वासासीव महाणीत्येति पाठः ❀ —d) V1 समाविध्य च, B3 °विध्यस्त (sic), B4 चिक्षेपु सर्वे- (for समाविध्यन्त) M1 दुधुवुर्वानरास्तदा ❀ Cv समाविध्यन्त समाधूयन्त। प्रशाखानीति पाठे प्रशाखानि प्रकाण्डानि। समाविध्यन्तेत्यस्य समावेष्ट्य समाश्रयन्त इत्यर्थः ❀ —After 16, Ś1 Ñ V B D1 4 6 10 11 ins, while D2 ins after 7

1132* उत्तम जवमास्थाय हर्षाद्द्विगुणविक्रम ।

[Ś1 D1 4 10 11 वेगम् (for जवम्) Ñ2 त्रिगुण (for द्विगुण-) S1 सभ्रम, Ñ1 रहस, V1 D6 विक्रमा, B1 2 (*sup lin* as above) -मानम (for -विक्रम) ]

—Thereafter Ñ V B D6 read 5-7 (D6 5c-7) and 8c-9 (transposing them) and 10, while D1 4 11 read 8cd —After 16, D5 7-9 S ins

1133* गिरिगह्वरसलीनो यथा गर्जति मारुत ।
एव जगर्ज बलवान्हनूमान्मारुतात्मज ।

[(l 2) T3 गर्जन्स (for जगर्ज) D8 हनुमान्बलवान् ]

17 For sequence in D1.4 11, cf v l 5 D3 reads up to तम in marg. (cf v l 15) —a) Ś1 Ñ1 V2 D1 2 4 10 11 अद्रि, Ñ2 V1 B1-3 D6 अग्नि- (for अभ्र-). Ñ2 V B D6 -चय-, D11 -गण (for -घन) —b) Ś1 D10 समायात (for आपतन्त) —c) Ñ1 दिदृशु (for दृष्ट्वा) —After 17, D3 reads 29, repeating it in its proper place

18 B4 om 18-19 —a) Ñ1 च, D3 न (for तु). Ñ1 D7 9 वीरो, G2 3 तस्मिन्; Cm as in text (for तस्य) —b) G2 3 गिरौ, Cm t as in text (for गिरेर्) Ñ1 बल (for कपि) —For 18ab, Ś1 Ñ2 V B1-3 D1 2 4 6 10 11 subst

1134* स तस्यात्र गिरे शृङ्गे निपत्य सुमहाजव ।

[Ś1 B2 3 D10 तस्यैव च (for स तस्यात्र) Ś1 D1 4 10 11 निपपात, B1 D2 निपत्य स(D2 च), B3 निरल स (for निपत्य सु-) ]

—c) Ś1 Ñ V B1-3 D1 4 6 10 11 निपपात, D3 च निपात (sic) (for निपपात) D7-9 Ct गिरेस्तस्य (for महेन्द्रस्य) —d) Ś1 Ñ V B1-3 D1 2 4 6 10 11 सानौ (for शिखरे) D3 -[आ]कुले (for [आ]कुले). —After 18, D3 ins

1135* तेन तस्मिन्निपतता कम्पित स महीधर ।
प्रचकम्पे च पृथिवी क्षोभिताश्च जलाशया ।

while D5 7-9 S ins

1136* हर्षेणापूर्यमाणोऽसौ रम्ये पर्वतनिर्झरे ।
छिन्नपक्ष इवाकाशात्पपात धरणीधर ।

[(l 1) D5 G3 पूर्यमाणो, Cm t as above (for [आ]पूर्यमाणो) D5 रम्य- (for रम्ये) ❀ Cm t पर्वतनिर्झरे निर्झरप्रवर्तके शिखर इत्यर्थ (Cm °र इत्ये) ❀। श्रमनिवृत्तये जल एव पतित इत्यन्ये ❀ —(l 2) M2 छिन- (for छिन्न-). D5 [आ]काशे (for [आ]काशात्). T1 3 धरणीधरे, Cm t धरणीधर (as above) ]

19 B4 om 19 (cf v l 18) —a) B2 D1 3 G3 प्रीति- (for प्रीत) —d) D1 पर्यवार्य (sic) (for परि°)

20 Ś1 Ñ1 D1 2 4 10 11 read 20cd, 25 and 20ab after 31 (followed by 1141*) Ñ2 V B2 D6 read

उपायनानि चादाय मूलानि च फलानि च ।
प्रत्यर्चयन्हरिश्रेष्ठं हरयो मारुतात्मजम् ॥ २१
विनेदुर्मुदिताः केचिच्चक्रुः किलकिलां तथा ।
हृष्टाः पादपशाखाश्च आनिन्युर्वानरर्षभाः ॥ २२
हनूमांस्तु गुरून्वृद्धाञ्जाम्बवत्प्रमुखांस्तदा ।
कुमारमङ्गदं चैव सोऽवन्दत महाकपिः ॥ २३
स ताभ्यां पूजितः पूज्यः कपिभिश्च प्रसादितः ।
दृष्टा देवीति विक्रान्तः संक्षेपेण न्यवेदयत् ॥ २४

निषसाद च हस्तेन गृहीत्वा वालिनः सुतम् ।
रमणीये वनोद्देशे महेन्द्रस्य गिरेस्तदा ॥ २५

हनूमानब्रवीद्धृष्टस्तदा तान्वानरर्षभान् ।
अशोकवनिकासंस्था दृष्टा सा जनकात्मजा ॥ २६

रक्ष्यमाणा सुघोराभी राक्षसीभिरनिन्दिता ।
एकवेणीधरा बाला रामदर्शनलालसा ।
उपवासपरिश्रान्ता मलिना जटिला कृशा ॥ २७  G 5 55 0 B. 5. 57 40 L 5 56 7

---

$20^{cd}$ after l 1 and 25 and $20^{ab}$ after l 2 of 1141* B1 3 4 read $20^{cd}$ after l 1, repeating it after l 2 of 1141* and read 25 and $20^{ab}$ after $20^{cd}$ (r ) D3 om $20^{ab}$ —$^{a}$) V2 तत, D6 वने (for च ते) —$^{b}$) D11 परा (for परा) Ś1 D10 प्रप्रेदिरे, Ñ2 V B D6 उपागमन् (for उपागता ) —D3 reads $20^{cd}$ after 31 (followed by 1141*) —$^{c}$) Ś1 Ñ V B( B1 3 4 both times ) D1–4 6 10 11 -मनस दृष्ट्वा, G2 3 -मनस सर्वे (for -वदना सर्वे) —$^{d}$) B3(second time) तमयोगम्, B4 (second time) तमवोचद्, D1 4 7 9 तमागतम्, D2 त मारुतिम्, D3 तमारात्सम्- (for तमरोगम्) Ś1 Ñ1 V B1 3 4( B1 3 4 second time) D1 2 4 10 11 G1 उपस्थित (B4 °त ), Ñ2 D6 अवस्थित, D3 7 9 उपागमन् (for उपागतम्) B( B1 3 4 first time) हनूमतमुपस्थित

21 B4 om 21–$22^{b}$ —$^{b}$) Ś1 Ñ V B1 3 D1–4 6 10 11 मधूनि च, B2 सुमधूनि (for मूलानि च) —$^{c}$) D3 अपूजयन् (for प्रत्यर्चयन्) G2 हनूमत (for हरिश्रेष्ठ) —For $21^{cd}$, Ś1 Ñ V B1–3 D1 2 4 6 10 11 subst

1137* अर्चयन्तो हरिवर मारुतस्यौरस सुतम् ।

[Ś1 Ñ1 D1 2 4 10 11 परिवार्यार्चयति स्म (for the prior half) ]

22 B4 om $22^{ab}$ (cf v l 21) D5 8 T1 3 G M om 22 —$^{a}$) B2 विरेजुर् (for विनेदुर्). V2 सर्वे (for केचिच्) —$^{b}$) D7 9 T2 केचित् (for चक्रु) Ś1 किलकिलाश्च ते, V1 B2 3 D1–4 10 11 T2 किलकिलास् (B2 D10 T2 °ला )तथा( B2 3 D1 4 T2 °दा, D10 परे), V2 B1 किलकिलाध्वनि( V2 °ला यथा ) —Note hiatus between $^{c}$ and $^{d}$ —$^{c}$) B2 (marg also) दृष्ट्वा, D3 दृष्टा (for हृष्टा ) Ñ2 B2–4 D6 -शाखाम् (for शाखाश्च ) —$^{d}$) D1 T2 व्यानिन्युर्, D2 [अ]थानिन्युर्, D4 वानिन्युर्, D11 विनिन्युर् (for आनिन्युर्) Ñ1 [आ]निन्युर्वानरपुंगवा , Ñ2 V1 B1 3 4 D6 व्या( B1 3 4 व्य )-लम्बत च केचन, V2 व्यलम्बताशुरेन च, B2 व्यवालम्बत केचन

23 $^{a}$) Ś1 त, D2 3 च (for तु) Ś1 Ñ V B1 3 4 D1–4 6 10 11 गुरु वृद्ध( D2 ऋक्ष), B2 महावृद्ध (for गुरून्वृद्धाञ्) —$^{b}$) T G1 3 तथा- (for तदा) Ś1 Ñ V B D1–4 6 10 11 जाम्ब( Ś1 Ñ1 D1 3 4 °बु )वत महाकपिं ( D3 °बलं ) —$^{c}$) D10 अगश (for अङ्गद). Ś1 Ñ1 D10 [ए]वम्, D3 [अ]पि (for [ए]व) —$^{d}$) Ś1 Ñ1 D10 अभ्यवदन्महाबल, Ñ2 V B D3 6 ववदे स( V1 B1 च, V2 B2 3 °थ) महाबल ( B1 D3 °कपि ), D1 4 11 व्यवदत महाबल ( D4 °ल ), D2 [अ]थावदत महाबल

24 $^{a}$) V1 B3 4 D3 पृष्ट (for पूज्य ) —$^{b}$) B4 स (for च ) Ś1 D10 [अ]भिपूजित , Ñ V B1 3 D1–4 6 11 सभाजित , B2 4 समाहित (for प्रसादित ) —$^{c}$) D11 दृष्ट्वा (for दृष्टा ) T3 G2 M2 3 सीता (for देवी) D2 T2 G3 विश्रात (for विक्रान्त ) —$^{d}$) D11 सादरेण (for संक्षेपेण ) D11 निवेदयत्

25 For sequence in Ś1 Ñ V B D1 2 4 6 10 11, cf v l 20 D3 om 25 —$^{a}$) Ś1 Ñ V B D1 2 4 6 10 11 ततो हस्ते (for च हस्तेन ) —$^{b}$) Ś1 Ñ2 V B D10 वालिन सुत , D1 2 4 11 पवनात्मज (for वालिन सुतम्) —$^{c}$) B2–4 रमणीय- (for °ये ) —$^{d}$) Ś1 Ñ1 V1 B1 D1 2 4 10 11 दर्दुरस्य, V2 दुर्धरस्य (for महेन्द्रस्य) Ś1 Ñ V B D1 2 4 6 10 11 महागिरे ( D10 °रि [sic]), T3 गिरेस्तथा (for गिरेस्तदा )

26 Ñ2 V B D1 4 6 11 om 26–27 Ś1 Ñ1 D2 3 10 read 26–27, 32–34 (including star passages ) after 5 56 1 (followed by 1149* and 1150*) —$^{a}$) D3 अब्रवीद्वाक्यम् , D7 9 M1 2 अब्रवीत्पृष्टस् —$^{b}$) T2 G2 3 M1 समेतान् (for तदा तान् ) Ś1 Ñ1 D2 10 सर्वांस्तान्हरि( D10 °न्कपि )यूथपान् , D3 इद वानरसंसदि —$^{c}$) Ś1 Ñ1 D2 3 10 वनिकामध्ये, D8 -वनिकाया तु —$^{d}$) Ś1 [अ]सौ, Ñ1 D2 3 10 मे (for सा )

27 Ñ2 V B D1 4 6 11 om 27 (cf v l 26) For sequence in Ś1 Ñ1 D2 3 10, cf v l 26 —$^{a}$) D2 T3 रक्षमाणा (for रक्ष्य°) D3 विशालाक्षी (for सुघोराभी )

G 5 55 25
B 5 57 43
L 5 55 28

ततो दृष्टेति वचनं महार्थममृतोपमम् ।
निशम्य मारुतेः सर्वे मुदिता वानरा भवन् ॥ २८
क्ष्वेडन्त्यन्ये नदन्त्यन्ये गर्जन्त्यन्ये महाबलाः ।
चक्रुः किलकिलामन्ये प्रतिगर्जन्ति चापरे ॥ २९
केचिदुच्छ्रितलाङ्गूलाः प्रहृष्टाः कपिकुञ्जराः ।
अञ्चितायतदीर्घाणि लाङ्गूलानि प्रविव्यधुः ॥ ३०
अपरे तु हनूमन्तं वानरा वारणोपमम् ।
आप्लुत्य गिरिशृङ्गेभ्यः संस्पृशन्ति स्म हर्षिताः ॥ ३१
उक्तवाक्यं हनूमन्तमङ्गदस्तु तदाब्रवीत् ।
सर्वेषां हरिवीराणां मध्ये वाचमनुत्तमाम् ॥ ३२

—[b]) Ś1 Ñ1 D2 10 मनस्विनी (for अनिन्दिता) —[c]) T1 3 M1 दीना (for बाला) —[e]) D3 -परिग्लाना (for °श्रान्ता) —[f]) D3 M3 transp मलिना and जटिला —After 27, D3 ins

1138* मार्गता नगरीं लङ्का गुप्ता रावणपालिताम् ।

—Thereafter, D3 cont, while Ś1 Ñ1 D2 10 ins. after 27

1139* यत्नेन महता दृष्टा सा मया जनकात्मजा ।
तया च सह जल्पित्वा पृष्ट्वा चैनामनामयम् ।
अभिज्ञान गृहीत्वा च सिद्धार्थोऽहमिहागत ।

[(l 1) D3 मया सा (by transp) —(l 2) Ñ1 स चारित्राभितप्ता ता (for the prior half) Ñ1 दृष्ट्वा (for पृष्ट्वा) D2 10 [ए]ताम् (for [ए]नाम्) —(l 3) D3 तु (for च) ]

28 [a]) Ś1 Ñ V B1 2 4 D1–4 6 10 11 दृष्टा(D11 °ष्ट्वा) देवी, B3 दृष्टा सीता (for ततो दृष्टा) —[b]) Ś1 B4 D10 महत्तद् (for महार्थम्) —[c]) Ś1 Ñ V B1 2 4 D1–4 6 10 11 श्रुत्वा ते( B1 2 तु) मारुतेस्तस्य, B3 श्रुत्वा च वचन तस्य —[d]) Ś1 D3.10 हरयोभवन, Ñ1 D2 11 हरयस्तदा, Ñ2 V B D6 कपयोभवन्, D1 4 हरिपुंगवा, G1 M1 वानरर्षभा, Cg k as in text (for वानरा भवन्) ❀ Cg भवन् अभवन । अनित्यत्वादडभाव ।, so also Ck ❀

29 D3 reads 29 for the first time after 17, repeating it here —[a]) Ñ2 B1 D5 6 8 T2 3 G M Cg क्ष्वेलन्त्यन्ये, V1 क्ष्वेलयतो, B2–4 खेलन्त्यन्ये (for क्ष्वेडन्त्यन्ये) Ś1 D1–4( D3 both times) 10 11 हसन्त्यन्ये, D9 om (hapl), M2 वदन्त्यन्ये, Cg as in text (for नदन्त्यन्ये) —[b]) Ś1 D10 गायंति (for गर्जन्ति) Ś1 Ñ1 D1 3( first time) 4 10 11 प्लवगमा, Ñ2 V B D2 6 क्षिपति च, D3( second time) वनौकस, D8 महास्वना (for महाबला) —[c]) B4 क्रुद्धा (for चक्रु) B2 किलकिलान्, D1 5 T3 G2 M Cg किलिकिलाम् —[d]) D2 3( both times) -नदति (for -गर्जन्ति) D8 वानरा (for चापरे) Ñ2 V B D6 ननदुर( B4 °नृतुश्चा )परे तथा( B3 °दा), G3 मारुति प्रति चापरे.

30 [a]) Ś1 D10 चोच्छ्रित-, B3 उत्थित-, D2 उच्छ्रुत-, G1 उद्धृत- (for उच्छ्रित-) —B3 om 30[cd] —[c]) Ś1 D10 अधिकायत-, Ñ1 अर्चितायत, Ñ2 V2 B1 2 4 D6 कुचितायत-, V1 किचित्ता ॥ (illeg), D7–9 Ct आयनाचित- (by transp), Cm g as in text (for अञ्चितायत-) ❀ Cm अञ्चितायतदीर्घाणि दीर्घशब्दसंनिधानादायतशब्देन स्थौल्यमुच्यते ।, so also Cg, Ct आयामो विस्तार स्थाल्यमित्यन्ये ❀ —[d]) Ś1 Ñ1 D1–4 10 11 विचिक्षिपु, Ñ2 V B1 2 4 D6 विबभ्रमु, M1 प्रविव्यधु, Cg as in text (for प्रविव्यधु)

31 [a]) Ś1 B4 D10 11 M3 च हनूमत, Ñ2 V1 B1 2 D1 2 4 6 हनुमत तु, B3 D3 हनुमत च (for तु हनूमन्त) —After 31[a], T2 ins

1140* जाम्बवन्त च वानरा ।
ततोऽङ्गद हनूमन्त

—[b]) B2 3 M1 वानर, D7 9 श्रीमत (for वानरा) Ś1 काननौकस, Ñ1 रावणोपमा, Ñ2 V1 B2 3 D10 11 वानरोप( B2 3 °त्त)मा, V2 B1 4 D1–4 6 वार( D1 °र)णोपमा, D5 7 9 वानरोत्तम, D8 प्रशशसिरे (for वारणोपमम्) —[c]) D11 आरुह्य (for आप्लुत्य) D5 7–9 T2 G1 3 M2 Ck t -शृगेषु (for -शृङ्गेभ्य) —[d]) Ś1 Ñ1 D1–4 10 11 T2 G3 प्रहर्षिता, Ñ2 B4 D6 स्म पाणिना, V B1–3 D8 स्म वानरा (for स्म हर्षिता) —After 31, Ś1 Ñ V B D1–4 6 10 11 ins

1141* स्तुवन्ति च नमस्यन्ति परिषस्वजिरेऽपरे ।
वालिपुत्रोऽङ्गदश्चैव सपरिष्वज्य पीडितम् ।

[(l 1) Ñ2 V B1 4 D6 स्तुवत्यथ, B2 3 स्तुवतश्च (for स्तुवन्ति च) D2 परिष्वजति चापरे, D4 परिष्वजति रेवरे (sic) (for the post half) D3 स्तुवति स्म नमति स्म भजति स्म तथापर —After l 1, Ñ2 V B2 D6 read 20[cd], while B1 3 4 read 20[cd] repeating it after l 2 of this star and read 25 and 20[ab] after 20[cd] (r). —V2 om l 2 —(l 2) Ñ2 B4 [ए]न (for [ए]व). Ś1 Ñ1 D10 परिष्वज्य च, B3 D11 परिष्वज्य प्र- (for सपरिष्वज्य) ]

—Thereafter, Ś1 Ñ1 D1 2 4 10 11 read 20[cd], 25 and 20[ab], while Ñ2 V B2 D6 read 25 and 20[ab], whereas D3 reads 20[cd]

32 Ñ2 V B D6 om 32–34 For sequence in Ś1 Ñ1 D2 3 10, cf v.l 26 D1 4 11 read 32–34 (including star passages) after 1148* —[b]) T2 तु तथा, G3 M3 तमथ, M1 त तदा (for तु तदा). D9 reads in

सत्त्वे वीर्ये न ते कश्चित्समो वानर विद्यते ।
यदवप्लुत्य विस्तीर्णं सागरं पुनरागतः ॥ ३३
दिष्ट्या दृष्टा त्वया देवी रामपत्नी यशस्विनी ।
दिष्ट्या त्यक्ष्यति काकुत्स्थः शोकं सीतावियोगजम् ॥ ३४
ततोऽङ्गदं हनूमन्तं जाम्बवन्तं च वानराः ।
परिवार्य प्रमुदिता भेजिरे विपुलाः शिलाः ॥ ३५

श्रोतुकामाः समुद्रस्य लङ्घनं वानरोत्तमाः ।
दर्शनं चापि लङ्कायाः सीताया रावणस्य च ।
तस्थुः प्राञ्जलयः सर्वे हनूमद्वदनोन्मुखाः ॥ ३६

तस्थौ तत्राङ्गदः श्रीमान्वानरैर्बहुभिर्वृतः ।
उपास्यमानो विबुधैर्दिवि देवपतिर्यथा ॥ ३७

G 5 55 36
B 5 57 52
L 5 55 40

marg [अ]ब्रवीत् —$^{c}$) T2 कपि- (for हरि-) D5 -वराणां (for वीराणां) —$^{d}$) T1 3 M3 मध्ये वचनमुत्तमं —For 32, Ś1 Ñ1 D1-4 10 11 subst

1142* अङ्गदोऽथ शुभं वाक्यं वायुपुत्रस्य धीमतः ।
श्रुत्वैव परमप्रीतो हरिमध्यगतोऽब्रवीत् ।

[(l 1) D2 अनोगद (for अङ्गदोऽथ) D3 वायुपुत्रममीरित (for the post half) —(l 2) D1 3 4 11 [ए]तत् (for [ए]व) D11 परम (for परम-) D1 -मध्ये (for -मध्य) ]

33 Ñ2 V B D6 om 33 (cf v l 32) For sequence in Ś1 Ñ1 D2 3 10, cf v l 26 and for that in D1 4 11, cf v l 32 —$^{a}$) Ś1 Ñ1 D1-4 10 11 तुल्यवीर्यो, G1 सत्त्ववीर्ये, G3 वायुपुत्र (for सत्त्वे वीर्ये) —$^{b}$) Ś1 Ñ1 D1-4 10 11 सुराणामपि दृश्यते —G3 damaged from पुनर् in 33$^{d}$ up to स्वामिनि ते in 1144* —$^{cd}$) T2 अभिप्लुत्य (for अव°) Ś1 Ñ1 D1-4 10 11 पुनराप्लुत्य (Ś1 Ñ1 D10 °रलङ्घ्य, D2 3 °राप्लुत्य) यो भीमं समुद्रं त्वमिहा(D2 11 °गुपा)गतः —After 33, Ś1 Ñ1 D1-4 7-11 T2 ins

1143* जीवितस्य प्रदाता नस्त्वमेको वानरोत्तम ।
त्वत्प्रसादात्समेष्याम सिद्धार्था राघवेण ह ।

[(l 1) Ñ1 प्रदानारैस् (sic), D1 4 11 प्रदाता त्वम्, D3 प्रदाने नस् (for प्रदाता नस्) D3 9 वानरोत्तम Ñ1 त्वमेवैक प्लवगम, D1 4 11 एको वानरपुंगव (D11 °व) (for the post half) —(l 2) Ñ1 D3 10 हि (for ह) ]

—Thereafter D7-9 T2 Ct cont, while D5 T1 3 G M ins after 33

1144* अहो स्वामिनि ते भक्तिरहो वीर्यमहो धृतिः ।
[G1 धैर्यम् (for वीर्यम्) ]

34 Ñ2 V B D6 om 34 (cf v l 32) For sequence in Ś1 Ñ1 D2 3 10, cf v l 26 and for that in D1 4 11, cf v l 32 —$^{a}$) Ś1 Ñ1 D1 2 4 10 सीता (for देवी) D11 दिष्ट्या सीता त्वया दृष्टा —$^{c}$) D11 दृष्टास् (sic) (for दिष्ट्या) Ś1 Ñ1 द्रक्ष्यति (for त्यक्ष्यति) —$^{d}$) Ñ1 सीता शोक- (sic) (for शोकं सीता-) —After 34, D11 reads 5 56 2$^{ab}$ (followed by 1152*)

35 $^{a}$) Ś1 Ñ V B D1-4 6 10 11 जाम्ब(D1 3 4 °म्बु)वन्तं (for ततोऽङ्गदं) —$^{b}$) T1 3 वानर Ś1 Ñ V B D1-4 6 10 11 अङ्गदं च हरी(Ñ2 V1 B D6 कपी)श्वर, G3 जाम्बव नरा —$^{c}$) Ś1 D10 [उ]पविष्टास्ते, Ñ1 V2 B1 2 D11 हरिश्रेष्ठो, Ñ2 V1 D2 हरिश्रेष्ठ, B3 4 D1 3 4 6 हरिश्रेष्ठा (for प्रमुदिता) —$^{d}$) D1 4 विपुला शिला —After 35, Ś1 Ñ V B D1-4 6-11 ins

1145* उपविष्टा गिरेस्तस्य शिलासु विपुलासु ते ।

[Ñ2 V B1 4 D6 transp शिलासु and विपुलासु Ś1 Ñ2 B1 3 D6 10 च, B4 तत् (for ते) ]

36 $^{b}$) D8 प्लवनं (for लङ्घनं) D2 3 वानरोत्तमात् —$^{cd}$) V1 D1 4 11 G3 सीताया लङ्काया (by transp) D8 रावणस्य च दर्शनं (for $^{d}$) —$^{f}$) Ś1 D10 -वच(D10 -दर्श)-नोत्सुका, M -वचनोन्मुखा (for -वदनोन्मुखाः) Ñ V B D1-4 6 11 परिवार्य समततः —After 36, Ś1 Ñ V B D1-4 6 10 11 ins

1146* प्रीतिविस्फारिताक्षास्ते निःशब्दा हरयोऽभवन् ।
निश्चितास्तत्परा सर्वे हनूमद्वचनोत्सुकाः ।

[(l 1) Ś1 D10 विस्तारित- (for -विस्फारित-) D11 निशब्दा —B3 om l 2 —(l 2) Ś1 तच्चितास्, B2 लिखितास्, D3 निष्ठितास्, D10 तच्चित्तास् (for निश्चितास्) Ś1 D2 3 चव (for सर्वे) B2 D1 3 4 11 -[उ]न्मुखा (for -[उ]त्सुका) ]
—Thereafter, Ś1 Ñ1 D1 4 10 11 cont, while D2 cont after 1148* (preceded by 1146*)

1147* जाम्बवानृक्षराजस्तु गजो गवय एव च ।
पनसश्च गवाक्षश्च मध्ये तस्थुर्वनौकसाम् ।

[(l 1) Ś1 Ñ1 D1 जाबुवान् Ñ1 D1 4 च (for तु) —(l 2) D2 तस्थुर्मध्ये (by transp), D11 मध्ये तस्थौ (for मध्ये तस्थुर्) Ś1 D10 वनौकस ]

—Thereafter, Ś1 D10 cont 1148*

37 D3 om 37 —$^{a}$) Ñ2 V1 B बभौ (for तस्थौ). D5 ततो (for तत्र) —$^{b}$) D5 हनुमान्वानरैर्वृत —For 37$^{ab}$, Ñ1 D1 4 11 subst, while Ś1 D10 cont after 1147*, whereas D2 cont after 1146*

1148* अङ्गदं मध्यतः कृत्वा हनूमन्तं च वानराः ।

—Thereafter, D1 4 11 read 32 – 34 (including star passages) —D1 4 om from 37$^{c}$ up to 5 56 1 Ñ1 om 37$^{cd}$ —$^{c}$) Ś1 D2 10 विविधैर्, Ñ2 V B1-3 D6-9

G. 5 49 0
B 5 57. 53
L 5 55 41

हनूमता कीर्तिमता यशस्विना
तथाङ्गदेनाङ्गदबद्धबाहुना ।
मुदा तदाध्यासितमुन्नतं मह-
न्महीधराग्रं ज्वलितं श्रियाभवत् ॥ ३८

इति श्रीरामायणे सुन्दरकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

T1 G1 3 विविधैर्, B4 कपिभिर्, D11 बहुभिर् (for विबुधैर्) —d) Ś1 D5 10 देवैर् (for दिवि) Ñ2 V B D6 11 देवै(B4 बुधै, D11 दिवौ [sic])रिव(V2 °रपि) पुरदर

38 D1 4 om 38 (cf v l 37) —ab) D2 तद् (for तथा) D7 9 -नद्ध- (for -बद्ध-) Ś1 D10 [आ]त्मविदा विपश्चिता, Ñ2 V B1–3 [अ]गदिना मनस्विना, B4 [अं]गदधारिणा मुदा, D2 3 [अ]गविदा(D3 °दिना) विपश्चिता, D6 11 [अ]ग(D6 [अ]र्थ)विदा मनस्विना (for [अ]ङ्गदबद्धबाहुना) Ñ1 हनुमता . . . महात्मना . . . गदिना मनस्विना (illeg) ॐ Cv यशस्विना, यशस्तस्योपादानमपदान कर्म ।, Cr m यशस्विनेत्यङ्गदविशेषणम् । (Cm अतो न पुनरुक्ति ) ।, Cg कीर्तिमतेति हनुमद्विशेषणम् । यशस्विनेत्यङ्गदविशेषणम् । भृत्यकीर्त्या स्वामिन कीर्ति । अन्यथा पौनरुक्त्यात् । यद्वा, बुद्धिमत्त्वजन्या कीर्ति । शौर्यजन्य यश ।, so also Ct ॐ —D11 om from मुन्न in c up to न्म in d

—c) Ñ V B D2 3 6 10 11 तदा तद् ; D5 8 T2 G3 M2 मुदा तद् (for मुदा तदा) T3 [अ]भ्यासितम् (for [अ]ध्या°) Ś1 Ñ D2 3 6 10 उत्तम, B2 (marg also) उद्यत (for उन्नतं). V2 T3 महान्, B4 महा, D2 हि तन् (for महन्) Ś1 D10 तदा (for श्रिया) D8 महत्, D9 भवेत् (for [अ]भवत्)

Colophon D1 4 om (cf v l 37) —*Sarga name* Ś1 Ñ1 V B1 2 D2 3 10 हनूमत्प्रत्यागम(B1 2 °प्लव)-नं(D3 न), Ñ2 D6 हनुमदागमन, B3 प्रत्याप्लवन, B4 हनूमत प्रत्यागमन, D11 प्रतिप्रयाण —*Sarga no* (figures, words or both) Ñ1 D2 10 11 om, Ś1 Ñ2 V1 D5–9 T G M1 3 57, V2 46, B1 2 55, B3 53, B4 60, D3 61; M2 56 —After colophon, G M1 2 conclude with श्रीरामाय नम

स्त्रीणां मध्यात्समुत्पत्य तस्य भार्या दुरात्मनः ।
वरा मन्दोदरी नाम तया स प्रतिषेधितः ॥ ६६

उक्तश्च मधुरां वाणीं तया स मदनार्दितः ।
सीतया तव किं कार्यं महेन्द्रसमविक्रम ।
मया सह रमस्वाद्य मद्विशिष्टा न जानकी ॥ ६७

देवगन्धर्वकन्याभिर्यक्षकन्याभिरेव च ।
सार्धं प्रभो रमस्वेह सीतया किं करिष्यसि ॥ ६८

ततस्ताभिः समेताभिर्नारीभिः स महाबलः ।
उत्थाप्य सहसा नीतो भवनं स्वं निशाचरः ॥ ६९

याते तस्मिन्दशग्रीवे राक्षस्यो विकृताननाः ।
सीतां निर्भर्त्सयामासुर्वाक्यैः क्रूरैः सुदारुणैः ॥ ७०
तृणवद्भाषितं तासां गणयामास जानकी ।
तर्जितं च तदा तासां सीतां प्राप्य निरर्थकम् ॥ ७१

वृथागर्जितनिश्चेष्टा राक्षस्यः पिशिताशनाः ।
रावणाय शशंसुस्ताः सीताध्यवसितं महत् ॥ ७२

G 5 56 93
B 5 58 83
L 5 56 71

---

66 Ñ1 illeg for 66 (cf v l 60) D2 om 66 G3 damaged for 66 in which the portion from दुरात्मन in $^{b}$ up to मन्दोदरी in $^{c}$ is written in marg *sec m* —$^{a}$) M1 समुत्तस्थौ, Cv समुत्थाय, Cr समुत्पत्य (as in text) —$^{b}$) D3 transp तस्य and भार्या B3 4 महात्मन (for दुरा°) —$^{c}$) T3 -नामा, Ct as in text (for नाम) Ś1 Ñ2 V B D1 4 6 10 11 मदोदरी नाम शुभा (D11 °भ), D3 धान्यमालिन्यभिख्याता ❀ Cv मण्डोदरीत्यादीनि नामानि तत्र तत्रत्याना परस्परव्यवहारेषु हनुमता श्रुतानीति परिकल्पनीयम् । अन्यथा, अपूर्वविषये नामनिर्देश शक्यते न कर्तुम् ।, Cr पूर्वं धान्यमालिन्या प्रतिषिद्ध इत्युक्तम्, इदानीं मण्डोदर्येत्युच्यते । अत उभाभ्यामपि प्रतिषिद्ध इत्यवगन्तव्यम् । यद्वा मण्डोदरी, धान्यमालिनी, इति नामद्वय मण्डोदर्या एव ।, so also Cm t, Cg मण्डोदरी मण्डनभूतोदरी । "मडि भूषायाम्" इत्यस्माद्धातो पचाद्यच् । मन्दोदरी वा । दडयोरभेद । दम्भो दाडिममित्यादिवत् । यद्वा मन्दत्व चाल्पत्वम् । । सूक्ष्मोदरीत्यर्थ । मन्दा स्थलपिपीलिकेत्याचक्षते । तस्या इव कृशमस्या उदरमित्यर्थ । ननु पूर्वं धान्यमालिन्या प्रतिषिद्ध इत्युक्तम्, सप्रति मण्डोदर्येत्युच्यते । विप्रतिषिद्धमिदम् । मैवम् । उभाभ्यामपि प्रतिषिद्धत्वेनान्यतरोक्तावविरोधात् । मण्डोदर्यादिनामपरिज्ञान च हनुमतस्तदीयव्यवहारात् ।, so also Ck ❀ —$^{d}$) Ś1 D8 10 11 G2 स, D3 च, Cv r k as in text (for स) V B प्रतिवारित, D1 3 4 6 8 प्रतिबोधित, Cv r k as in text (for °षेधित)

67 Ñ1 illeg for 67 (cf. v l 60) D6 reads $67^{abcd}$ in marg —$^{a}$) Ś1 D10 ततश्, Ñ2 V1 B2–4 D6 M1 उक्त (for उक्तश्) Ś1 D1 2 4 10 11 शुभया वाचा (D2 °क्य), Ñ2 V B D3 6 मधुर वाक्यं (for मधुरा वाणीं) —D5 reads $67^{b}$ in marg —$^{b}$) B4 तदा (for तया) Ś1 Ñ2 V B D1 2 4 6 10 11 सानुनय (D11 °या) तदा (B4 घ यत्), D3 सप्रणयादिद (for स मदनार्दित) —$^{c}$) D11 सीताया D2 वद, D3 बत, D11 न च, G1 सह (for तव) —$^{d}$) D2 इहेद्र (for महेन्द्र) B4 D1 11 -समविक्रम —Ñ2 V1 B D5 6 T1 3 G M om. $67^{ef}$

68 Ñ1 illeg for 68 (cf v l 60) D6 reads $68^{ab}$ in marg —$^{a}$) B2 तव (for देव) Ś1 D10 -पन्नगश्च, Ñ2 V B D1 2 4 6 11 -कन्याश्च, D3 -कन्यास्ते (for -कन्याभिर्) —$^{b}$) Ś1 Ñ2 V B D1 2 4 6 10 11 यक्षराक्षसयोषित, D3 सति नैर्ऋतयोषित —G3 damaged from $68^{c}$ up to स in $69^{b}$ in which $68^{d}$ is written in marg *sec m* —$^{c}$) D7–9 T3 [इ]ति (for [इ]ह) Ś1 D10 ताभी रमस्व सुभग, Ñ2 V B D6 ताभि सह रमस्व त्व, D1 2 4 11 ताभि सह रमस्वाद्य (D2 °र्थं), D9 ताभि सार्धं रमस्वेति —$^{d}$) Ś1 D10 प्रयोजन, Ñ2 V B1 2 4 D1 2 4 6 तवानया (D1 4 °घ), B3 अकर्मया, T3 करिष्यति (for करिष्यसि) D11 कि त्वया सीतया तया

69 Ñ1 illeg for 69 (cf v l 60) G3 damaged up to स in $^{b}$ (cf v l 68) —$^{a}$) D5 8 T2 M2 समस्ताभिर् (for समेता°) —$^{b}$) Ś1 D1 2 4 10 11 योषिद्भि (for नारीभि) D3 च (for स) —$^{c}$) D1 4 11 उत्थाय, D3 G3 M1 उत्पाद्य, D5 M2 उत्पाट्य, D8 T2 G1 2 M3 प्रसाद्य (for उत्थाप्य) —$^{d}$) Ś1 Ñ2 V B1 2 4 D1 2 4 6 10 11 येनैवा' D6 ° + चा 'भ्यागत पथा (B2 तथा), B3 येन चाभ्यागत पथि, D3 दिव्य भुवनमात्मन

70 Ñ1 illeg for 70 (cf v l 60) —$^{a}$) Ś1 Ñ2 V B D1–6 10 11 गते (for याते) —B4 D11 om (hapl) $70^{c}$–$72^{b}$ D9 reads $70^{cd}$ (except सीता) in marg —$^{c}$) G1 निर्भर्त्सयामास —$^{d}$) T3 उग्रै, G3 अन्यै (for क्रूरै) Ś1 Ñ2 V B1–3 D1 2 4 6 10 समामाद्य (V2 B1–3 D2 6 °गम्य) सहस्रश, D3 क्रूरैर्वाक्यै सहस्रश

71 Ñ1 illeg for 71 (cf v l 60) B4 D11 om 71 (cf v l 70) —$^{a}$) D2 तृणवद्भाषिता सीता —$^{b}$) Ś1 Ñ2 V B1 2 D1–4 6 10 तु (D1 3 4 तो)लयामास, B3 तृणयामास (sic) —$^{c}$) Ś1 Ñ2 V B1–3 D1–7 9 10 T M2 3 गर्जित, M1 तर्जन (for तर्जित) Ś1 Ñ2 V B1-3 D1-4 6 10 वृथा, D5 7 9 G1 तथा (for तदा) D1 4 घोर (for तासा) —$^{d}$) Ś1 D1–3 10 सीता श्रुत्वा न शोचति, Ñ2 V B1–3 D6 श्रुत्वा सीता न शोचति (V2 B2 °ते)

72 Ñ1 illeg for 72 (cf v l 60) B4 D11 om $72^{ab}$ (cf v l 70) B3 om 72 —$^{a}$) Ś1 Ñ2 V B2

G 5 56 93
B 5 58.84
L 5 56 72

ततस्ताः सहिताः सर्वा विहताशा निरुद्यमाः ।
परिक्षिप्य समन्तात्तां निद्रावशमुपागताः ॥ ७३
तासु चैव प्रसुप्तासु सीता भर्तृहिते रता ।
विलप्य करुणं दीना प्रशुशोच सुदुःखिता ॥ ७४
तां चाहं तादृशीं दृष्ट्वा सीताया दारुणां दशाम् ।
चिन्तयामास विश्रान्तो न च मे निर्वृतं मनः ॥ ७५
संभाषणार्थे च मया जानक्याश्चिन्तितो विधिः ।
इक्ष्वाकुकुलवंशस्तु ततो मम पुरस्कृतः ॥ ७६
श्रुत्वा तु गदितां वाचं राजर्षिगणपूजिताम् ।
प्रत्यभाषत मां देवी बाष्पैः पिहितलोचना ॥ ७७

D1 2 4 6 10 गर्जति, B1 गच्छति (for -गर्जित). G2 -निर्घोषा (for -निश्चेष्टा) —$^{b}$) Ś1 Ñ2 V B1 2 D1–4 6 10 विकृताननाः (for पिशिताशना) —$^{d}$) M3 -[अ]भ्यवसित —For 72$^{cd}$, Ś1 Ñ2 V B1 2 4 D1–4 6 10 11 subst

1198* सीताया व्यवसायं त रावणाय न्यवेदयन् ।

[Ñ2 V1 D6 ता, B1 2 4 तु (for त) Ś1 D10 रावणस्य. D3 चचक्षिरे (for न्यवेदयन्) ]

73 Ñ1 illeg for 73 (cf v l 60) 73 = l 1–2 of 659* —For 73$^{ab}$, Ś1 Ñ2 V B D1–4 6 10 11 subst

1199* विहताशास्तु ता सर्वा हतवेगाः सुदुःखिता ।

[Ś1 D10 विकृतास्तास, B2 निहताशास, D2 4 विहतास्तास् Ś1 तदा, B4 D1–4 6 10 11 तत (for तु ता) ]

—G1 repeats 73$^{cd}$ after 1201* —$^{c}$) D5 T1 परिकृष्य, Cg as in text (for °क्षिप्य) D5 T3 G2 3 ता (for ता) Ś1 Ñ2 V B D1 2 4 6 10 11 परिवार्य तदा (V2 °तो) देवीं, D3 जानकीं परिवार्याथ, D7–9 Ct परिक्षिप्य समस्तास्ता —$^{d}$) B3 निद्रा च समुपागता

74 74 = l 3–4 of 659* —$^{a}$) D3 व्याज-, D8 चैवं (for चैव) Ś1 Ñ1 D1 2 4 10 11 तासु च प्रति (D1 2 4 11 व्यव) सुप्तासु, Ñ2 V B1 D6 तासु चाप्यथ (V2 B1 °व-) सुप्तासु, B2–4 तासु तासु च (B4 सर्वासु) सुप्तासु —$^{b}$) D6 भर्तुर् (for भर्तृ) —$^{c}$) Ś1 Ñ1 D2 10 11 विलेपे, B4 व्यलपत् (for विलप्य) D5 परिक्षिप्य चिरं दीना —$^{d}$) Ś1 Ñ1 D10 नि (D10 नि) श्वश्वास, B4 D1 2 4 11 निराशा च, D3 प्रशोचत, T2 प्ररुरोद, T3 G3 प्रचुक्रोश, Cg t as in text (for प्रशुशोच) D10 च, T3 स- (for सु-). Ñ2 V B1–3 D6 तदाशोचत (B3 °दा शोचति) दु खिता —After 74, D6 7–9 S ins

1200* तासां मध्यात्समुत्थाय त्रिजटा वाक्यमब्रवीत् ।
आत्मानं खादत क्षिप्रं न सीता भक्षयिष्यथ ।
जनकस्यात्मजा साध्वीं स्नुषा दशरथस्य च ।
स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षण ।
रक्षसा च विनाशाय भर्तुरस्या जयाय च ।
अलमस्मान्परित्रातु राघवाद्राक्षसीगणम् ।
अभियाचाम वैदेहीमेतद्धि मम रोचते ।
यस्या ह्येवंविधः स्वप्नो दु खिताया प्रदृश्यते ।
सा दु खैर्विविधैर्मुक्ता सुखमाप्नोत्यनुत्तमम् ।
प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा ।
ततः सा ह्रीमती बाला भर्तुर्विजयहर्षिता ।
अवोचद्यदि तत्तथ्य भवेयं शरणं हि व ।

[(l 1) M2 मन्ये B(cd) समुत्थाय —(l 2) T1 3 G3 [अ]नार्या (for क्षिप्र) D7 9 असितेक्षणां (for भक्षयिष्यथ) D5 8 T2 M न सीता विनशिष्यति (for the post half). —(l 3) D5 8 T2 M [आ]त्मजा (T2 सुता) माध्वी स्नुषा. M2 तु (for च) —(l 5) T2 G2 M1 राक्षमाना (for रक्षसां च) —(l. 6) D5 8 T2 M2 Cm अस्माद्, G1 M1 एषा, Ct as above (for अस्मान्) —(l 7) D5 अभिगच्छाम —(l 8) D6 7–9 T2 M1 यदि, G3 तस्या (for यस्या) M2 च (for प्र-) —(l. 9) T1 3 G2 3 M1 प्राप्नोति (for आप्नोति) —For l 10–12, cf. l 5–7 of 659* —(l 10) D9 reads in marg after प्रणिपात —After l 10, D7–9 T2 ins

1200(A)* अलमेषा परित्रातु राक्षस्यो महतो भयात् ।

—(l 12) G3 यत् (for तत्) ]

—Then G1 cont

1201* एवमुक्तस्त्रिजटया सहसा राक्षसीगण ।

—Thereafter G1 repeats 73$^{cd}$.

75 $^{a}$) Ś1 Ñ1 D1–4 10 [अ]पि (for [अ]हं) D11 तत्रापि सदृशीं दृष्ट्वा —$^{b}$) D10 11 सीतायां D2 दारुणीं —$^{cd}$) Ś1 D3 4 10 बुद्धयाहं, D8 G1 2 M विक्रान्तो (for विश्रान्तो) Ñ1 D1 2 11 चिंतयामि तु (D11 सु) बुद्धयाह, D5 T2 चिंतया समभिक्रान्तो (T2 °त) (for $^{c}$) T2 तु (for च) D3 विवृत, D11 निकृत (for निर्वृत) Ñ2 V B D6 कथं सभाषयाम्येना (D6 °ता) मिति चिंतापरोभव

76 B3 om. 76$^{ab}$ —$^{a}$) Ś1 Ñ B1 2 4 D1–6 10 11 M3 सभाषणार्थं D3 तु (for च) D5 जानक्यास् (hypm) (for मया) V2 सभाषण चासु मया (sic) —$^{b}$) Ś1 D3 10 सीतायास् B2 निश्चितो (for चिन्तितो) D5 चिंतितो विधिरुत्तम —$^{c}$) Ñ2 V B D6 इक्ष्वाकुराज, T1 3 G2 3 M3 इक्ष्वाकूणां हि Ś1 Ñ V B D2 3 6 10 11 -वंशस्य, D1 4 -वृद्धस्य, T2 -वशश्च (for -वशस्तु). —$^{d}$) Ś1 Ñ1 V1 D1–4 10 स्तवो रा (D3 ना) म-, D5 7–9 स्तुतो मम, D11 G1 ततो राम, T2 स्तुतो मनु- (for ततो मम) Ñ2 V2 B D6 कथा रामपुरस्कृता —After 76, D3 ins

1202* इक्ष्वाकुकुलविख्यातिं सम्प्रकीर्तयता मया ।
ततः सा वक्रकेशान्ता विश्वासमुपपादिता ।

77 $^{a}$) Ñ2 V B2 3 D1 4 6 च (for तु) V2 [आ]त्मगतां, D3 [अ]नुगता (for गदिता) D5 G2 वाणीं, D10

कस्त्वं केन कथं चेह प्राप्तो वानरपुंगव ।
का च रामेण ते प्रीतिस्तन्मे शंसितुमर्हसि ॥ ७८
तस्यास्तद्वचनं श्रुत्वा अहमप्यब्रुवं वचः ।
देवि रामस्य भर्तुस्ते सहायो भीमविक्रमः ।
सुग्रीवो नाम विक्रान्तो वानरेन्द्रो महाबलः ॥ ७९
तस्य मां विद्धि भृत्यं त्वं हनूमन्तमिहागतम् ।
भर्त्राहं प्रहितस्तुभ्यं रामेणाक्लिष्टकर्मणा ॥ ८०
इदं च पुरुषव्याघ्रः श्रीमान्दाशरथिः स्वयम् ।
अङ्गुलीयमभिज्ञानमदात्तुभ्यं यशस्विनि ॥ ८१
तदिच्छामि त्वयाज्ञप्तं देवि किं करवाण्यहम् ।
रामलक्ष्मणयोः पार्श्वं नयामि त्वां किमुत्तरम् ॥ ८२
एतच्छ्रुत्वा विदित्वा च सीता जनकनन्दिनी ।
आह रावणमुत्साद्य राघवो मां नयत्विति ॥ ८३
प्रणम्य शिरसा देवीमहमार्यामनिन्दिताम् ।
राघवस्य मनोह्लादमभिज्ञानमयाचिषम् ॥ ८४

G 5 56 106
B 5 58 102
L 5.56 83

वाचा —$^{b}$) M1 -गुण- (for गण-) Ñ1 D5 7–9 T2 G1 M1 भूपिता (for पूजिताम्) Ś1 D2 10 11 रामार्थचरि(D11 °रचि)ता शुभा, Ñ2 V B D1 3 4 राजर्षिचरिता शुभा(D4 °त शुभ) —M2 reads 77$^{cd}$ twice —$^{c}$) D3 अभ्यभापत Ś1 Ñ V B D1–4 6 10 11 सीता (for देवी) —$^{d}$) Ś1 Ñ B1–3 D3 6 10 11 बाष्पापिहित-, V1 सबाष्पावृत-, V2 D1 4 बाष्पोपहत, B4 बाष्पाकुलित, D2 बाष्पव्याकुल-.

78 $^{a}$) Ś1 Ñ V B D1–4 6 10 11 कस्य (for केन) Ñ1 कुतश् (for कथ) —$^{b}$) V2 सुप्तो (for प्राप्तो) D8 प्राप्तवान्वानरोत्तम —Ñ1 illeg for $^{cd}$ —$^{c}$) Ś1 Ñ2 V B D1–4 6 10 11 कथ, D8 M1 2 क च (for का च). D3 मे (for ते) —$^{d}$) D10 त्व (for मे) Ś1 V B D1 3 4 10 11 वक्तुमिह, Ñ2 D6 वक्तु त्वम्, D2 व्याख्यातुम् (for शंसितुम्) ❀ Cv तन्मे शंसितुमर्हसीत्यत पर तस्यास्तद्वचन श्रुत्वा अहमप्यब्रुव वच इत्येतदर्धं द्रष्टव्यम् ❀

79 Note hiatus between $^{a}$ and $^{b}$ —$^{ab}$) M3 (to avoid hiatus) ह्यहम् (for अहम्) D7 8 [अ]ब्रव D3 एतच्छ्रुत्वा वचो देव्या मया वाक्यमुदीरित —For 79$^{ab}$, Ś1 Ñ1 D1 2 4 10 11 subst

1203* तामवोचमह दीना शङ्किता शङ्कितो वच ।
[Ś1 Ñ1 अह देवीं, D4 च स दीना, D10 महादेवीं (for अह दीनां)],

while Ñ2 V B D6 subst

1204* एवमुक्तस्ततोऽह ता प्रत्यवोच कृताञ्जलि ।
[B2–4 [उ]वाच (for [अ]वोच)]

—Thereafter Ñ2 V B D6 cont

1205* विस्तरेण शुभैर्वाक्यै रामसुग्रीवसंगमम् ।

—$^{c}$) M1 श्रूयता देवि (for देवि रामस्य) —$^{d}$) Ñ2 V B D6 सखा भीमपराक्रम —$^{e}$) Ś1 Ñ V B D1–4 6 10 11 सुग्रीव इति विख्यातो

80 $^{a}$) D9 मा D8 च (for त्व) Ś1 Ñ V D3 6 सचिव विद्धि, B D1 2 4 10 11 विद्धि सचिव (for विद्धि भृत्य त्व) —$^{b}$) Ś1 D2 10 11 उपागत —$^{c}$) Ñ1 D7 8 G2 स-, D5 तु, D9 om (for [अ]ह) T3 G M प्रेपितस् (for प्रहितस्) Ś1 D1 2 4 10 11 भर्त्रा च प्रहि(D10 प्रेपि)तस्तेह, Ñ2 V B D6 भर्त्रा च प्रहितोह ते, D3 भर्त्रा सप्रेपित विद्धि ❀ Ct तुभ्य भर्त्रा तव भर्त्रा ❀

81 $^{a}$) Ñ1 D7–9 तु (for च) —$^{b}$) Ś1 Ñ V B D1–4 6 10 11 इक्ष्वाकुकुलनदन —$^{c}$) B अंगुरीयम् —$^{d}$) Ś1 Ñ1 D1 2 4 10 11 प्रादात्तव, D3 दत्तवास्ते (for अदात्तुभ्य) M1 मनस्विनि (for यश°) Ñ2 D6 प्रादात्तु(D6 °त्ते) वरवर्णिनि, V B दत्तवास्तव मैथिलि

82 D6 om 82–83$^{b}$ B3 om 82 Ñ1 illeg for $^{ab}$ —$^{a}$) Ś1 Ñ2 V B1 2 4 D1–4 10 11 इच्छेय (for इच्छामि) Ś1 त्वयाज्ञा वै, Ñ2 D1 4 तदाज्ञप्त, D10 तवाज्ञा तु, M1 त्वयाज्ञप्तुं —$^{b}$) D5 सीते (for देवि) B4 D3 T1 3 G3 ते (for [अ]हम्) —$^{c}$) Ś1 Ñ1 D2 3 10 11 मूलं, D1 4 नून, D5 पार्श्वे (for पार्श्वं) —After 82$^{c}$, D4 erroneously repeats 81$^{d}$–82$^{b}$ —D4 om 82$^{d}$ —$^{d}$) D9 त्वा (for त्वा) —For 82$^{cd}$, Ñ2 V B1 2 4 subst

1206* रामस्य पादमूल त्वा प्रापयामि यदीच्छसि ।
[Ñ2 V1 पादयोमूल (for °मूल त्वा)]

83 D6 om 83$^{ab}$ (cf v l 82) —$^{a}$) Ś1 Ñ1 D10 च हृष्टा सा, Ñ2 V B D2 3 11 च(B3 om [subm]) दृष्ट्वा च(Ñ2 सा), D1 4 प्रहृष्टा च(D1 om [subm]), D5 विदित्वा तु —Ñ1 illeg for $^{cd}$ —$^{c}$) Ś1 Ñ2 B3 D6 10 11 अह (for आह). Ñ2 D1 4 7 9 Ct उत्पाट्य, B4 आच्छिद्य, D5 आसाद्य (for उत्साद्य) —$^{d}$) D9 मा (for मा) Ś1 Ñ2 V B D1 2 4 6 10 11 भ्रातृभ्या गतु(V1 B1 2 नेतु, V2 B3 नीत)मुत्सहे, B4 भ्रातृभ्या नाहमुत्सहे (corrupt), D3 रामेणेच्छामि सगत

84 $^{a}$) D11 सहसा (for शिरसा) Ś1 Ñ1 D1 2 4 10 11 सीताम्, D3 वाचम् —$^{b}$) Ś1 Ñ1 D2 10 11 अहमाम, V2 B2 महाभागा(B2 °वीर्यां), B3 समाधाय, D1 4 अहमन्त्रा (sic) (for अहमार्याम्) Ś1 Ñ V B D1–4 6 10 11 यशस्विनीं —$^{c}$) D8 मनोह्लादि Ś1 Ñ V B D1 2 4 6 10 11 राघवाह्लादनकरम्(B3 °जनकम्), D3 रामाभिज्ञानजननम्

G. 5 56 106
B. 5 58 104
L 5 56. 84

एवमुक्त्वा वरारोहा मणिप्रवरमुत्तमम् ।
प्रायच्छत्परमोद्विग्ना वाचा मां संदिदेश ह ॥ ८५
ततस्तस्यै प्रणम्याहं राजपुत्र्यै समाहितः ।
प्रदक्षिणं परिक्रामामिहाभ्युद्गतमानसः ॥ ८६
उत्तरं पुनरेवाह निश्चित्य मनसा तदा ।
हनूमन्मम वृत्तान्तं वक्तुमर्हसि राघवे ॥ ८७
यथा श्रुत्वैव नचिरात्तावुभौ रामलक्ष्मणौ ।
सुग्रीवसहितौ वीरावुपेयातां तथा कुरु ॥ ८८
यद्यन्यथा भवेदेतद्द्वौ मासौ जीवितं मम ।
न मां द्रक्ष्यति काकुत्स्थो म्रिये साहमनाथवत् ॥ ८९
तच्छ्रुत्वा करुणं वाक्यं क्रोधो मामभ्यवर्तत ।
उत्तरं च मया दृष्टं कार्यशेषमनन्तरम् ॥ ९०
ततोऽवर्धत मे कायस्तदा पर्वतसंनिभः ।
युद्धकाङ्क्षी वनं तच्च विनाशयितुमारभे ॥ ९१
तद्भग्नं वनषण्डं तु भ्रान्तत्रस्तमृगद्विजम् ।
प्रतिबुद्धा निरीक्षन्ते राक्षस्यो विकृताननाः ॥ ९२

—[d]) D8 द्यमित्रानम् Ś1 Ñ1 D10 मयार्थिता, B2 मयेरित, D3 प्रयच्छ मे (for अयाचिषम्) —After 84, D3 6 7–9 T G1 3 M ins :

1207* अथ मामब्रवीत्सीता गृह्यतामयमुत्तम ।
मणिर्येन महाबाहू रामस्त्वां बहु मन्यते ।

[ (1 2) G3 महाबाहो (for °बाहू) D9 त्वां D3 मस्यते (for मन्यते) ]

85 G2 om 85[ab] —[a]) B2 4 D3 10 एवमुक्त्वा, D6 7–9 T G1 3 M इत्युक्त्वा तु (T2 मां) (for एवमुक्ता). —[b]) Ś1 Ñ1 D1 2 4 10 ममत (D1 2 °मेम) मणिम्, Ñ2 V B D6 परम मणिम्, D3 मा हेममणिम्, D11 सीता मे मणिम (for मणिप्रवरम्) T2 G1 M1 3 अद्भुत —[d]) B3 4 D1 4 वचो (for वाचा), D6 11 मा Ś1 Ñ1 V1 B2 3 D10 11 च (for ह) D3 सदिदेश च मामिद

86 B3 D7 om 86 —[ab]) Ś1 Ñ V B1 2 4 D1 2 4 6 10 11 तत प्रणम्य शिरसा वैदेहीं सु(Ñ2 V B1 2 4 D6 वै, D4 म)समाहि(D6 °स)त —[c]) Ś1 Ñ1 D10 उपावृत्य, Ñ2 V B1 2 4 D6 8 T2 G2 M1 2 परिक्रम्य (with hiatus), D1 2 4 11 उपावर्तं, T3 G3 °क्रामन, Cg as in text (for परिक्रामम्) ❀ Cg परिक्राम पर्यक्रामम्. ❀ —[d]) Ś1 Ñ1 D1 2 4 10 11 स्वकार्योद्यत, V1 B1 2 4 D6 इहाभ्युद्यत- (for इहाभ्युद्गत ).

87 [a]) T1 3 G2 3 उक्तोह (for उत्तर) M1 2 अपि (for एव) T1 3 G2 3 M3 [ह]ह (for [आ]ह) T2 उत्तर कर्म निश्चित्य —[b]) T2 सोह हि (for निश्चित्य) D6 तथा, T1 3 G2 3 M3 तया (for तदा) —For 87[ab], Ś1 Ñ V B D1–4 6 10 11 subst

1208* ततोऽहमार्यया वाक्य बाष्पगद्गदया गिरा ।

[ Ñ2 V B D6 उत्तर (for आर्यया) D11 वाक्य- (for बाष्प) D1 4 तथा D2 11 तदा (for गिरा) Ñ2 V B आर्यया बाष्पगद्ग, D6 आय बाष्पगद्ग (for the post half) ]
—After 87[ab], T2 ins.

1209* गन्तुमभ्युद्यत दृष्ट्वा ततो मामाह जानकी ।

—[c]) B1 मर्त- (for मत). —[d]) Ś1 Ñ V B D1.2.4 6.10 11 इममा (B3 इदमा, D2 इम त्वया, D11 सर्वमा) ख्यातुमर्हसि, D3 रामायाख्यातुमर्हसि

88 [a]) Ś1 Ñ1 D2 3 10 11 श्रुत्वा यथा च (D3 °थात्र); Ñ2 V B1 2 4 D6 यथा श्रुत्वा च, B3 यथा हि श्रुत्वा (for यथा श्रुत्वैव) D1 4 श्रुत्वा यथेहमचिरात —[b]) Ś1 Ñ V B D1–4 6 10 11 उभौ तौ (by transp ). —[d]) Ś1 Ñ1 D1 2. 4 10 11 उप(Ś1 Ñ1 D10 11 °पा)यातम्, Ñ2 V B1 D6 उपा(V2 B1 °प)याता.

89 [a]) Ñ2 V B2–4 D7 9 G1 यद्यन्यथा, D4 यद्यथा, D8 यद्यान्यथा Ś1 Ñ V B2–4 D1–4 6 10 11 कार्यं, B1 कर्म (for एतद्) —[b]) Ś1 Ñ V B D1–4 6 10 11 transp जीवितं and मम —[c]) B3 om न (subm ) Ś1 Ñ2 V B D1 2 4 6 10 11 पश्यति (for द्रक्ष्यति) —[d]) Ś1 Ñ1 D1 2 4 10 11 विनाशमित्र(D2 10 °मिह, D11 °मभि) शोचन्तीं, Ñ2 V B D6 विनङ्क्ष्यामीह(B4 °ति) शोचती, D3 वैवस्वतपथ गता

90 [b]) B1 शोको (for क्रोधो) Ś1 Ñ V B D2 6. 10 11 अभ्य(D10 °भ्य)वर्तत, D1 4 अभ्यदार(D4 °दीप)-यत्, D3 आविशत्तदा —[c]) D4 (*sup lin* after corr as in text) उत्तम (for उत्तर) D5 दिष्ट (for दृष्ट) —[d]) D8 अनुत्तम (for अनन्तरम्) D4 तत्र कार्यमशेषत

91 [a]) D6 ववर्ध (for ऽवर्धत) B2 कोपो (for कायस्). T1 3 G2 3 ततोह वातवेगेन —[b]) Ś1 Ñ V B D1–4 6 10 11 महा- (for तदा) —[cd]) Ś1 Ñ V B D1 2 4 6–11 T1 युद्धाकाङ्क्षी Ñ2 D6 तत्तु, B1 D5 7 9 11 T1 2 तस्य (for तच्च) Ś1 Ñ2 V B D6 10 उद्यत, Ñ1 D1 2 4 11 आश्रित (for आरभे). D3 रावणं द्रष्टुकामेन तच्च मे वनमुत्तमं

92 [a]) M1 तद्भग्न Ś1 Ñ1 V B1 D1 2 4–9 11 T1 G2 वनखण्ड, G1 वृक्षखण्ड (for वनषण्ड) Ñ2 V B D6 च (for तु) D3 भग्न विध्वस्तविटप —[b]) V भ्रान्तसर्प-, B3 4 T3 भ्रान्त त्रस्त (B4 तत्र) B1 -द्विप (sic) (for -द्विजम्). —[c]) Ñ2 V D5 7 9 T1 G1 2 प्रतिबुद्ध्य, B1 °बुद्धा, B3 °बुध्य, D2 प्रातर्बुद्धा, M2 °युद्धा (for प्रतिबुद्धा) Ś1 Ñ2 V B1–3 D1 2 4 6 10 11 निरैक्षत, D5 निरीक्ष्यो Ñ1 प्रति-

मां च दृष्ट्वा वने तस्मिन्समागम्य ततस्ततः ।
ताः समभ्यागताः क्षिप्रं रावणायाचचक्षिरे ॥ ९३
राजन्वनमिदं दुर्गं तव भग्नं दुरात्मना ।
वानरेण ह्यविज्ञाय तव वीर्यं महाबल ॥ ९४
दुर्बुद्धेस्तस्य राजेन्द्र तव विप्रियकारिणः ।
वधमाज्ञापय क्षिप्रं यथासौ विलयं व्रजेत् ॥ ९५
तच्छ्रुत्वा राक्षसेन्द्रेण विसृष्टा भृशदुर्जयाः ।
राक्षसाः किंकरा नाम रावणस्य मनोऽनुगाः ॥ ९६
तेषामशीतिसाहस्रं शूलमुद्गरपाणिनाम् ।
मया तस्मिन्वनोद्देशे परिघेण निषूदितम् ॥ ९७
तेषां तु हतशेषा ये ते गता लघुविक्रमाः ।
निहतं च मया सैन्यं रावणायाचचक्षिरे ॥ ९८
ततो मे बुद्धिरुत्पन्ना चैत्यप्रासादमाक्रमम् ॥ ९९
तत्रस्थान्राक्षसान्हत्वा शतं स्तम्भेन वै पुनः ।
ललामभूतो लङ्काया मया विध्वंसितो रुषा ॥ १००
ततः प्रहस्तस्य सुतं जम्बुमालिनमादिशत् ॥ १०१ G 5 56 123 B 5 58 119 L 5 56 100

---

बुद्धा निरैक्षत, B4 प्रतिबुध्यास्तदैक्षत (sic), D3 तेन शब्देन राक्षस्यो —$^{d}$) D3 विबुद्धा (for राक्षस्यो) Ś1 D1 2 4 10 11 भ्रातलोचना, Ñ1 भ्रातविक्रमा (for विकृतानना·)

93 $^{a}$) D3 मा (for मां) Ñ2 V B D2 6 परा(B4 °रि)क्रात (for वने तस्मिन्) —$^{b}$) D5 समागत्य Ś1 Ñ1 D1 2 4 10 11 परस्पर (for ततस्तत) —B3 om $93^{cd}$ —$^{c}$) Ś1 Ñ1 D1–4 10 11 लङ्काधिपतये क्षिप्र, Ñ2 V B1 2 4 D6 तासामन्यतमा क्षिप्र(B4 शीघ्र), T1 M1 ता समस्ता गता क्षिप्र —$^{d}$) B4 चचक्षिरे

94 $^{a}$) Ś1 Ñ1 D1 2 4 10 11 राजन्वनवर दिव्य, Ñ2 V B1–3 D3 6 राजस्तव(B2 3 D6 °जस्तरु, D3 °जन्नृप) वन दिव्य(V भग्नं, B1 सर्वं), B4 महाराज वन दिव्य —$^{b}$) V2 वानरेण, B1 दिव्य भग्न (for तव भग्न) —$^{cd}$) M1 [ह्य]व- ज्ञाय (for [ह्य]विज्ञाय) Ñ2 V B D6 चैत्य (V1 °त्य-) प्रासाद(B3 °त्यमासाद्य)मुख्यश्च कपिना विनिपातित —For $94^{cd}$, Ś1 Ñ1 D1–4 10 11 subst

1210* चैत्यप्राकारमुख्य च त्वदर्थं सुमहाबल ।

[D2 3 -प्रासाद (for -प्राकार-) D1 3 4 11 मुख्याश्च, D2 मुख्यश्च Ñ1 illeg for त्वदर्थं D3 वानरेण (for त्वदर्थं सु-) D1 4 11 रक्षिण सु(D4 स)महाबला, D2 दुर्धर्ष सुमहाबल (for the post half) ]

95 $^{a}$) B3 T2 दुर्बुद्धिस् Ñ2 V B D6 नृपते (for राजेन्द्र) Ś1 Ñ1 D1–4 10 11 कपेर्दुरात्मनस्तस्य, D5 7 9 M1 3 Ct तस्य(M1 °व) दुर्बुद्धिता(D5 M1 2 °तो) राजस् ❀ Cv दुर्बुद्धेस्तस्य राजेन्द्र इति च पाठ ❀ —$^{c}$) B2 वधमाज्ञापयामास (sic), B4 रणमाज्ञापयेच्छीघ्र —$^{d}$) Ś1 Ñ V B D1 2 4 6 10 11 स (for [अ]सौ) Ñ2 V1 निलय (sic), D5 7 9 न पुनर् (for विलय)

96 $^{a}$) B3 श्रुत्वा च राक्षसेन्द्रस्य —D6 om. (hapl) (reads 101–102 before $104^{cd}$) from $96^{b}$ up to the prior half of l 1 of 1214* —$^{b}$) D3 राक्षसा (for विसृष्टा) Ś1 दश, D2 भुज-, D5 7 9 बहु, D10 रण, G1 2 बल (for भृश-) —$^{c}$) D3 आदिष्टा (for राक्षसा) —$^{d}$) Ś1 Ñ V B1–3 D1 2 4 10 11 महौजस, B4 दुरात्मन (for मनोऽनुगा)

97 D6 om 97 (cf v l 96) —$^{a}$) Ñ V B D1–4 11 -साहस्रा —$^{b}$) B1 -पट्टिश (for मुद्गर-) Ś1 Ñ1 D1 10 11 -धारिणा, B3 D2 3 -धारिण, B1 D4(marg) -पाणय, M2 -पाणिना ❀ Cr m शूलमुद्गरपाणिनाम् । (Cm °नामित्यत्र) दीर्घाभाव आर्ष ❀ —M2 om (hapl) $97^{c}$–99 D4 om $97^{cd}$ —$^{c}$) Ś1 Ñ1 D1 10 ते मया तद्- (for मया तस्मिन्) —$^{d}$) Ś1 Ñ1 D1 2 10 11 निपातिता, Ñ2 V B D9 निषूदिता.

98 D6 M2 om 98 (cf v l 96 and 97 respy) T1 illeg for 98–99 —$^{ab}$) Ś1 Ñ V B3 4 D1 2 10 11 च (for तु) V B D7–9 T -शिष्टा (for -शेषा) B2 व्याहतशिष्टा Ś1 Ñ1 D1 2 10 11 तु, B4 च (for ये) D8 T3 M1 3 गत्वा (for गता) Ś1 Ñ V B D1 2 10 11 दशग्रीवाय राक्षसा, D3 ते गता रावणान्तिक (for $^{b}$) D4 (marg) हनूमता हतास्ते तु शेषा रावण विनिवेदतु (hypm) —$^{c}$) M3 महत्सैन्य —For $98^{cd}$, Ś1 Ñ V B D1–4 10 11 subst

1211* गत्वा न्यवेदयन्शीघ्रं हत सैन्य रणे मया ।

[D10 सर्वं (for शीघ्र) Ñ2 V B गत्वा निवेदयामासुर्, D3 निवेदयतस्तत्र क्षिप्र (hypm) (for the prior half) Ñ2 V1 B2–4 अकारणे(B4 °णात्), V2 B1 महारणे, D3 मया रणे (by transp) (for रणे मया).]

99 D6 M2 om 99 (cf. v l 96 and 97 respy) T1 illeg for 99 (cf v l 98) Ś1 D10 om 99–102 Ñ V B D1–4 11 om 99–100 —$^{b}$) D7–9 -प्रासादमुत्तम, T2 G2 M1 -प्रासादभजने

100 Ś1 Ñ V B D1–4 6 10 11 om 100 (cf v l 96 and 99) —$^{a}$) G1 ततस्तान्, M2 मया तान् (for तत्रस्थान्) —$^{b}$) T3 M1 शत- (for शत) —$^{c}$) G1 लङ्काया —$^{d}$) M3 स वै विध्वसितो मया

101 Ś1 D10 om 101 (cf v.l. 99) Ñ(Ñ1 om 102) V B(B4 om $102^{ab}$) D1.2 4 6 11 read 101–102 before $104^{cd}$ —$^{a}$) Ñ V B D1 2 4 6 11 प्रहस्तस्य सुत वीर —$^{b}$) Ñ1 B4 जाम्बमालिनम् —After 101, D3 5 7–9 S ins

G 5 56 123
B. 5 58 120
L. 5 56 101

तमहं बलसम्पन्नं राक्षसं रणकोविदम् ।
परिघेणातिघोरेण सूदयामि सहानुगम् ॥ १०२
तच्छ्रुत्वा राक्षसेन्द्रस्तु मन्त्रिपुत्रान्महाबलान् ।
पदातिबलसम्पन्नान्प्रेषयामास रावणः ।
परिघेणैव तान्सर्वान्नयामि यमसादनम् ॥ १०३

मन्त्रिपुत्रान्हताञ्श्रुत्वा समरे लघुविक्रमान् ।
पञ्च सेनाग्रगाञ्शूरान्प्रेषयामास रावणः ।
तानहं सहसैन्यान्वै सर्वानेवाभ्यसूदयम् ॥ १०४
ततः पुनर्दशग्रीवः पुत्रमक्षं महाबलम् ।
बहुभी राक्षसैः सार्धं प्रेषयामास संयुगे ॥ १०५

---

1212* राक्षसैर्बहुभि सार्धं घोररूपैर्भयानकै. ।

[ D3 घोर घोरपराक्रम ( for the post half ) ]

**102** Ś1 Ñ1 D10 om 102 ( for Ś1 D10, cf v l 99) B4 om $102^{ab}$. For sequence in Ñ2 V B D1 2 4 6 11, cf v l 101 —$^{a}$) Ñ2 V B1–3 D1 2 4 6 महा- ( for अह ). D11 ततस्तु बलसम्पन्नो —$^{c}$) Ñ2 V B1–3 D6 [ अ ]तिकायेन, B4 [ अ ]तिवेगेन, D3 सुघोरेण ( for [ अ ]तिघोरेण ) —$^{d}$ ) Ñ2 V B D6 सह( V तच्च, B1 4 त स- B2 महा )सैन्यमसूदय, D1 2 4 11 रणे सूदितवानह, D3 नीतवान्यमसादन. —After 102, Ñ2 V B D1 2 4 6 11 ins

1213* त कुमार हत श्रुत्वा समरेऽतुलविक्रमम् ।

[ Ñ2 D6 दृष्ट्वा ( for श्रुत्वा ) B2 3 D2 [ ऽ ]मर( B3 सम, D2 [ ऽ ] तुल्य )विक्रम, D1 4 बलशालिन ]

**103** After $103^{cd}$, G2 reads $104^{ef}$ —$^{f}$) M3 नयाम (sic) —For 103, Ś1 Ñ V B D1–4 6 10.11 subst

1214* तच्छ्रुत्वा राक्षसेन्द्रेण मन्त्रिपुत्रा महाबला ।
पदातिबलसम्पन्ना' समीप प्रेषिता मम ।
सर्वायस महाघोर प्रगृह्य परिघ तदा ।
सर्वांस्तान्सपरीवाराव्राक्षसान्हतवानहम् ।

[ D6 om up to the prior half of l 1 (cf. v l 96 ) —(l 1) Ñ2 V B1–3 D6 महारथा ( for °बला ). —(l 2) Ñ2 V1 B1–3 D6 पा( Ñ2 V1 प )दात , B4 प्रयाता ( for पदाति- ) V2 पदातय सुसपन्ना ( for the prior half ) D4 11 समीपे Ñ1 मया (sic) ( for मम ) D3 प्रेषिता मम सघश ( for the post half ) —(l. 3) V1 B D3 तमायस, D2 सर्वायम- B2 अह ( for महा- ) Ś1 V2 D4 10 सर्वा( V2 तमा )यसमय घोर, Ñ2 D6 वधाय तमह घोर ( for the prior half) D3 परिघोत्तम ( for परिघ तदा ) Ñ2 V B1–3 D6 आदाय परिघ पुन ( V दृढ, B2 3 तत ) ( for the post half ) —(l 4) D3 मम ( for सर्वांस् ) B2 परिवाराश्च, Ś1 Ñ1 D1–4 10 11 मा( D1–4 11 सू )दयामि रम सयुगे ( for the post half ) ]

**104** D10 om. 104–$113^{b}$ Ś1 om 104 —For $104^{ab}$, Ñ V B D1–4 6 11 subst

1215* स तान्विनिहताञ्श्रुत्वा दशग्रीव प्रतापवान् ।

[ Ñ1 D1–4 11 नानपि, D6 च तानि ( for तान्विनि- ) Ñ2 D6 दृष्ट्वा ( for श्रुत्वा ) ]

—Before $104^{cd}$, Ñ ( Ñ1 om 102) V B ( B4 om $102^{ab}$ ) D1 2 4 6 11 read 101–102 —$^{c}$) V1 सेनापतीन्, D8 सेनानुगान्, Ñ1 क्षिप्र, V2 युद्धे, D3 वीरान् ( for शूरान् ) —D11 om $104^{ef}$ G2 reads $104^{ef}$ after $103^{cd}$ —$^{ef}$) G3 परिघेण ( for सर्वानेव ). Ck [ अ ]भ्यसूदय. D3 तानप्यह तथा तत्र सबलान्समयोधय —For $104^{ef}$, Ñ V B D1 2 4 6 subst

1216* तानह सह सैन्येन सूदयित्वा महारथान् ।

[ Ñ D6 सर्व- ( for सह ) B2 3 -सैन्यास्तु ( for सैन्येन ) B4 राक्षसान्सर्वान् ( for सह सैन्येन ) Ñ1 B4 महाबलान् ( for °रथान् ). ]

—Then Ñ V B1 2 4 D1 2 4 6 cont , while D3 ins after 104

1217* युद्धार्थी तोरणोद्देश रक्षामि रणगर्वित ।

[ D3 6 युद्धार्थं Ñ1 D2 3 तोरणोद्देशे, Ñ2 B2 त रणोद्देश( Ñ2 °शे ), V2 च वनोद्देश, D6 रणोद्देश ( subm ). Ñ1 भक्ष्यामि, (sic), Ñ2 D6 पश्यामि, B4 गत्वा वै, D2 रक्षमा, D3 निविष्टो ( for रक्षामि ) ]

—Ñ1 D1 2.4 further cont , while D11 ins after $104^{cd}$

1218* प्रागेवान्यान्महाशूरान्सप्त मन्त्रिसुतानथ ।
प्रेषितास्तानह सर्वान्ससैन्यान्हतवान्रणे ।

[ (l 1) Ñ1 illeg up to शूरान् D11 च ( for [अ]न्यान् ). D2 -क्रूरान् ( for -शूरान् ) —(l 2) Ñ1 D11 अह शूरान्, D1 4 सह( D4 महा )सैन्यान् ( for अह सर्वान् ) Ñ1 सैन्यान्तु ( for ससैन्यान् ) D1 4 हतवान्रणमूर्धनि ( for the post. half) ]

**105** D10 om 105 ( cf v l. 104 ) For 105–107, Ś1 subst 1222* —$^{b}$) Ñ2 D6 दुरासद, V1 B2–4 महारथं ( for महाबलम् ) —$^{cd}$ ) Ñ1 D1–4 11 राक्षसैर्बहुभि' ( by transp ) —After $105^{c}$, G2 ins

1219* घोररूपैर्भयानकै ।
परिवायुधहस्तैस्तै

Ñ1 D1 4 11 वै पुन , D2 मद्वधे, D3 दुर्जय, M3 रावण ( for सयुगे ) Ñ2 V B D6 प्रेषयामास बहुभी राक्षसैरभिस( V1 B1–3 °रपरैर्, V2 B4 °बहुभिर् )वृत( B4 °तै ) —After 105, Ñ2 V B D6 read $108^{ab}$ ( including 1223* )

[ ] तु मन्दोदरीपुत्रं कुमारं रणपण्डितम् ।
[स]हसा खं समुत्क्रान्तं पादयोश्च गृहीतवान् ।
[च]र्मासिनं शतगुणं भ्रामयित्वा व्यपेषयम् ॥ १०६
[त]मक्षमागतं भग्नं निशम्य स दशाननः ।
[त]त इन्द्रजितं नाम द्वितीयं रावणः सुतम् ।
[व्]यादिदेश सुसंक्रुद्धो बलिनं युद्धदुर्मदम् ॥ १०७

तस्याप्यहं बलं सर्वं तं च राक्षसपुंगवम् ।
नष्टौजसं रणे कृत्वा परं हर्षमुपागमम् ॥ १०८
महता हि महाबाहुः प्रत्ययेन महाबलः ।
प्रेषितो रावणेनैष सह वीरैर्मदोत्कटैः ॥ १०९
ब्राह्मेणास्त्रेण स तु मां प्रबध्नाचातिवेगतः ।
रज्जुभिरभिबध्नन्ति ततो मां तत्र राक्षसाः ॥ ११०

G 5. 56 132
B. 5 58 131
L 5 56 111

106 D10 om 106 (cf v l 104) Ñ2 V B D3 6 om 106 For subst in Ś1, cf v l 105 and 107 For 106–107, Ñ1 D1 2 4 11 subst 1221* —ᵃ) D8 अह (for त तु) G1 3 M मडोदरी- G1 M1 -वत्स (for पुत्र) —ᶜ) D7–9 समुचंत (for समुत्क्रान्त) —ᵉ) T1 तमासीन, Cr as in text (for चर्मासिन) ❀ Cr चर्मासिनमित्यत्र नकारान्तत्वमार्षम् ❀ —ᶠ) D5 [अ]च्च पेषय, D8 पिपेष च, G3 व्यपेतय (sic) (for व्यपेषयम्)

107 D10 om 107 (cf v l 104) —ᵃ) T2 आत्मज (for आगत) —ᵇ) G1 तु (for स) —ᶜ) D7–9 चेद्रजित —ᵉ) D7 9 सुत क्रुद्धो —ᶠ) M1 युद्धदुर्जय —For 107, Ñ2 V B D3 (reads after 108) 6 subst

1220* ततो राजा दशग्रीव शूरमिन्द्रजित सुतम् ।
प्रेषयामास रक्षोभिर्बहुभि सुमहाबलम् ।

[(l 1) D3 पुत्रम् and रणे (for शूरम् and सुतम् respy). —D3 om l 2 —(l 2) V2 om (hapl) from the post half up to 109ᶜ B1 तन् (for सु-) ],
while Ñ1 D1 2 4 11 subst for 106 – 107

1221* तमह समरे हत्वा तोरणोत्तममास्थित ।
ततो द्वितीय तनय व्यादिदेश स रावण ।

[D11 आस्थित (for आस्थित) —(l 2) Ñ1 illeg for द्वितीय तनय ],
whereas Ś1 subst for 105 – 107

1222* ततोऽक्षमपि मे पुत्र प्राहिणोन्मदगर्वितम् ।
रावणो राक्षसेन्द्रोऽथ सोऽपि तत्र हतो मया ।
अथेन्द्रजिन्नामधेयो रावणस्याज्ञया पितु ।
मदन्तिकमुपायातो युद्धार्थं युद्धकोविद ।

108 D10 om 108 (cf v l 104) Ś1 om. 108–109 Ñ2 V B D6 read 108ᵃᵇ (including 1223*) after 105 —ᵃ) Ñ1 D5 7 9 T2 G1 M3 तच्च (for तस्य) —ᵇ) V2 M1 तच्च, B4 पच (sic), D1 4 तथा (for त च) —After 108ᵃᵇ, Ñ2 V B D6 ins, while D3 subst for 108ᶜᵈ

1223* सूदयित्वा रणे हृष्टो युद्धमेव व्यरोचयम् ।

[Ñ2 D6 रक्षो (for हृष्टो) Ñ2 B2 3 D6 [अ]प्य (Ñ2 D6 [अ]म्य)रोचय (for व्यरोचयम्) D3 तोरण त समास्थित (for the post half) ]

—V2 om 108ᶜᵈ (cf v l 107) —ᶜ) D5 च त (for रणे) Ñ V1 B D6 दृष्ट्वाह तमवष्टब्ध (V1 B3 D6 °ब्ध), D1 2 4 11 हत्वा (D2 11 दृष्ट्वा) स्वबलविष्टब्ध —ᵈ) Ñ2 B D4–7 9 11 T2 G1 M1 2 उपागत —After 108, D3 reads 1220*

109 Ś1 D10 om 109 (for D10, cf v l 104 and for Ś1, 108) V2 om 109ᵃᵇᶜ (cf v l 107) —ᵃ) Ñ1 D7–9 M3 [अ] पि, B3 4 [अ]ति-, D5 च (for हि) —ᵇ) B4 D5 6 प्रयत्नेन (for प्रत्ययेन) Ñ V1 B D1–4 6 11 महाबल —ᶜ) D7–9 प्रहितो (for प्रेषितो) D5 [इ]ह, G1 2 M [ए]व (for [ए]ष) Ñ V B D1–4 6 11 प्रेषयामास बहु (D3 रक्षो)भि . —ᵈ) V1 सर्व- (for सह) Ñ1 महो- (illeg ), Ñ2 V B1 2 4 D6 बलोत्कटै , D1 4 मदोत्कट, D7–9 °द्धत (for मदोत्कटै ) D3 बहुभि सह दुर्जय —After 109, Ñ V B D1–4 6 11 ins

1224* तस्याह रोषसंविग्नस्तत्सैन्यमवसादयम् ।

[Ñ1 V2 B2 3 -सविग्न D1 2 4 11 तस्यापि हि मया सर्वं (for the prior half) B3 अवमृद्य, B4 अवमादयन्, D1 2 4 11 अवसादित (for °मादयम्) B2 उच्चै सैन्यममृदय (for the post half) ],
whereas D3 ins.

1225* तस्याप्यह रणे सैन्य तत्सर्वं समसूदयम् ।,
while D5 7–9 S ins

1226* सोऽविषह्यं हि मा बुद्ध्वा स्वबल चावमर्दितम् ।

[D8 तु (for हि) D5.7–9 T2 G1 M1 2 स्वसैन्य (for स्वबल) D5 [अ]थ (for [अ]व-) ]

110 D10 om 110 (cf v l 104) —ᵃ) D1 2 4 7 9 11 ब्रह्मणोस्त्रेण Ñ1 V2 D1 2 4 11 मा बद्ध्वा, D3 स च मा, G1 सप्रास, G2 मा बध्नात्, M1 मतिमान् (for स तु मा) ❀ Cv ब्राह्मेणास्त्रेण तु महानिति च ❀ —ᵇ) D5 प्रबध्नन्, T1 2 G1 M1 3 प्राबध्नात्, G2 प्रयत्नात् (for प्रबध्नाच्) D5 T1 2 G M -वेगित, B(ed) -वेगिन (for वेगत) Ñ1 V2 D1.2 4 11 प्रतिजग्राह दुर्मति, D3 बबधाशु महाबल, D7–9 प्रबद्धा च निवेगित ❀ Ct प्रबद्धा प्रबद्धय ❀ —For 110ᵃᵇ, Ñ2 V1 B D6 subst.

1227* ब्राह्मेण मा स चास्त्रेण बबन्धाथ सुदुर्मति ।

G. 5 56 132
B. 5.58. 132
L. 5 56. 112

रावणस्य समीपं च गृहीत्वा मामुपानयन् ।
दृष्ट्वा संभाषितश्चाहं रावणेन दुरात्मना ॥ १११
पृष्टश्च लङ्कागमनं राक्षसानां च तद्वधम् ।
तत्सर्वं च मया तत्र सीतार्थमिति जल्पितम् ॥ ११२
अस्याहं दर्शनाकाङ्क्षी प्राप्तस्त्वद्भवनं विभो ।
मारुतस्यौरसः पुत्रो वानरो हनुमानहम् ॥ ११३
रामदूतं च मां विद्धि सुग्रीवसचिवं कपिम् ।
सोऽहं दौत्येन रामस्य त्वत्समीपमिहागतः ॥ ११४
शृणु चापि समादेशं यदहं प्रब्रवीमि ते ।
राक्षसेश हरीशस्त्वां वाक्यमाह समाहितम् ।
धर्मार्थकामसहितं हितं पथ्यमिवागतम् ॥ ११५
वसतो ऋश्यमूके मे पर्वते विपुलद्रुमे ।
राघवो रणविक्रान्तो मित्रत्वं समुपागतः ॥ ११६

[D6 मा (for मा) B1 ब्रह्मास्त्रेण मा मोपि, B4 माह्मग पाशजालेण (for the prior half) B1 च (for [श्र]थ) V1 B3 म (for तु-)]

—$^{cd}$) D5 रज्जुभिरभि-, D7 9 T2 M1 रज्जुभिश्चापि (D7 °ति-), D8 G1 M3 रज्जुभिश्चाभि- (G1 °व) M2 च बद्धमुक्ते, Cr as in text (for अभिरघ्नन्ति) Ñ1 D1 2 4 11 मम चा (Ñ1 D11 वा) बध्नता ज्ञात्वा (for $^{c}$) Ñ1 illeg for $^{d}$ D1 2 4 11 रज्जुभिरहर (D11 °र्हा) बबध्यत (D2 11 °ध्य वै), M2 राक्षसा रोपदुःसहा (for $^{d}$) Ñ2 V B D6 अवध्य स च मा ज्ञात्वा बद्ध्वाञ्जनुभि पुन (V2 मह), D3 अवध्यतां च मे ज्ञात्वा स रज्जुभिरबधत —For 110, Ś1 subst

1228* स चिरं युद्धमत्तो मे बलवानिन्द्रजित्तदा ।
अशक्नुवंश्च मा जेतुं ब्रह्मास्त्रं समुदीरयत् ।
तेन बद्धोऽहमस्त्रेण विमुक्तश्च स्वदैवात् ।

—Then cont

1229* द्रष्टुकामो दशग्रीवं बन्धमत्तोऽभवं तदा ।

111 D10 om 111 (cf v l 104) For 111–113$^{ab}$, Ś1 subst 1230* —$^{a}$) D1 4 समीपे. Ñ1 D1 2 4 11 तु (for च) —$^{b}$) D7–9 उपागमन (for °नयन्) Ñ1 D1 2 4 11 नीं (Ñ1 D1 4 त) तोह तेन रक्षसा, N2 V B1 2 4 D6 समानायानयद्बलात्, B3 मामानाय गतो बली —Ñ1 illeg for $^{c}$ —$^{cd}$) M1 दृष्ट (for दृष्ट्वा) Ñ2 V B D1 4 6 दृष्ट्वा (D1 4 नीत) पृष्टस्तदाह तु (for $^{c}$), D2 3 11 दृष्ट्वानीत तदा मा तु रावण स (D11 सु) दुरात्मवान

112 D10 om 112 (cf v l 104) V B om 112–113 For subst in Ś1, cf v l 111 and 113 —$^{a}$) Ñ D1–3 6 11 पप्रच्छ चैवागमन, D4 पप्रच्छेवात्र गमन —$^{b}$) Ñ D1 3 4 6 11 तथा, D2 तदा, D6 7–9 T2 M3 च त (for च तद्-) —$^{c}$) Ñ2 D2 11 सर्वं स च (D2 11 च स), D1 4 सर्वं च तन् (by transp) D3 तच तु म, D6 स सर्वं च (for तत्सर्वं च) Ñ1 D7–9 G1 रणे (for मया) ⊛ Cv 'तत्सर्वं च मया तत्र' इति च ⊛ —$^{d}$) D1 4 सीतार्थे Ñ1 D4 (with hiatus) 7–9 उपजल्पित, Ñ2 D1 2 6 11 प्रतिजल्पित (D2 °त), D3 6 T2 M2 अभिजल्पित (D3 °त)

113 D10 om. 113$^{ab}$ (cf v l 104) V B om 113 (cf v l. 112) —$^{a}$) Ñ1 D7 9 Ct तस्यास्तु, Ñ2 D1 2 4 6 11 सीताया, D3 तवाह, T G3 तस्याह, G1 अस्यास्तु, M1 अस्या स, Cv r m g as in text (for अस्याहं). ⊛ Cr अस्याहमित्यत्र अस्या इति पदच्छेदः । सन्निधार्थं ।; so also Cm g ⊛ —$^{b}$) D1 2 4 6 11 ते (for त्वद्-). D3 तत (for विभो) —For 111–113$^{ab}$, Ś1 subst

1230* नीतोऽहं राक्षसैर्वीरैः रावणस्यान्तिकं तदा ।
रावणोऽपि तदानीं स वाक्यं मामब्रवीदिदम् ।
कस्त्वं वानर देवो वा यक्षो नागोऽपि वासुर ।
केन वा प्रेषितस्तूर्णं कथयस्व समागत ।
ततोऽहमब्रुवं तस्य वाक्यं वाक्यविशारद ।  [5]

—$^{c}$) Ś1 Ñ D1 2 4 6 10 11 पवनस्य (for मारुतस्य)

114 $^{b}$) Ś1 Ñ D1 2 4 6 10 11 हरि, T2 प्रिय (for कपिम्) —For 114$^{ab}$, V B subst, while Ś1 Ñ D2–4 6 10 11 ins after 123$^{ab}$

1231* रामदूतोऽहमस्मीति तस्य चावेदितं मया ।

[D2 राज- (for राम-) Ś1 Ñ1 D2–4 10 11 पुनश्च (for तस्य) B4 वे गदित (for चावेदित)]

—V B om 114$^{c}$–123 —$^{c}$) Ś1 Ñ1 D10 दूतेन, D11 G2 M1 3 दूत्येन (for दौत्येन) Ñ2 D6 रामस्य दौत्येन (by transp). —$^{d}$) D7–9 T2 M3 सकाशम् (for समीपम्) Ś1 Ñ D1–4 6 10 11 उपागत —After 114, D5 T1 3 G M ins, while D7–9 T2 ins after 115$^{cd}$.

1232* सुग्रीवश्च महातेजा स त्वा कौशलमब्रवीत् ।

[D5 M2 सुग्रीवस्तु D7–9 महाभाग (D8 °ग) (for °तेजा) M1 2 स त्वां T1 3 G3 M3 कुशलम् (for कौशलम्)]

115 V B om 115 (cf v l 114) D1 4 om (hapl) 115–116 D5 T1 3 G M om 115$^{a-d}$ —$^{a}$) D8 शृणु चापि Ś1 D2 6 ममादेश (for समादेश) —$^{b}$) D2 यम् (for यद्) D6 तु (for प्र-) —$^{d}$) Ś1 D2 10 समाहित, D6 समीहित —After 115$^{cd}$, D7–9 T2 ins. 1232* Ñ2 D6 om 115$^{ef}$ —$^{e}$) M1 धर्मकामार्थं (by transp) G1 -[उ]पहित (for -सहित) —$^{f}$) D5 marg.s D8 तव, G2 इद (for हित) G3 तथ्यम् (for पथ्यम्) Ś1 Ñ1 D10 इवागता, D5 7–9 T1 3 G2 3 M3 उवाच ह (D5 T3 M3 च) (for इवागतम्)

116 V B D1 4 om 116 (cf. v l. 114 and

तेन मे कथितं राजन्भार्या मे रक्षसा हृता ।
तत्र साहाय्यहेतोर्मे समयं कर्तुमर्हसि ॥ ११७
वालिना हृतराज्येन सुग्रीवेण सह प्रभुः ।
चक्रेऽग्निसाक्षिकं सख्यं राघवः सहलक्ष्मणः ॥ ११८
तेन वालिनमुत्साद्य शरेणैकेन संयुगे ।
वानराणां महाराजः कृतः संप्लवतां प्रभुः ॥ ११९
तस्य साहाय्यमस्माभिः कार्यं सर्वात्मना त्विह ।
तेन प्रस्थापितस्तुभ्यं समीपमिह धर्मतः ॥ १२०
क्षिप्रमानीयतां सीता दीयतां राघवस्य च ।
यावन्न हरयो वीरा विधमन्ति बलं तव ॥ १२१
वानराणां प्रभावो हि न केन विदितः पुरा ।
देवतानां सकाशं च ये गच्छन्ति निमन्त्रिताः ॥ १२२
इति वानरराजस्त्वामाहेत्यभिहितो मया ।
मामैक्षत ततो रुष्टश्चक्षुषा प्रदहन्निव ॥ १२३
तेन वध्योऽहमाज्ञप्तो रक्षसा रौद्रकर्मणा ॥ १२४ G. 5 56. 134 B 5 58. 116 L. 5 56 125

115) —a) T1 3 G1 3 तु (for मे) —b) D9 G3 विपुले (for विपुल) —For 116ab, Ś1 Ñ D2 3 6 10 11 subst

1233* ऋष्यमूके निवसत पर्वते चित्रकानने ।

[Ñ1 illeg, D2 3 ऋश्यमूके (for ऋष्यमूके) Ñ2 D6 तु सहित (for निवसत) D3 विविधद्रुमे (for चित्रकानने) ]

—c) Ñ2 D6 रामस्य (for राघवो) —d) Ñ2 D2 6 मित्रत्वाय समागत, D3 मम मित्रत्वमागत

117 V B om 117 (cf v l 114) —a) Ś1 Ñ2 D2 3 च, D6 10 [तु]च (for मे) Ś1 D10 T1 3 G2 3 M3 राज्ञा (for राजन्) —After 117ab, T1 3 G2 3 M3 ins

1234* तत्र साहाय्यमस्माकं कार्यं सर्वात्मना त्वया ।
मया च कथित तस्मै वालिनश्च वध प्रति ।

—c) D5 T2 G3 M1 तस्य, D11 तस्मात् (for तत्र) Ś1 Ñ1 D10 हेतोस्त्वा, Ñ2 D2 6 हेतुस्त्व, D1 3 4 11 -हेतोरत्र, G3 हेतोर्हि —Ñ1 illeg for d —d) Ś1 D10 याचे परमदु खित, Ñ2 D6 वलैश्च बहुभि सह, D1 2 4 11 सेना त्वरय दु सहा, D3 सेना सत्वरयस्व मे.

118 V B om 118 (cf v l 114) D4 om from हृत in a up to सह in d —b) M3 महा (for सह) Ś1 N D1-3 6 10 11 मया च कारणेन स —c) Ś1 Ñ D2 10 कृत्वा, D6 कृत (for चक्रे) ❀ Cv r अग्निसाक्षिकमिति (Cr °क सख्यमिति) पाठ ❀ —d) D6 राघवेण महामना

119 V B om 119 (cf v l 114) —a) Ś1 Ñ D1-4 7-11 आहत्य, D5 M3 उत्पाट्य (for उत्साद्य). —c) Ś1 Ñ D1-4 10 अह राजा (for महाराज) —d) Ś1 Ñ D1-4 6 10 11 प्रभवता (D1 3 4 10 °ता) D5 8 T2 G1 2 M1 3 स प्लवता, T1 3 G3 M2 Cv प्रपतता (for सप्लवता) T2 G1 M1 वर

120 V B om 120 (cf v l 114) —b) Ñ1 D1 4 6 कृत (for कार्यं) Ś1 N D1-4 6 10 11 भृश (for त्विह) —c) Ñ1 तत (for तेन) —d) Ñ1 समास न्ना स धर्मवित् —For 120cd, Ś1 Ñ2 D1-4 6 10 11 subst

1235* तत प्रस्थापयत्तूर्णं त्वत्समीपे स धर्मवित् ।

[D2 तत्र (for तत) D1-4 6 11 प्रस्थापयन् D9 तभ्य (for तूर्णं) Ñ2 समीपे तु स, D1 4 समीपात् म, D2 3 6 समीप मां (D6 त) स, D11 माममात्रेण (for त्वत्समीपे स) ]

121 V B om 121 (cf v l 114) —b) Ś1 Ñ2 D1-6 10 11 T G2 3 M2 3 राघवाय D8 तु (for च) —c) D6 ने (sic) (for न) Ñ2 धीरा, D10 वीर (for वीरा) —d) D10 विधिमन (corrupt) (for विधमन्ति)

122 V B om 122 (cf v l 114) —a) D6 T2 G1 Ck tp राघवाणा, Cm t as in text (for वानराणा) Ś1 D10 स्वभावाश्च, Ñ1 D7 9 प्रभावोय, D1 2 4 6 स्वभावो हि, D11 T2 स्व (T2 प्र) भावोपि, Cm as in text (for प्रभावो हि) —b) Ś1 D2 10 न ते न, Ñ2 D1 4 6 11 न ते कि D3 कि ते न, T2 न ते सु (for न केन) Ś1 D10 विदिता· —cd) M1 तु (for च) Ś1 Ñ1 D9 8 10 अपि सन्तो D1 4 11 अपि सन्ता, D9 च सकाश च (hypm) (for सकाश च) D5 reads ये in marg Ś1 D1 [अ]निवारिता, Ñ1 D1 2 4 10 [अ]निमन्त्रिता, D11 [अ]भि° (for निमन्त्रिता) Ñ2 D6 देवा (Ñ2 देवता [hypm]) नामपि साहाय्य प्रयच्छन्त्यभिमन्त्रिता ❀ Cr वानराणामिति । एभिरानमन्त्रिता । युद्धसहायार्थमाहूता देवताना सकाश ये गच्छन्ति तेषा वानराणा प्रभाव पुरा केन न विदित । त्वया विज्ञात इति भाव । महाप्र वरन्नालब्ध प्रभावम् । न केवल मद्बलादेव प्रत्यपश्रिन्त्या किं न राघवबलान्पीत्याह-राघवाणामिति । इक्ष्वाकुम्गरप्रमुखानां रघूणामित्यर्थ । केन न विदित सर्वलोकप्रसिद्ध एवेत्यर्थ ❀

123 V B om 123 (cf v l 114) Ś1 Ñ2 D1 3 4 6 10 11 [अ]भिहित, D3 °मतो (for °हितो) —After 123ab, Ś1 Ñ D2-4 6 10 11 ins 1231* —c) M1 स मामैक्षत (for मामैक्षत) M3 क्रुद्धश् (for रुष्टश्) Ś1 Ñ1 D1-4 10 11 अवेक्षत स (D2 च) मा रुद्दश, Ñ2 D6 मामवेक्षत स (D6 स) क्रुद्धश् —d) Ś1 Ñ D1-4 6 10 11 निर्दहन्

124 ab) Ñ2 D6 मम (sic), B2 3 [स]मम् (for ऽहम्). D5 क्रूर, D9 रुद्र (for रौद्र-) Ś1 Ñ V B D1 2 4 6 10 11 रावणेन दुरात्मना (for b) D1 वध्यतामेष दुर्बुद्धिरिति चापि समादिशत् —After 124, Ś1 Ñ1 D1 2 3 10 11 ins

5.56 135 5 58 147 5 56 126 ततो विभीषणो नाम तस्य भ्राता महामतिः ।
तेन राक्षसराजोऽसौ याचितो मम कारणात् ॥ १२५
दूतवध्या न दृष्टा हि राजशास्त्रेषु राक्षस ।
दूतेन वेदितव्यं च यथार्थं हितवादिना ॥ १२६
सुमहत्यपराधेऽपि दूतस्यातुलविक्रम ।
विरूपकरणं दृष्टं न वधोऽस्तीह शास्त्रतः ॥ १२७

विभीषणेनैवमुक्तो रावणः संदिदेश तान् ।
राक्षसानेतदेवाद्य लाङ्गूलं दह्यतामिति ॥ १२८
ततस्तस्य वचः श्रुत्वा मम पुच्छं समन्ततः ।
वेष्टितं शणवल्कैश्च पटैः कार्पासकैस्तथा ॥ १२९
राक्षसाः सिद्धसंनाहास्ततस्ते चण्डविक्रमाः ।
तदादीप्यन्त मे पुच्छं हनन्तः काष्ठमुष्टिभिः ॥ १३०

1236* राक्षसाधिपतिं ज्ञात्वा घातने मम निश्चितम् ।

[ Ñ1 राक्षस सैन्यविज्ञाय (sic), D1 2 4 11 राक्षसेन (D2 11 °माना) पर (D2 मत) ज्ञात्वा (for the prior half). D1 4 पापेन (for घातने) Ñ1 D1 2 4 11 निश्चय ],

while Ñ2 V B D6 ins

1237* रावणस्य परिज्ञाय पापस्य वधनिश्चयम् ।

[ D6 परिग्राह्य (for °ज्ञाय) Ñ2 V2 -निश्चित, B1 -निश्चय (sic), B3 -नि ० (for निश्चयम्) ],

whereas D5 7–9 S ins

1238* मत्प्रभावमविज्ञाय रावणेन दुरात्मना ।

125 $^a$) Ś1 Ñ V B D1 2 4 6 10.11 वि (B2–4 वि) भीषणो नाम तनस् —$^b$) Ñ1 समाहित, T2 महाद्युति (for महामति) D3 भ्राता तस्य सुधार्मिक —$^c$) Ñ2 V1 B1 2 4 D7 6 M2 -राज स, V2 T3 G3 -राजस्य, B3 D5 7–9 T1 M1 -राजश्च (M1 °स्तु), T2 -राजो वै (for -राजोऽसौ) —$^d$) Ñ1 D1 4 वारितो (for याचितो) —After 125, D5 7–9 S ins

1239* नैव राक्षसशार्दूल त्यज्यतामेष निश्चय ।
राजशास्त्रव्यपेतो हि मार्ग संसेव्यते त्वया ।

[ (l 1) M1 मा, Cg t as above (for न) D5 राक्षसराजेंद्र —(l 2) D5 राजन् (for राज-) G1 [ऽ]य (for हि) D5 7–9 सल (D8 °र) द्यते, G1 सप्राप्यते (for संसेव्यते) ]

126 B2 om 126–127$^b$ —$^a$) Ñ2 V2 D2 3 10 दूता वध्या Ñ2 V B1 3 D3 6 विहिता (for दृष्टा हि) B4 दूता त्ववध्या विहिता —$^b$) D11 राजन्शास्त्रेषु, G3 ‥स्त्रेषु Ś1 Ñ1 D1–4 10 11 रावण (for राक्षस) Ñ2 V B1 3 4 D6 राजन्निति वचो (B1 च सो) ब्रवीत् —V B1 3 4 om 126$^c$–127$^b$ —$^c$) G2 हि (for च) Ś1 Ñ D1–4 6 10 11 भवितव्य हि (for वेदितव्य च). —$^d$) Ś1 Ñ D1–4 6 7 9 10 G1 2 Ck यथाभि-, D5 8 T3 G3 M1 यथार्हं (for यथार्थं) D11 यथा हि तव वाचिना (sic)

127 V B om 127$^{ab}$ (cf v l 126). —$^a$) D8 च, M2 वा (for ऽपि) —$^b$) D8 G1 2 [अ]मित (for [अ]तुल-) —$^c$) Ś1 निरूपकरण B1 चास्य (for दृष्टं) —$^d$) T1 3 G3 transp न and वधो D7–9 T1 2 G3 हि, M3 [इ]ति (for [इ]ह). Ś1 Ñ1 D1–4 10 11 ताडन वा (D2 4 11 चा) पि (for न वधोऽस्तीह). Ñ2 V B1–3 D6 ताडन च निशाचर (V1 °तन), B4 आननं च निपातन

128 $^b$) M1 2 ह (for तान्) Ś1 Ñ1 D1–4 10.11 रावणो राक्षसेश्वर (D1 4 °सत्तम) —$^c$) D5 8 M [अ]स्य (for [अ]द्य) Ś1 Ñ1 D10 11 आदिदेशाथ (D11 °शु), D1–4 आदिदेशास्य, G1 एवमद्यैव (for एतदेवाद्य) T1 3 G2 3 राक्षसा नूनमासाद्य —$^d$) Ś1 Ñ1 D2 10 लागूलो —For 128, Ñ2 V B D6 subst

1240* तत स रावण क्रुद्धो राक्षसांस्तान्महाबल ।
अब्रवीदस्य लाङ्गूल क्षिप्रमादीप्यतामिति ।

[ (l 1) Ñ2 D6 च (for स). B1 4 महाबलान् (for °बल ). ]

129 $^a$) G3 damaged for स्तस्य व M2 ते तस्य वचन श्रुत्वा —$^b$) Ś1 Ñ1 D2 लागूल ते, D1 4 10 11 लागूले (D11 °ल) मे (for मम पुच्छ) —$^c$) Ś1 D1 4 10 वेष्टयन्शणवल्कैश्च (D1 4 °पट्टैस्तु), Ñ2 V1 B3 अवेष्टयन्शणैर्वल्कै (B3 °र्वद्ध), V2 B1 2 4 D3 6 अ (V2 D3 आ) वेष्टयन्शणव (D3 °णैर्व) ल्कै. (B4 °र्णपट्टैर्, D6 °णर्वस्त्रै), D2 11 वेष्टयन्सम (D2 °यन्छन्न) वल्कैश्च —$^d$) Ñ V B1–3 D1 6 7 9 T2 पट्ट, B4 वस्त्रै (for पटै) V1 B1 2 4 D1 7–9 10 11 T2 G1 M1.2 कार्पासिकैस् V1 D3 अपि (for तथा). T1 3 G2 3 M3 जीर्णैः कार्पासजै (G2 °सिकै) पटै

130 Ñ2 V B D6 om 130$^{ab}$ —$^a$) Ś1 Ñ1 D1–4. 10 11 बद्ध- (for सिद्ध-) T2 सकलपास्, Cv r as in text (for -संनाहास्) —After 130$^{ab}$, Ś1 Ñ1 D1–4 10 11 ins

1241* लाङ्गूलमग्निसंयोगै संस्कर्तुमभिसंस्थिता ।
क्रुद्धा किलकिलायन्तस्ते शस्त्रवरपाणय ।

[ (l 1) D11 अभित स्थिता (for अभिसंस्थिता) —(l 2) D11 किलकिलायते ]

—$^c$) D8 T1 3 G2 3 Cv r तदाऽहत, M3 तदाऽऽहत —$^d$) D8 T1 3 G2 3 M3 Cr निघ्नत, G1 M1 हनद्भि, Cv t as in text (for हनन्त ) ❀ Cv r तदाऽहन्त मे पुच्छ हन (Cr निघ्न) न्त काष्ठमुष्टिभिरिति पाठ ।, Ct हनन्त, मामिति शेष । आर्षमेतत् ❀ —For 130$^{cd}$, Ś1 Ñ V B D1–4 6. 10 11 subst

बद्धस्य बहुभिः पाशैर्यन्त्रितस्य च राक्षसैः ।
न मे पीडा भवेत्काचिद्दिदृक्षोर्नगरीं दिवा ॥ १३१
ततस्ते राक्षसाः शूरा बद्धं मामग्निसंवृतम् ।
अघोषयन्राजमार्गे नगरद्वारमागताः ॥ १३२
ततोऽहं सुमहद्रूपं संक्षिप्य पुनरात्मनः ।
विमोचयित्वा तं बन्धं प्रकृतिस्थः स्थितः पुनः ॥ १३३

आयसं परिघं गृह्य तानि रक्षांस्यसूदयम् ।
ततस्तन्नगरद्वारं वेगेनाप्लुतवानहम् ॥ १३४
पुच्छेन च प्रदीप्तेन तां पुरीं साट्टगोपुराम् ।
दहाम्यहमसंभ्रान्तो युगान्ताग्निरिव प्रजाः ॥ १३५
दग्ध्वा लङ्कां पुनश्चैव शङ्का मामभ्यवर्तत ।
दहता च मया लङ्कां दग्धा सीता न संशयः ॥ १३६

G. 5 56 143
B 5 58 160
L 5 56 138

---

1242* प्रदीपयन्त मे पुच्छ स्नेहाक्त दुष्टचेतस ।

[ Ñ2 V B D3 6 आ( B2 4 D6 अ )दीपयश्च, D1 4 11 आदीपयत B1 पुच्छ मे ( by transp ), D3 लागूल ( for मे पुच्छ ) D1 4 हृष्ट ( for दुष्ट- ) V1 -चेतना ]

131 Ñ2 V B D6 om 131 – $132^{b}$ —D5 T1 3 G M om $131^{cd}$ —$^{c}$) Ś1 D3 8 10 [ अ ]भवत् ( for भवेत् ) —$^{d}$) D10 दिधक्षोर् ( for दिदृक्षोर् )

132 Ñ2 V B D6 om $132^{ab}$ ( cf v l 131 ) —$^{a}$) G3 damaged for राक्षसा शू Ñ1 D1 3 4 क्रूरा ( for शूरा ) —$^{b}$) G1 आच्छाद्य ( for मामग्नि- ) S1 Ñ1 D1–4 10 T3 G1 3 संस्कृत, D9 सभृत ( for संवृतम् ) T2 बद्धमादाय मा तदा —$^{cd}$) Ñ2 V B D6 घोपमाणास्ततस्तेथ ( for $^{c}$) T3 G3 आस्थिता, Cg as in text ( for आगता ) Ś1 Ñ1 D1–4 10 11 घोपयतो महाकाया नगरीद्वारमागमन्( D3 °माययु )

133 $^{b}$) B4 प्रक्षिप्य, D6 निक्षिप्य ( for संक्षिप्य ) —D4 om $133^{cd}$ —$^{d}$) D8 M2 पुन स्थित ( by transp ), T° पुनस्तत ( for स्थित पुन ) G1 प्रकृति संस्थित पुन —For $133^{cd}$, Ś1 Ñ V B D1–3 6 10 11 subst

1243* बन्धान्सर्वान्समाक्षिप्य प्रकृतिस्थ पुन स्थित ।

[ B4 D3 सर्वान्बधान् ( by transp ) Ś1 Ñ1 B1 समुत्क्षिप्य ( for समाक्षिप्य ) Ś1 Ñ2 B3 D10 पुन पुन, D3 [ ऽ ]भव पुन ( for पुन स्थित ) ]

134 $^{a}$) D11 पट्टिस ( for परिघ ) Ś1 Ñ1 D1 2 10 11 प्राप्य ( for गृह्य ) Ñ2 V B1–3 D6 आदाय परिघ चापि —$^{b}$) Ś1 Ñ1 D1 2 10 11 नगर( D11 °र्या )द्वार्येह पुन, Ñ2 V1 D6 पुर( V1 नग [ sic ] )द्वारमुपस्थित ( D6 °पागत ), V2 B1–3 नगरद्वार्येव( V2 °र्युप )स्थित, D3 नगरद्वारमास्थितान् —$^{c}$) D8 G2 तु ( for तन् ) —$^{d}$) D5 7 प्लुतवान् —For 134, B4 D4 subst, while Ś1 Ñ V B1–3 D1–3 6 10 11 subst for $134^{cd}$

1244* राक्षसास्तान्समुत्पत्य सूदयामि स्म सर्वत ।

[ Ś1 Ñ1 D10 समाहत्य, D1 4 समाप्लुत्य, D3 समुत्कृत्य ( for समुत्पत्य ) V1 D6 स्म सर्वश, B1 समतत ( for स्म सर्वत ) D3 हतवानस्मि सर्वत ( for the post half ) ]

135 $^{a}$) D8 [ ए ]व, G1 हि ( for च ) Ś1 Ñ V B2–4 D1–4 6 10 11 लागूलेन ( for पुच्छेन च ) B1 लागूलदीप्तेन . ता —$^{b}$) D3 नगरीं ( for ता पुरीं ) D1 4 साद्रि- ( for साट्ट- ) Ś1 Ñ V B2–4 D1–4 6 10 T3 G2 3 -तोरणा ( for -गोपुराम् ) B1 D8 11 पुरीं साट्टालतोरणा( D8 °गोपुरा ) —D1 4 om $135^{c}$–$136^{b}$ Ñ1 illeg for $^{cd}$ —$^{c}$) D8 सुसभ्रातो ( for असभ्रान्तो ) Ś1 D10 दग्धवानहमभ्रातो, Ñ2 B2 D6 दग्धवानस्म्यसभ्रातो, V B1 3 दग्धवानस्मि सभ्रातो, T1 3 G1 3 M1 2 दहामि स्म सुसभ्रातो ❀ Cr. दहामि स्म सुसभ्रान्त इति पाठ ❀ —$^{d}$) B3 युगातेग्निर् D8 प्रजा, D11 [ उ ]स्थित ( for प्रजा )

136 D1 4 om $136^{ab}$ ( cf v l 135 ) —$^{ab}$) Ñ1 ततो बुद्ध्वा, B4 तत पश्चाच् ( for पुनश्चैव ) Ñ1 शका मे समजायत, Ñ2 D6 शकमानोभ्यवर्तय, B4 शकामालव्य वर्तते ( for $^{b}$) Ś1 D10 लका दग्धवतश्चव शका मे समजायत, D2 दग्ध्वा लका तत पश्चाच्छोको मेभ्यवपद्यत, D3 दग्ध्वा च नगरीं लका पुन शका ममाभवत्, D11 दग्धा लका तत पश्चाच्छका मेभ्यवपद्यत —For $136^{ab}$, T G2 3 subst, while D5 7–9 G1 M subst l 2 only for $136^{ab}$

1245* ततो मे ह्यभवत्त्रासो लङ्का दग्ध्वा समीक्ष्य तु ।
विनष्टा जानकी व्यक्त न ह्यदग्ध प्रदृश्यते ।

[ ( l 1 ) T1 2 G2 दग्वा ( for दग्ध्वा ) T2 च ( for तु ) —( l 2 ) M2 [ अ ]दग्ध ( sic ) ( for [ अ ]दग्ध ) ]

—Thereafter all cont

1246* लङ्काया कश्चिदुद्देश सर्वा भस्मीकृता पुरी ।
[ D5 T1 M3 लकाया ]

—$^{d}$) T1 3 G3 न सीता परिरक्षिता —For $136^{cd}$, Ś1 Ñ V B D1–4 6 10 11 subst

1247* दग्धा सीता न सदेहो दुष्कृत खलु मे कृतम् ।

[ D1 4 दीप्ता ( for दग्धा ) V D2 3.6 11 दु कृत, D1 4 दुष्कर ( for दुष्कृत ) ]

—After 136, D5 7–9 S ins

1248* रामस्य च महत्कार्यं मयेद वितथीकृतम् ।
इति शोकसमाविष्टश्चिन्तामहमुपागत ।

[ G1 om l 1 —( l 1 ) D5 G2 M1 3 हि, D8 [ इ ]व, M2 [ ए ]व ( for च ) D8 मया कार्य D8 भूयो वा, M2 मयैव ( for मयेद ) D7 9 विफलीकृत. —( l 2 ) D8 G2 M2 उपागम ( for उपागत ) ]

G 5 56 144 B 5 58 161 L 5 56 139

अथाहं वाचमश्रौषं चारणानां शुभाक्षराम् ।
जानकी न च दग्धेति विस्मयोदन्तभाषिणाम् ॥ १३७
ततो मे बुद्धिरुत्पन्ना श्रुत्वा तामद्भुतां गिरम् ।
पुनर्दृष्टा च वैदेही विसृष्टश्च तया पुनः ॥ १३८
राघवस्य प्रभावेन भवतां चैव तेजसा ।
सुग्रीवस्य च कार्यार्थं मया सर्वमनुष्ठितम् ॥ १३९
एतत्सर्वं मया तत्र यथावदुपपादितम् ।
अत्र यन्न कृतं शेषं तत्सर्वं क्रियतामिति ॥ १४०

इति श्रीरामायणे सुन्दरकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

---

137 $^{a}$) D3 7 9 ततो, T2 तदा, I3 G3 तथा (for अथ) Ś1 Ñ1 D1 2 4 10 11 ख(Ś1 खे)गताना ततो वाक्य, Ñ2 V B D6 खग(B2 3 आदया)तानामथो वाक्य —$^{b}$) Ś1 Ñ2 V B D1 2 4 6 10 11 मया श्रुत, Ñ1 समाश्रुत, D3 खचारिणा, G M1 शुभाक्षर, M2 महात्मना (for शुभाक्षराम्) —After 137$^{ab}$, Ś1 Ñ1 D1–4 10 11 ins

1249* दग्धेय नगरी लङ्का साट्टप्राकारतोरणा ।

[D4 साद्रि- (for साट्ट-) ]

—B3 om 137$^{c}$–140$^{b}$ —$^{cd}$) Ś1 D1 4 10 तु न, D2 11 न तु, M1 च न (by transp ) (for न च) D2 3 G1 2 M1 Cr विस्मयोदात्त-(D2 °यौदार्य ), T1 3 G3 °द्भुत, Cm$p$ k t as in text (for °दन्त ) D5 M1 -भाषिता Ś1 Ñ1 D10 विस्मयादिति भाषितं(Ñ1 °षिणा, D10 °षता), D11 विस्मयो याति भीषण (sic) (for $^{d}$) Ñ2 V B1 2 4 D6 सर्वा च(B4 सा सर्वा) नगरी दग्धा सीता च(B2 सा सीता) परिरक्षिता ❀ Cv r m विस्मयोदन्तभाषिणा(Cr °दात्तभाषिणा) विस्मयवृत्तान्तविषयव्यवहाराम्( Cv °न्तव्यवहिताम् ? ), Cr °न्तविषयव्यवहाराणाम् ) ।, Cg विस्मयोदन्तभाषिता भाषितविस्मयोदन्तम्, उक्ताद्भुतवार्तामित्यर्थः । विस्मयवृत्तान्तव्यवहृतामिति वा ।, Ck विस्मयोदन्तो विस्मयवृत्तान्त ।, Ct विस्मयकारी य उदन्तो वृत्तान्तस्तद्भाषिणा त वदनाम् ❀

138 V2 B om 138 (for B3, cf v l 137) —$^{a}$) Ś1 Ñ1 V1 D1 4 6 10 हर्ष उत्पन्न, Ñ2 D2 11 हर्षमुत्पन्न (sic) (for बुद्धिरुत्पन्ना ). —$^{b}$) D1 गिरा (for गिरम्) Ñ2 D6 श्रुत्वा चारणभाषित —After 138$^{ab}$, D5 7–9 S ins

1250* अदग्धा जानकीत्येव निमित्तैश्चोपलक्षिता ।
दीप्यमाने तु लाङ्गूले न मा दहति पावक ।
हृदय च प्रहृष्ट मे वाता सुरभिगन्धिन ।
तैर्निमित्तैश्च दृष्टार्थैः कारणैश्च महागुणैः ।
ऋषिवाक्यैश्च सिद्धार्थैरभव हृष्टमानस । [5]

[(l 1) G1 damaged up to जा G1 [ए]षा, M [ए]व (for [ए]व) D7 9 T2 G1 M1 2 Ct लक्षित( T2 °तं ) —(l 2) T2 च (for तु) G1 मे (for मा) —(l 5) D7 9 T1 दृष्टार्थैर् (for सिद्धार्थैर्) D5 प्रभव (for अभव) ]

—$^{c}$) D6 T2 G1 M2 3 पुनर्दृष्टा च वैदेहीं —For 138$^{cd}$, Ś1 Ñ V1 D1–4 6 10 11 subst

1251* गत्वा च ता पुनर्दृष्ट्वा अभिवाद्याहमागत ।

[Note hiatus between the two halves Ś1 गत्वा तां च (by transp.), Ñ2 D6 ता च सीता (for गत्वा च ता). D3 पृष्ट्वा चानामय पुन (for the post half) ]

—Then D3 cont

1252* कार्यमात्ययिक ज्ञात्वा त्वरितोऽहमुपागत ।

—After 138, D5 7–9 S ins

1253* तत पर्वतमासाद्य तत्रारिष्टमहं पुन ।
प्रतिप्लवनमारेभे युष्मद्दर्शनकाङ्क्षया ।
तत पवनचन्द्रार्कसिद्धगन्धर्वसेवितम् ।
पन्थानमहमाक्रम्य भवतो दृष्टवानिह ।

[D8 transp l 1 and 2 —(l 1) T3 [आ]दिष्टम् (for [अ]रिष्टम्) G1 अरिंदम (for अहं पुन ) —(l 3) D7 9 श्रमन (for पवन ) —(l 4) D5 T2 G1 अह (for इह) ❀ Cv अहमाक्रम्याह दृष्टवानिति क्रियाद्वयेनाहशब्दद्वयस्य सबन्ध । एकेनैव वाक्यपूरणे सति, उक्ताश्च प्रयुज्यते लोके । भवतो दृष्टवानिहेति सम्यक् ।, so also Cr, Cm अह पन्थानमाक्रम्य भवतो दृष्टवानिहेति पाठ । न यथाऽहशब्दपानरुक्त्यात् ❀ ]

139 B3 om 139 (cf v l. 137) —$^{a}$) D5 7–9 G2 प्रसादेन (for प्रभावेन ) —$^{b}$) M1 चापि (for चैव ) —For 139$^{ab}$, Ś1 Ñ V B1 2 4 D1–4 6 10( Ś1 D10 repeat after 1255*) 11 subst

1254* एतद्रामप्रभावेन वैदेह्याश्च तपोबलात् ।

[Ś1 Ñ V1 B2 4 D2 10( Ś1 D10 both times) -प्रभावेण, D3 -प्रसादेन Ś1 D10( both second time) तपसो, D4 च ततो (for च तपो ) ]

—$^{c}$) Ś1 Ñ1 D1 2 4 10 11 च प्रीत्यर्थं, Ñ2 V B1 2 4 D3 6 प्रियार्थं च(D3 तु) (for च कार्यार्थं) ❀ Cg कार्यार्थं कार्यवस्तु । क्लीबत्वमार्षम् ❀ —$^{d}$) B4 प्रतिष्ठित (for अनुष्ठितम्) D6 मयेदं समनुष्ठित

140 B3 om 140$^{ab}$ (cf v l 137) —$^{a}$) D2 10 यथा (for मया) Ś1 Ñ V B1 2 4 D1 2 4 6 10 तत्त्व, D3 तथ्य (for तत्र) —$^{b}$) Ñ2 B1 2 4 D6 उपवर्णित, V अनुवर्णि( V2 °र्ति,त (for उपपादितम्) Ś1 N1 D1–4 10 11

